ईश्वर उवाच

शृणु देवि प्रवक्ष्यामि यद् गुह्यं परमाद्भुतम् ॥ २६ ॥
न वक्तव्यं त्वया किंचिज्जनेषु कथितं मया ।
अपृथक्त्वशरीरत्वाद् वक्ष्यामि तव सुव्रते ॥ २७ ॥
यदुक्तं ते मया तन्त्रं त्रिविधं त्रिगुणात्मकम् ।
तामसं कुत्र संप्रोक्तं राजसं चापि कुत्रचित् ॥ २८ ॥
सात्त्विकं तत्र कुत्रापि धीमांस्तस्मात् तदुद्धरेत् ।
तामसं नरकायैव स्वर्गाय राजसं प्रिये ॥ २९ ॥
सात्त्विकं मोक्षदं प्राहुस्तुरीयं निष्फलं शिवे ।
शास्त्राणि चैव गिरिजे तामसानि निबोध मे ॥ ३०
तामसानि पुराणानि तन्त्राणि तानि च प्रिये ।
स्वर्गमोक्षविहीनानि तानि यत्नाद्विवर्जयेत् ॥ ३१ ॥
इ(य?म) मर्थं पुरा देवि पृष्टवान् देवकीसुतः ।
मां प्रसाद्य तपस्तप्त्वा भोगेन मुक्तिसाधनम् ॥ ३२
तस्मै चापि मया प्रोक्तं संदेहोच्छेदकारकम् ।
ततस्तेनापि संप्रोक्तं ब्रह्मणे हंसरूपिणे ॥ ३३ ॥
नन्दिकेश्वर एतद्वै मयोक्तं पुनरेव हि ।
सोऽपि चाभूत्स्वयं कर्ता मम तुल्यो महामतिः ॥ ३
पुष्पदन्ते ततः प्रोक्तं तन्त्रमेतद्वरानने ।
गन्धर्वेभ्यो ददौ तेन रहस्यं परमाद्भुतम् ॥ ३५ ॥
ब्रह्मणा च तथा प्राप्तं तस्मात् ते मुनयः प्रिये ।
पुरन्दरेणाङ्गिरसाद् भार्गवाद्दैत्यराट् प्रभुः ॥ ३६ ॥

पुलस्तेरपि पौलस्त्याः क्रमादेवं महीतले ।
नमुच्याद्या महादैत्याः पुरा स्वायंभुवान्तरे ॥ ३७ ॥
महाबलपरीवारा महावीर्या महौजसः ।
सर्वधर्मरताः शुद्धाः सर्वपापविवर्जिताः ॥ ३८ ॥
त्रयीधर्मरताः सर्वे भग्ना इन्द्रपुरोगमाः ।
तदाकर्ण्य महेशानि ब्रह्मा लोकपितामहः ॥ ३९ ॥
मदन्तिकं समासाद्य स्तुतिभिर्मां प्रसाद्य च ।
उवाचेदं वचश्चापि श्लक्ष्णं मधुरया गिरा ॥ ४० ॥

ब्रह्मोवाच

सर्वज्ञ सर्वलोकेश सर्वदुःखनिसूदन ।
भोगमोक्षप्रदे तन्त्रे त्वया प्रकाशिते प्रभो ॥ ४१ ॥
तदवाप्य महादेव नरराक्षसदानवाः ।
सिद्धिप्रदा भवेयुस्ते प्रभुनाम कथं चरेत् ॥ ४२ ॥
सर्वे ब्रह्मात्मना देव यदि यास्यन्ति विद्यया ।
कैव स्रष्टिः किमत्रापि[1] कार्य्यं स्याद् वद शंकर ॥४३॥
इति विज्ञाप्य मां ब्रह्मा ययौ ब्रह्मसदः[2] प्रति ।
ततोऽहं परमेशानि गत्वा मन्दरपर्वतम् ॥ ४४ ॥
तान् विप्रानथ संस्मृत्य मन्त्रयित्वा च तैः सह ।
नन्दिकेश्वरमाहूय द्वारि संस्थाप्य सत्वरम् ॥ ४५ ॥
रक्षितव्यस्त्वया भद्र वि(क्ष?घ्न) श्चेह समागतः ।
इत्यादिश्य प्रविष्टोऽहं निर्जनं परमं महत् ॥ ४६ ॥
मोहनार्थं परं तेषां दैत्यादीनां विशेषतः ।

---

१ 'त्रास्ति' क. पाठः । २ 'दं' क. पाठः ।

शास्त्राणि विविधान्यत्र संप्रोक्तानि द्विजैः सह ॥ ४७
येषां श्रवणमात्रेण पातित्यं ज्ञानिनामपि ।
यश्चिन्तनान्महादेवि गोतमो मुनिपुंगवः ॥ ४८ ॥
अक्षपाद इति ख्यातः प्रमत्तो मां विगर्हयन् ।
अनुभूय तदास्वादं मामेव शरणं ययौ ॥ ४९ ॥
तत् कृपालुरहं देवि स्वयमादिष्टवानिदम् ।
वैष्णवं तन्त्रमाचक्ष्व वि(ष्णुय?ष्णूयं)स्तु सदा मुने ॥ ५०
प्रसन्नको यदा विष्णुस्ततः सिद्धिमवाप्स्यसि ।
यदुक्तं ते मया तन्त्रं कृष्णस्य परमात्मनः ॥ ५१ ॥
अधीत्य नारदात् सर्वं सिद्धिमाप मुनिस्तदा ।
प्रथमं हि मयै[1]वोक्तं शैवं पाशुपतादिकम् ॥ ५२ ॥
मच्छक्त्यावेशितै[2]र्विप्रैः संप्रोक्तानि ततः परम् ।
कणादेन च संप्रोक्तं शास्त्रं वैशेषिकं महत् ॥ ५३ ॥
गोतमेन तथा न्यायं सांख्यं तु कपिलेन तु ।
धि[3]षणेन तथा प्रोक्तं चार्वाकमतिगर्हितम् ॥ ५४ ॥
दैत्यानां नाशनार्थाय विष्णुना बुद्धरूपिणा ।
बौद्धशास्त्र[4]मसत् प्रोक्तं नग्ननीलपटादिकम् ॥ ५५ ॥
आ[5]पा(त्यं?र्थ्यं) श्रुतिवाक्यानां दर्शयंल्लोकगर्हितम् ।
कर्मस्वरूपत्या[6]ज्यत्वमत्र वै प्रतिपाद्यते ॥ ५६ ॥
सर्वकर्मपरिभ्रष्टा[7]द् (वैकर्म सं?विकर्मासत्) तदुच्यते ।

१ 'मया प्रोक्तं' ख. पाठः । २ 'वै शतै' क. पाठः । ३ 'धीष' क. पा
४ 'स्त्रं तथा' ख. पाठः । ५ 'आपत्य' ख. पाठः । ६ 'तादात्म्यं' ख. पाठ
७ 'ष्टं कल्मषं' ख. पाठः ।

गौतमप्रोक्तशास्त्रार्थनिरताः सर्व एव हि ॥ ५७ ॥
सार्गालीं योनिमापन्नाः सं (धि?द्धि) ग्धाः सर्वकर्मसु ।
सर्वस्य जगतोऽप्यत्र मोहनार्थं पुरा शिवे ॥ ५८ ॥
वेदार्थवन्महाशास्त्रं मायावादमवैदिकम् ।
मयैव कथितं देवि जगतां नाशकारणात् ॥ ५९ ॥
द्विजन्मना जैमिनिना पूर्वं वेदमपार्थतः ।
निरीश्वरेण वादेन कृतं शास्त्रं महत्तरम् ॥ ६० ॥
तत्रैवाहं महामन्त्रान् संदूष्य दोषविस्तरैः ।
कृत(वान्त?वांस्त)न्त्रविस्तारं ससंदेहपदान्वितम् ॥ ६१ ॥
अथ देवाश्च दैत्यश्च दूषिते मन्त्रविग्रहे ।
अभवन् दूषिताः सर्वे हीनवीर्य्यपराक्रमाः ॥ ६२ ॥
निर्बलास्त्वङ्गहीनाश्च अथ सर्वे दिवौकसः ।
विष्णुलोकं समासाद्य व्यसनं तन्न्यवेदयन् ॥ ६३ ॥
विदित्वा व्यसनं विष्णुस्तत्तत् तेषां दिवौकसाम् ।
वैनतेयं समारुह्य नन्दिकेश्वरसंनिधौ ॥ ६४ ॥
आगतो वारितस्तेन मद्दर्शनसमुत्सुकः ।
तत्र स्थित्वा महेशानि भगवाञ्जगदीश्वरः ॥ ६५ ॥
वर्धयितुं[2] शरीरं च वैनतेयं समादिशत् ।
प्रवृद्धस्य खगेन्द्रस्य स्थित्वा तस्योत्तमाङ्गके ॥ ६६ ॥
स दृष्ट्वा समुपाविष्टमिदमाह स्मितानन: ।

श्रीभगवानुवाच

अकालं प्रलयः[3] कस्मात् क्रियते भवताधुना ॥ ६७ ॥

---

१ 'सर्ववेद' ख. पाठः । २ 'वर्द्ध' क. पाठः । ३ 'यं' क. पाठः ।

न युज्यते महादेव कर्तुमेवं[1] न सांप्रतम् ।

ईश्वर उवाच

दूषिता ब्रह्मणो मन्त्राः सौराश्चाग्निसमुद्भवाः ॥ ६८ ॥

तथा वै दूषिता यौन्याः श्रियश्चापीह केचन ।

सरस्वत्या महामन्त्रा वैष्णवा अपि केचन ॥ ६९ ॥

वैनायका महामन्त्राः प्रायेण दूषिता मया ।

शक्तितन्त्रेषु ये केचित् ससंदेहपदान्विताः ॥ ७० ॥

श्रीभगवानुवाच

जगद्वन्द्य कलाधीश सर्वभूतोपकारक ।

निवर्त्तस्व महादेव मद्वाक्यशासनादिभिः ॥ ७१ ॥

ईश्वर उवाच

विरतोऽहं तदा तस्य विष्णोरमिततेजसः ।

वचनात् परमेशस्य शंखचक्रगदाभृतः ॥ ७२ ॥

तान्यधीत्यैव ते सर्वे मोहिता विष्णुमायया ।

भविष्यन्ति च संदिग्धा वालिशत्वा[2]दनास्थया ॥ ७३

विवदिष्यन्ति संमूढा हेतुवादपरायणाः ।

हे(ति?तु)साध्येतिवाक्याच्च भविष्यन्ति पराङ्मुखाः ॥

इति श्रीगन्धर्वतन्त्रे पार्वतीश्वरसंवादे तन्त्रप्रस्तावनानिरूपणं नाम प्रथमः पटलः ॥ १ ॥

---

१ 'व' ख० पाठः । २ 'वाली' ख० पाठः ।



## द्वितीयः पटलः ।

पार्वत्युवाच

शक्तितन्त्रं महादेव संदेहरहितं कुरु ।
तथा कथय देवेश भोगेन मुक्तिसाधनम् ॥ १ ॥

ईश्वर उवाच

निःसंदेहं महातन्त्रं श्रूयतां खलु सांप्रतम् ।
गोपितव्यं पशोरग्रे पूर्णचन्द्रनिभानने ॥ २ ॥
परात्मजीवयोरैक्यं मयात्र प्रतिपाद्यते ।
ब्रह्मणोऽपि परं रूपं निर्गुणं वक्ष्यते मया ॥ ३ ॥
श्रूयतां विमले भद्रे आत्मानमात्मना पुनः ।
प्रणमामि महादेवीं तुरीयां ब्रह्मरूपिणीम् ॥ ४ ॥
यस्या स्मरणमात्रेण भवाब्धौ न निमज्जते ।
[1]अस्याश्चाराधनं कृत्वा नान्[2]यस्याराधनं चरेत् ॥ ५ ॥
अन्यस्य स्मरणाद् दु[3]ःखं योगिनीशापमालभेत् ।
अपमृत्युर्भवेत् तस्य मृते च नरकं व्रजेत् ॥ ६ ॥
एनामुपास्य देवेशि किं न सिध्यति भूतले ।
सकृदेनामुपास्यैव न मातुः स्तनपो भवेत् ॥ ७ ॥
तस्माद् देवि शुभे भद्रे तुरीयां समुपाश्रयेत् ।
आदौ कामेश्वरी ज्ञेया द्वितीया भगमालिनी ॥ ८ ॥

---

१ 'तस्याः' क. पाठः । २ 'नान्यदा' ख. पाठः । ३ 'देवि' ख. पाठः ।

वज्रेश्वरी तृतीया च तुर्या त्रिपुरसुन्दरी ।
त्रयाणा[1]मपि देवानां प्रचोदिका[2] त्रिपादिका ॥ ९ ॥
त्रिपुरेति समाख्याता कामदा सा[3] कामेश्वरी ।
त्रीन् यस्मात् पुरतो दद्याद् दुर्गा सा परमेश्वरी ॥ १०
त्रिपुरेति समाख्याता सौन्दर्यातिशयात् तथा ।
मयापि चिन्त्यते सा तु तत्प्रसादादहं प्रभुः ॥ ११ ॥
जगतामीश्वरत्वं च लब्धं तदनुकम्पया ।
ब्रह्मत्वं ब्रह्मणा प्राप्तं विष्णुत्वं विष्णुना तथा ॥ १२
सुरासुरमुनीन्द्राणां महत्त्वं तत्प्रसादतः ।
तेनेयं महती विद्या दुर्लभा भुवनत्रये ॥ १३ ॥

देव्युवाच

भगवन् सर्वमन्त्राश्च भवता मे प्रकाशिताः ।
महात्रिपुरसुन्दर्या मन्त्रा ये पूर्वसूचिताः ॥ १४ ॥
तांस्तानेवाधुना नाथ संदेहरहितान्[4] कुरु ।

ईश्वर उवाच

सर्वकार्येषु सर्वत्र तान्त्रिके वैदिके तथा ॥ १५ ॥
अविश्वासो महान् दोषो यत्नतस्तं विवर्जयेत् ।
संसिद्धेः कारणं देवि विश्वासः समुदाहृतः ॥ १६ ॥
विदित्वा रक्षणं यत्तु सगुणं वीर्यवर्ध[5]नम् ।
रत्नेषु कीलकं यद्वद् ग्रन्थिर्मलयसंभवे ॥ १७ ॥
आस्तिकोऽथ शुचिर्दान्तो[6] द्वैतहीनो जितेन्द्रियः ।

---

१ 'गुप्यणा' क. पाठः । २ 'दिता' ख. पाठः । ३ 'साहि' क. पाठः । ४ क. पाठः । ५ 'वर्द्ध' क. पाठः । ६ 'दक्षो' ख. पाठः ।

ब्राह्मिष्ठो ब्रह्मवादी च ब्रह्मी ब्रह्मपरायणः ॥ १८ ॥
सर्वहिंसाविनिर्मुक्तः सर्वप्राणिहिते र[1]तः ।
सोऽस्मिन् शास्त्रेऽधिकारी स्यात् तदन्यो भ्रमसाधकः[2] ॥ १९ ॥
नास्तिकाय कुशीलाय दाम्भिकाय कदाचन ।
न वक्तव्यं[4] पशोरग्रे कुटिले चुम्बके तथा ॥ २० ॥
शृणु देवि महद् गुह्यं मन्त्रोद्धारं वरानने ।
आदौ पञ्चदशी विद्या कथ्यते वीरवन्दिते ॥ २१ ॥
* कामदेवस्ततो योनिस्तु[3]र्य्यस्वरपुरन्दरौ ।
भुवनेशी ततः पश्चात् पञ्च (रश्मि ? वर्ण) विभूषितः ॥ २२ ॥
अयं स वाग्भवो देवि वागीशत्वप्रदायकः ।
एतज्जप्त्वा महाबीजं किं न सिध्यति भूतले ॥ २३ ॥
बालकस्य तु जिह्वायां त्रिदिनाभ्यन्तरे न्यसेत् ।
मधुना श्वेतदूर्वाभिः सुवर्णस्य शलाकया ॥ २४ ॥
इदं वाग्भवकूटं तु लिखेद्वै जननान्तरे ।
स एव पण्डितो भूयान्न[5] तु मूर्खो भवेद् ध्रुवम् ॥ २५ ॥
एतद्वाग्[6]भवकूटं तु बालिशस्यापि मूर्धनि ।
हस्तं दत्त्वा पठेत् सिद्धमष्टोत्तरशतं प्रिये ॥ २६ ॥
सोऽपि श्लोकान्महेशानि करोत्येव न संशयः ।
सतर्कपदवाक्यार्थशब्दालंकारसारवित् ॥ २७ ॥
जिह्वायां न्यसनाद्देवि मूकोऽपि सुकविर्भवेत् ।

---

१ 'ता' क. पाठः । २ 'तदन्यत्र न साधकः' ख. पाठः । ३ 'स्तू' क. पाठः ।
४ 'वक्त्र' ख. पाठः । ५ 'भूत्वा' ख. पाठः । ६ 'इदं' ख. पाठः ।
* कामः क योनिः ए तुर्य्यस्वर ई पुरन्दरः ल भुवनेशी ह्रीं इति वाग्भवकूटम् ।

बहुनात्र किमुक्तेन जल्पितेनापि सुन्दरि ॥ २८ ॥
वागीशं स्पर्धते[1] वाक्यैः सर्वज्ञो भुवि जायते ।
मूको भवति वागीशो वाचस्पतिरिवापरः ॥ २९ ॥
† शिवचन्द्रौ समुद्धृत्य कामव्योमपुरन्दरान् ।
उद्धरेत् परमेशानि लज्जाबीजं ततः प्रिये ॥ ३० ॥
कामराजमिदं भद्रे षड्वर्णं[2] सर्वशोभितम् ।
‡ चन्द्रः कामस्तथेन्द्रश्च महामाया ततः परम् ॥ ३१ ॥
शक्तिबीजं वरारोहे वेदाक्षरसमन्वितम् ।
त्रिकूटेयं महाविद्या महात्रिपुरसुन्दरी ॥ ३२ ॥
सर्वतीर्थम(ये?यी) देवी सर्वदेवस्वरूपिणी ।
सर्वशास्त्रमयी शुद्धा सर्वदोषविवर्जिता ॥ ३३ ॥
चतुर्वेदमयी साक्षात् सर्वसौभाग्यदायिनी ।
कामराजाख्यविद्येयं भोगमोक्षफलप्रदा ॥ ३४ ॥
अनया सदृशी विद्या त्रिषु लोकेषु दुर्लभा ।
एतस्या एव विद्यायाः शक्तिं तुर्यं च पार्वति ॥ ३५ ॥
हित्वा मुखे शिवेन्दुभ्यां लोपामुद्रा * प्रकाशिता ।
§ मारबीजं ततो योनिः कामः (शु?श)क्रं तथेश्वरी ॥ ३६

---

१ 'र्द्धे' क. पाठः । २ 'यद्व' क. पाठः ।

† शिवः ह चन्द्रः स कामः क व्योम ह पुरन्दरः ल लज्जा ह्रीं इति कामराजकूटम्

‡ चन्द्रः स कामः क इन्द्रः ल महामाया ह्रीं इति शक्तिकूटम् ।

* उक्ताया एव विद्याया वाग्भवादौ शक्तितुर्ये एई विहाय शिवः ह इन्दुः स इत्ये[तद्]द्वयमादौ नियोज्य लोपामुद्रोपासिता विद्या भवति ।

§ मारः क योनिः ए कामः क शक्रं ल ईश्वरो ह्रीं इति वाग्भवकूटस्थाने विन्य[स्य] पूर्ववत्कामराजशक्तियोगात् शांभवी विद्या ।

पूर्ववत् कामराजं च शक्तिकूटं तथैव च ।
सर्वीर्य्या सिद्धिदा विद्या त्रैलोक्यवशकारिणी ॥ ३७ ॥
तव स्नेहान्महेशानि मयेयं तु प्रकाशिता ।
एतच्छांभवमुद्दिष्टं शृणु शाक्तमतः परम्[1] ॥ ३८ ॥
† शक्तिर्महेशः कामश्च इन्द्रबीजमतः परम ।
महामाया ततः पश्चात् पूर्ववदपरं ततः ॥ ३९ ॥
विद्यात्रयमिदं भद्रे दुर्लभं भुवनत्रये ।

देव्युवाच

षोडशार्णां महाविद्यां त्रैलोक्यवशदायिनीम् ॥ ४० ॥
अधुना कथयेशान यद्यहं तव वल्लभा ।

ईश्वर उवाच

शृणु देवि महाविद्यां षोडशाक्षररूपिणीम् ॥ ४१ ॥
एतस्या एव विद्याया यदाद्ये भुवनेश्वरी ।
तदेयं परमेशानि षोडशाक्षररूपिणी ॥ ४२ ॥
मायास्थाने (वा?र) माबीजं दत्त्वान्या ‡ षोडशी भवेत् ।
वरदा सिद्धिदा विद्या[2] कुबेरास्पददायिनी ॥ ४३ ॥
चिन्तामणिरियं विद्या त्रैलोक्ये चापि दुर्लभा ।
वेदादिमण्डिता चान्या विद्या मोक्षप्रदायिनी ॥ ४४ ॥
तथैव हि महा[3]बीजं रमाबीजं तथैव च ।

---

१ 'रः' क. पाठः । २ 'द्यात्' क. पाठः । ३ 'माया' ख. पाठः ।

† शक्तिः स महेशः ह कामः क इन्द्रः ल महामाया ह्रीं इति प्रागुक्तविद्याया वाग्-नियोज्य शाक्ती विद्या संपद्यते ।

‡ भुवनेश्वरी ह्रीं तदादियुता पूर्वोक्ता विद्या षोडशार्णा । अथवादौ रमाबीजोपेता तथा ति ।

पञ्चदशाक्षरीविद्यां तथैव च समुद्धरेत् ॥ ४५ ॥
सेयं † सप्तदशी विद्या साक्षात् जाग्रत्स्वरूपिणी ।

देव्युवाच

ततः कथय देवेश राजराजेश्वरीं पराम् ॥ ४६ ॥
षोडशार्णां महाविद्यां त्रैलोक्यवशदायिनीम् ।
जननीं सर्वमन्त्राणां परब्रह्मस्वरूपिणीम् ॥ ४७ ॥

ईश्वर उवाच

राजराजेश्वरीं विद्यां तथास्याः कवचं प्रिये ।
यो जानाति महीपृष्ठे स देवो नतु मानुषः ॥ ४८ ॥
राजराजेश्वरी विद्या कथ्यते शृणु पार्वति ।
रमाबीजं समुद्धृत्य मायाबीजं नियोजयेत् ॥ ४९ ॥
कामबीजं समालिख्य वाग्बीजं तदनन्तरम् ।
चतुर्दशस्वरोपेतं चन्द्रं बिन्दुयुगान्वितम् ॥ ५० ॥
प्रणवं भुवनेशानीं रमां चैव महेश्वरि ।
पञ्चदशाक्षरीं पश्चादुद्धरेत् परमेश्वरि ॥ ५१ ॥
व्युत्क्रमात् परमेशानि पूर्वोक्तबीजपञ्चकम् ।
आलिख्य संपुटीकुर्य्याद् विद्येयं ह्यष्टकूटका ‡ ॥ ५२ ॥
तुरीयेयं महाविद्या केवलात्मस्वरूपिणी ।
षोडशार्णा महाविद्या श्रीविद्या कथिता परा ॥ ५३ ॥

---

† समनन्तरोक्ता पञ्चदशाक्षरी मायारमाभ्यां ह्रींश्रीं इत्याभ्यामाद्ययोजिता = शाक्षरी विद्या भवति ।

‡ रमा श्रीं माया ह्रीं कामबीजं क्लीं वाग्बीजं ऐं चतुर्दशस्वरोपेतः सविसर्गं सौः प्रणव ओंकारः भुवनेशानी ह्रीं रमा श्रीं ततः पञ्चदशाक्षरी व्युत्क्रमैः बीजकैश्च संपुटिता षोडशकूटा तुरीया विद्या भवति ।

वक्त्रकोटिसहस्रैस्तु जिह्वाकोटिशतैरपि ।
वर्णितुं नैव शक्येयं श्रीविद्या षोडशाक्षरी[1] ॥ ५४ ॥
षोडशार्णा महाविद्या सर्वतन्त्रेषु गोपिता ।
तव स्नेहान्महेशानि गन्धर्वे वै प्रकाशिता ॥ ५५ ॥

इति श्रीगन्धर्वतन्त्रे पार्वतीश्वरसंवादे विद्याभेदोद्धारनिरूपणं नाम द्वितीयः पटलः ॥ २ ॥

---

१ 'शक्येऽहं श्रीविद्यां षोडशाक्षरीम्' ख. पाठः ।

# तृतीयः पटलः ।



देव्युवाच

देवदेव जगन्नाथ भक्तानामार्तिनाशन ।
पञ्चपञ्चाक्षरीं विद्यां पञ्चमीं सर्वकामदाम् ॥ १ ॥
अधुना कथयेशान समग्रां पापनाशिनीम् ।

ईश्वर उवाच

दुर्लभा पञ्चमी विद्या पञ्चकूटात्मिका शुभा ॥ २ ॥
भुक्तिमुक्तिप्रदा शुद्धा सुखदा दुःखनाशिनी ।
शृणु देवि प्रवक्ष्यामि यथा सा चिन्त्यते परा ॥ ३ ॥
गुरुभक्तेन शुद्धेन साधकेन सुबुद्धिना ।
देवी पञ्चात्मकं सर्वं जगदेतच्चराचरम् ॥ ४ ॥
पृथिव्यापस्तथा तेजो वायुराकाशमेव च ।
पृथिवी ब्राह्मणी शक्तिर्जलं नारायणी तथा ॥ ५ ॥
तेजो रुद्रस्य रुद्राणी वायुरीशस्य चेश्वरी ।
माहेश्वरी तथाकाशं शक्तिर्महेश्वरस्य च ॥ ६ ॥
पञ्चदेवात्मकं पञ्च पञ्चमीपञ्चशक्तयः ।
या शक्तिः सर्वभूतानां जगच्चैतन्यरूपिणी ॥ ७ ॥
सा * एव पञ्चमीविद्या जगदाधाररूपिणी ।
सा एव हि जगत्सर्वं सा एव परमा कला ॥ ८ ॥

---

१ 'व्या' ख. पाठः ।

* संध्यभाव ऐशः एवमग्रेऽपि बोध्यम् ।

नान्यत् परतरं देवि विद्यते तद्बहिष्कृते ।
पञ्चविंशतितत्त्वेन कूटके पञ्च देवताः ॥ ९ ॥
आदौ कामेश्वरी ज्ञेया ततो वज्रेश्वरी शुभा ।
तृतीया भगमाला च तुर्य्या त्रिपुरसुन्दरी ॥ १० ॥
श्रीमत्त्रिपुरसुन्दर्य्याश्चिन्तनीया परा कला ।
सा एव पञ्चमी शक्तिः परब्रह्मस्वरूपिणी ॥ ११ ॥
परमानन्दरूपं यज्जगतां कारणं महत् ।
तस्या देव्यास्तु तद्रूपमुदयास्तविवर्जितम् ॥ १२ ॥
स्थूलत्वे स्थूलरूपा सा सूक्ष्मत्वे सूक्ष्मरूपिणी ।
स्थूलसूक्ष्मप्रभेदेन जगत्कारणरूपिणी ॥ १३ ॥
योऽसौ विश्वेश्वरो देवो विश्वं व्याप्य स्थितश्च यः ।
सैव विश्वेश्वरी देवी व्यापकत्वेन संस्थिता ॥ १४ ॥
नित्या सा सुखरूपा च महासुखशुभप्रदा ।
तत्स्वरूपानन्दमयी[1] परमानन्दरूपिणी ॥ १५ ॥
किं पुनः शक्तिरूपेण परब्रह्मस्वरूपिणी ।
तस्याः पुनः पुनः सृष्टिर्जायते लीयते सदा ॥ १६ ॥
तस्माच्छक्तिः प्रधाना च शक्त्या व्याप्तमिदं जगत् ।
सर्वदानन्दहृदयश्चाद्वैतानन्दपारगः ॥ १७ ॥
समयाचारसंपन्नो भोगी भोगपरायणः ।
सदा ज्ञानविशुद्धात्मा गुरुभक्तो जितेन्द्रियः ॥ १८ ॥
गन्धर्वरूपवान् भूत्वा पञ्चमीं समुपासयेत् ।
पृथिव्यां मान(वो?वः) श्रेष्ठो यदि जानाति पञ्चमीम् ॥१९॥

1 'या' क. पाठः ।

शापभ्रष्टेन गन्धर्वो न नरो दैवयोगतः ।
यो जानाति महाविद्यां पञ्चकूटात्मिकां पराम् ॥ २०
स भवेत् खचरो देवि षण्मासान्नात्र संशयः ।
सदा ज्ञानविशुद्धात्मा मोक्षभागी भवेन्नरः ॥ २१ ॥
भोगेन लभते मुक्तिं यदि जानाति पञ्चमीम् ।
पञ्चपञ्चाक्षरीं विद्यां योऽसौ जानाति साधकः ॥ २
स पूज्यः सर्वलोकेषु स देवो नतु मानुषः[1] ।
त्रिकूटमेवं[2] कूटेषु कूटमेकं त्रिपञ्चकम् ॥ २३ ॥
पञ्चपञ्चाक्षरी विद्या त्रिकूटा पञ्चकूटकैः ।
पञ्चविंशतितत्त्वेन वर्णरूपेण संस्थिता ॥ २४ ॥
एकवर्णे त्रिकूटे च त्रिकूटे पञ्च देवताः ।
एकवर्णे पञ्चदश देवताः परिकीर्तिताः ॥ २५ ॥
पञ्चविंशतितत्त्वेन त्रिकूटे पञ्चसंख्यया ।
पञ्चसप्ततिपूर्वाणि तेन तासां शतत्रयम् ॥ २६ ॥
पञ्चकूटान्विता विद्या परा सौभाग्यसुन्दरी ।
वर्णरूपेण सा देवी जगदाधाररूपिणी ॥ २७ ॥
अक्षरात् सर्वमुत्पन्नं जगदेतच्चराचरम् ।
नित्यमेकाक्षरं ब्रह्म अक्षरं परमं पदम् * ॥ २८ ॥
जप्यमेकाक्षरं ब्रह्म आदिकूटान्तमध्यगम् ।
जप्त्वा तत्साधयेत् सर्वं बहुजप्तेन[3] किं फलम् ॥ २९
तदेव परमं गुह्यं महासौभाग्यदायकम् ।

1 'मानवः' ख. पाठः । २ 'क' क. पाठः । ३ 'जाप्येन' ख. पाठः

* सकृज्जप्त्वाक्षरं मन्त्रं ब्रह्मभूयाय कल्पते । इत्यधिकः ख. पाठः ।

तदेव पञ्चकूटं तु पञ्चतत्त्वेन पञ्चमी ॥ ३० ॥
† कामं विष्णुयुतं शक्तिर्माया शक्रश्च पार्वति ।
पश्चाद् देवि महामायाबीजं चान्ते नियोजयेत् ॥ ३१ ॥
‡ शिवबीजं समुधृत्य शक्तिबीजं तदन्तरम् ।
तदधः कामबीजं तु भूर्व्योमानलसंयुतम् ॥ ३२ ॥
चतुर्थस्वरसंयुक्तमर्द्धेन्दुबिन्दुभूषितम् ।
प्रथमं कामराजस्य कूटं त्रैलोक्यपूजितम् ॥ ३३ ॥
मध्यकूटं प्रवक्ष्यामि कामराजस्य मध्यगम् ।
अतिगुह्यतरं देवि स्नेहाद् वक्ष्यामि केवलम् ॥ ३४ ॥
* वियद्विष्णुयुतं देवि मादनं तदनन्तरम् ।
तदधो हंसबीजं तु इन्द्रबीजं समुद्धरेत् ॥ ३५ ॥
विष्णोः पदं वह्नियुतं मायाबीजं समुद्धरेत् ।
मध्यकूटमिदं प्रोक्तं महासौभाग्यदायकम् ॥ ३६ ॥
तुरीयं तु प्रवक्ष्यामि शृणु देवि सुदुर्लभम् ।
§ कामबीजं महेशानि शिवबीजं ततः परम् ॥ ३७ ॥
तदधो वायुबीजं तु इन्द्रबीजं नियोजयेत् ।
वियद् वह्निसमायुक्तं चतुर्थस्वरभूषितम् ॥ ३८ ॥

---

† कामः क विष्णुयुतोऽकारोऽतः, शक्तिः ए माया ई शक्रो ल महामाया ह्रीं इत्येतत्पञ्चमीविद्यायाः प्रथमं वाग्भवकूटम् ।

‡ मध्यकूटत्रयं कामराजस्य । तत्र शिवः ह शक्तिः स कामः क भूः ल व्योमानलेत्यादिना ह्रीं, इति कामराजस्य प्रथमं कूटम् ।

* वियत् ह विष्णुयुतमकारोपेतम् । मादनं क हंसः ह इन्द्रः ल विष्णोः पदमित्यादिना ह्रीं, इति कामराजस्य मध्यमं कूटम् ।

§ कामः क शिवः ह वायुः य इन्द्रः ल वियदित्यादिना ह्रीं, इति कामराजस्य तृतीयं कूटम् ।

अर्द्धेन्दुबिन्दुसंयुक्तं चतुर्थं कूटमुत्तमम् ।
शक्तिकूटं प्रवक्ष्यामि शृणु देवि सुदुर्लभम् ॥ ३९
यच्छ्रुत्वा साधकाः सर्वे लभन्ते मुक्तिमुत्तमाम् ।
* प्राणबीजं समुधृत्य कामबीजं समुद्धरेत् ॥ ४० ॥
इन्द्रबीजं तथा दे(वि?वी) क्रमेण विनियोजयेत् ।
सान्तं वह्निसमायुक्तं चतुर्थस्वरसंयुतम् ॥ ४१ ॥
नादबिन्दुकलायुक्तं शक्तिकूटं समुद्धरेत् ।
फलं चास्या विशेषेण साधनं च वरानने ॥ ४२ ॥
कथितव्यं मया देवि संक्षेपात् कथ्यतेऽधुना ।
एषा विद्या महाविद्या गुह्याद् गुह्यतमा प्रिये ॥ ४
भोगदा मोक्षदा चैव सर्वकामार्थसिद्धिदा ।
वाग्भवं प्रथमं कूटं शक्तिकूटं तु पञ्चमम् ॥ ४४ ॥
मध्यकूटत्रयं देवि काम(बी?रा)जं मनोहरम् ।
काम(बी?रा)जं प्रवक्ष्यामि कूटभेदेन तच्छृणु ॥ ४५ ॥
ज्ञात्वा तत्साधयेद् देवि असाध्यमपि भूतले ।
सौभाग्यं प्रथमं कूटं महासौभाग्यदायकम् ॥ ४६ ॥
त्रिकूटमेककूटेन काम(बी?रा)जं महत्परम् ।
एवं कूटत्रयेणैव नित्या सौभाग्यसुन्दरी ॥ ४७ ॥
एकत्र पञ्चकूटेन नित्यं कूटत्रयान्विता ।
दुर्लभा सर्वलोकेषु महासौभाग्यसुन्दरी ॥ ४८ ॥
एतस्या एव विद्याया मध्यकूटस्य मध्यमम् ।

---

* प्राणो ह कामः क इन्द्रः ल देवी स सान्तमित्यादिना ह्लीं इति शक्ति

१ 'महादेवि' क. पाठः । २ 'दम्' क. पाठः ।

जप्त्वानन्दमयो भूत्वा सर्वकाममुपालभेत् ॥ ४९ ॥
इयं स्वप्नावती नाम्ना विद्या त्रैलोक्यविश्रुता ।
आकर्षणकरी विद्या जगदाह्लादकारिणी ॥ ५० ॥
साधनं च प्रवक्ष्यामि यस्मादाकर्षणं भवेत् ।
स्वर्गे म(र्ते?र्त्ये) च पाताले नारीणां पुरुषस्य च ॥ ५१ ॥
नार्यो वश्या विशेषेण वशं (जा?या)ति जगत्त्रयम् ।
भोगदा मोक्षदा चैषा विद्या गन्धर्वसेविता ॥ ५२ ॥
महाभोगवती विद्या महदैश्वर्यदायिनी ।
तथा मधुमतीसिद्धिर्जायतेऽस्याः प्रसादतः ॥ ५३ ॥
बृहत्त्वं च लघुत्वं च दर्शनादर्शने तथा ।
प्रवेशं परकायस्य कामरूपो भवेद् ध्रुवम् ॥ ५४ ॥
पुंसां रूपं स्त्रियो रूपं यच्चान्यद्रूपमुत्तमम् ।
सर्वं तत् परमं रूपं तस्या एव न संशयः ॥ ५५ ॥
कान्तिस्तुष्टिस्तथा पुष्टिः श्रद्धा लज्जा दया घृणा ।
धृतिः शान्तिस्तथा ऋद्धिः सिद्धिर्बुद्धिर्मतिः क्षमा ॥ ५६ ॥
महामाया महाबुद्धिर्महाविद्या महोदया ।
महामहत्करी विद्या ब्रह्मविद्यैव केवला ॥ ५७ ॥
महाभूतदिने नक्तं श्मशाने यदि साधकः ।
सहस्रैकप्रमाणेन किं न सिध्यति भूतले ॥ ५८ ॥
यो जपेत् पञ्चमीं विद्यां परां त्रैलोक्यमातृकाम् ।
स नरो देवदेवेशो महादेव इवापरः ॥ ५९ ॥
भोगात्मा लभते भुक्तिं नानाभोगेन केवलम् ।

भुनक्ति बहुलान् भोगान् रसान्नानाविधानपि ॥ ६० ॥
यद् ब्रुवन्त्यक्षरं लोके भुनक्ति बहुलं सुखम् ।
शून्यागारे विहारे च चिन्त(येन्नो?यन्यो) जपेत्पराम् ॥
आकर्षणं भवेत्तस्य सर्वकामं ततो लभेत् ।
प्रथमानन्दहृदयो द्वितीय(म?मु)पभोगवान् ॥ ६२ ॥
तृतीयमुपभोगेन चतुर्थमपि कामयेत् ।
पञ्चमं प्रथमं पुण्यं मन्त्रसिद्धिकरं परम् ॥ ६३ ॥
पञ्चमं तु विशेषेण भोगयेत् कामयेत् सदा ।
पञ्चमाभ्यसनाद्वीरः पूजाया लभते फलम् ॥ ६४ ॥
कुण्डगोलोद्भवैर्द्रव्यैः स्वयंभूकुसुमेन च ।
रोचनाकुंकुमाभ्यां च जपमालां प्रलेपयेत् ॥ ६५ ॥
कर्पूरागुरुकस्तूरीरोचनाकुंकुमेन च ।
जपमालामुपस्कृत्य प्रतिष्ठां विधिवच्चरेत् ॥ ६६ ॥
तद्द्रवैरक्षताञ्लुब्धान् सं(श्रा?स्रा)व्य च पुनः पुनः ॥
वारिणा शोधितं कृत्वा सिन्दूरे निक्षिपेत् ततः ॥ ६७
पटे चित्रमये शुद्धे नक्तं यः पूजयेन्नरः ।
जप्त्वा विद्यां च मालायां सर्वकाममुपालभेत् ॥ ६८ ॥
आनीय कन्यकां दिव्यां प्रमदां यौवनोन्नताम् ।
उक्षितां मूलमन्त्रेण सुशीलां चारुहासि(ह्नीं?नीम्) ॥ ६
सर्वदानन्दहृदयां घृणालज्जाविवर्जिताम् ।
गुरुभक्तां सुवेशां च देवतापूजने रताम् ॥ ७० ॥
तस्या गात्रे न्यसेन्मन्त्री पञ्चकामाञ् शरानपि ।

पञ्चकूटं न्यसेन्मन्त्री पञ्चाशन्मातृकां न्यसेत् ॥ ७१ ॥
दिव्यमालां समादाय साधको विजितेन्द्रियः ।
सहस्रैकप्रमाणेन जपेत् स्वप्नावतीं ततः ॥ ७२ ॥
अनेनैव विधानेन भवेदाकर्षणं महत् ।
तस्यास्तु मदनागारे पूजयेत् परमेश्वरीम् ॥ ७३ ॥
* सर्वसंक्षोभिणीं मुद्रां बद्ध्वा योनिं प्रचालयेत् ।
कामेश्वरीस्वरूपां तां चिन्तयेत् साधकोत्तमः ॥ ७४ ॥
कामेश्वरस्वरूपं च आत्मानमपि भावयन् ।
स्वयमक्षोभितो भूत्वा साधकः पञ्चमं चरन् ॥ ७५ ॥
तस्याः पुष्पं स्वयं यावद्[1] रक्षणीयं प्रयत्नतः ।
ताम्बूलगन्धपुष्पैश्च प्रत्यहं पूजयेच्च ताम् ॥ ७६ ॥
नानारसान्नपानेन तृप्तिमाचर्य यत्नतः ।
वस्त्रालंकारभूषाद्यैस्तस्याः संतोषमानयेत् ॥ ७७ ॥
यथाकाले तथा पुष्पं स्वयं तद्गोप्यरूपतः ।
गृहीत्वा तु प्रयत्नेन स्वयंभूकुसुमं हि तत् ॥ ७८ ॥
स्वयंभूकुसुमं दिव्यं त्रैलोक्येष्वपि दुर्लभम् ।
प्राप्नोति साधकश्रेष्ठो दुर्लभं साधयेद्भुवि ॥ ७९ ॥
स्वयंभूपुष्पयोगेन साक्षतेन सदार्चयेत् ।
विद्यां स्वप्नावतीं जप्त्वा क्षिप्रमाकर्षणं भवेत् ॥ ८० ॥
देवताश्च ग्रहा नागा दानवा राक्षसाश्च ये ।

---

* तल्लक्षणं—यथा मध्यमामध्यगे कृत्वा कनिष्ठाङ्गुष्ठरोधिते । तर्जन्यौ दण्डवत् कृत्वा मध्यमोपर्यनामिके । क्षोभाभिधाना मुद्रेयं सर्वसंक्षोभकारिणी ॥ इति ।

1 'प्राग्वत्' ख. पाठः ।

राजानश्च स्त्रियः सर्वा नित्यं वश्या भवन्ति हि ॥ ८

स्वयंभूकुसुमैः पूजां प्रत्यहं यः समाचरेत् ।
जप्त्वा वै दिव्यमालायां सर्वकाममुपालभेत् ॥ ८२॥

पार्वत्युवाच

पुराप्येकादशी विद्या भवता कथिता मयि ।
नाराधिता मया यस्मात्तस्मान्मृत्युवशं गता ॥ ८३॥
सारात्सारतरां विद्यां श्रोतुमिच्छामि सांप्रतम् ।

ईश्वर उवाच

एकादशाक्षरी विद्या भैरव्याः कथिता पुरा ॥ ८४॥
इदानीं तव प्रीत्यर्थं कथयामि तथा पराम् ।
*मादनं गोत्रभि(च्छा?त्सा)न्तो रेफमायार्धचन्द्रवान् ।८
नादबिन्दुसमायुक्तो वाग्भवः परमेश्वरि ।
ब्रह्मा च गगनं शक्रो नकुलीशोऽनलः शशी ॥ ८६॥
माया बिन्दुः सनादेन काम(बी?रा)जं समुद्धरेत् ।
शक्तिर्मादनशक्रश्च हरो वह्नीन्दुमायया ॥ ८७॥
कलानादसमाक्रान्तः कथितः कामदो मनुः ।
यस्मै कस्मै न दातव्यो बान्धवाय च पार्वति ॥
मनुर्विमृ(ष्य?श्य)दातव्यो ज्येष्ठपुत्राय धीमते ॥ ८८

———o———

इति श्रीगन्धर्वतन्त्रे पार्वतीश्वरसंवादे पञ्चमीविद्योद्धारप्रयोगादि
निरूपणं नाम तृतीयः पटलः ॥ ३ ॥

---

* मादनं क गोत्रभित् ल सान्तेत्यादिना ह्रीं, इति वाग्भवम् । ब्रह्मा क गगनं ह शक्रः ल
लीश इत्यादिना ह्रीं, इति कामराजम् । शक्तिः स मादनं क शक्रः ल हर इत्यादिना ह्रीं
शक्तिकूटम् । इयमेकादशाक्षरी भैरवी विद्या ।

## चतुर्थः पटलः ।

पार्वत्युवाच

देवदेव महादेव लोकानां हितकारक ।
यत्सूचितं पुरा नाथ किमर्थं न प्रकाशितम् ॥ १ ॥
राजराजेश्वरीदेव्यास्त्रिपुरायाः शुभावहम् ।
कवचं यदि मे प्रीतः कथयस्व वृषध्वज ॥ २ ॥

ईश्वर उवाच

लक्षवारसहस्राणि वारितासि पुनःपुनः ।
स्त्रीस्वभावान्महादेवि पुनस्त्वं परिपृच्छसि ॥ ३ ॥
अत्यन्तं दुर्लभं गुह्यं कवचं सर्वकामदम् ।
तथापि कथयाम्यद्य तव प्रीत्या वरानने ॥ ४ ॥
त्रैलोक्यमोहनं नाम त्रिषु लोकेषु दुर्लभम् ।
सर्वसौभाग्यजननं भोगमोक्षफलप्रदम् ॥ ५ ॥
यद्धृत्वा दानवान् विष्णुर्निजघान सुदारुणान् ।
लोकान् वितनुते ब्रह्मा संहर्ताहं यतः प्रिये ॥ ६ ॥
धनाधिपः कुबेरोऽपि यतः सर्वे दिगीश्वराः[1] ।
नैतत्परतरं गुह्यं प्रतिजाने हि[2] पार्वति ॥ ७ ॥
वेदशास्त्रपुराणेषु सारमेतद्वरानने ।
पुत्रदारादिसहितं शिरो[3] देयं कथंचन ॥ ८ ॥
न देयं कवचं गुह्यं प्राणैः कण्ठगतैरपि ।

---

१ 'र' क. पाठः । २ 'जानीहि' क. पाठः । ३ 'वो' क. पाठः ।

श्रृणु सर्वाङ्गसुभगे दिव्यं कवचमुत्तमम् ॥ ९ ॥
राजराजेश्वरीदेव्याः कवचस्य ऋषिः शिवः ।
छन्दो विराड् देवता च महात्रिपुरसुन्दरी ॥ १०
हंसः शक्तिः परा बीजं रमाबीजं च कीलकम् ।
धर्मार्थकाममोक्षेषु विनियोगः प्रकीर्तितः ॥ ११ ॥
त्रिपुरा त्रिविधा पातु मम सर्वार्थसिद्धये ।
ऐंक्लींसौः वदने बाला पातु सर्वार्थसिद्धिदा ॥ १२
हंस्त्रैं-हसकलरीं-हस्त्रौः कण्ठे पातु महादेवी श्रीमत्त्रिपुर[4]
हृदयेऽव्यान्महेशानी महात्रिपुरसुन्दरी ॥ १३ ॥
राजराजेश्वरीविद्या षोडशी या महोदया ।
ब्रह्मरन्ध्रे सदा पातु कमला परमेश्वरी ॥ १४ ॥
गिरिराजसुता देवी पातु नित्यं च शीर्षके ।
कामबीजं ललाटेऽव्याद्वाग्बीजं कण्ठदेशके ॥ १५
सौः पातु[2] मे तथा पार्श्वे प्रणवो बाहुमूलके ।
शंभुप्रिया सदा पातु बाह्वो[3]र्दक्षिणसव्ययोः ॥ १६
विष्णुप्रिया सदा पातु मणिबन्धद्वये तथा ।
पार्वतीशः करे पातु नेत्रे नक्षत्रवल्लभः ॥ १७ ॥
श्रोत्रे रतिप्रियः पातु घ्राणे शक्रः सदावतु ।
पृष्ठदेशे सदा पातु पार्वती परमेश्वरी ॥ १८ ॥
हंसौः श्वासे चैव निःश्वासे पातां परमसिद्धिदौ
कामः कामे सदा पातु पिनाकी लिङ्गगोचरे ॥ १

१ 'हैस्त्रं' हेस्त्रौं क. पाठः । २ 'तुन' ख. पाठः । ३ 'हुद' ख. पाठः । ४ 'हेसौः'

पृथ्वी सर्वां(श?स)के पातु ह्ल्लेखा हृदयेऽवतु ।
स्तनौ विष्णुप्रिया पातु कुक्षौ च स पुरान्तकः ॥ २० ॥
नेत्रे वज्रधरः पातु माया वै जठरेऽवतु ।
पदद्वन्द्वे च सौः पातु ऐं जिह्वानिलयेऽवतु ॥ २१ ॥
क्लींकारः सर्वदा पातु दन्तोष्ठयोर्वरानने ।
शीर्षादिपादपर्यन्तं सर्वाङ्गं भुवनेश्वरी ॥ २२ ॥
रक्षाहीनं च यत् स्थानं वर्जितं कवचेन तु ।
तत्सर्वं परमेशानि पातु[1] नित्यं हरिप्रिया ॥ २३ ॥
आधारे वाग्भवः पातु कामराजो हृदि प्रिये ।
शक्तिकूटं तथा पातु भ्रुवोर्मध्ये च पार्वति ॥ २४ ॥
शीर्षे कूटत्रयं पातु ललाटे सर्वमन्त्रकः ।
अष्टाविंशतिवर्णोयं मुखवृत्ते सदावतु ॥ २५ ॥
षोडशीयं महाविद्या ब्रह्मविद्यैव केवला ।
भोगमोक्षप्रदा देवी केवलात्मस्वरूपिणी ॥ २६ ॥
कामेश्वरी ललाटेऽव्यान्मुखे तु भगमालिनी ।
दक्षनेत्रे सदा पातु नित्यं (दीप्ता?क्लिन्ना) महोदया ॥२७॥
भीरुण्डा वामनेत्रेऽव्यात् कर्णे वै वह्निवासिनी ।
महा ( विद्ये?वज्रे )श्वरी पातु वामकर्णप्रदेशके ॥ २८ ॥
दक्षनासापुटे पातु शिवदूती महेश्वरी ।
वामनासापुटे पातु त्वरिता सर्वसिद्धिदा ॥ २९ ॥
दक्षगण्डे सदा पातु नित्यं मां कुलसुन्दरी ।

---

१ ' ति ' ख. पाठः ।

त्रैलोक्यविमला पातु वामगण्डप्रदेशके ॥ ३० ॥
ओष्ठे नीलपताकाऽव्याद् अधरे विजयावतु ।
ऊर्ध्वदन्ते सदा पातु देवी मां सर्वमङ्गला ॥ ३१ ॥
अधोदन्तप्रदेशेऽव्यान्नित्यं ज्वालांशुमालिनी ।
विचित्रा सर्वदा पातु नित्यं मूर्धनि पार्वति ॥ ३२ ॥
आसां प्रधानभूता या महात्रिपुरसुन्दरी ।
षोडशी सा सदा पातु मुखे वै परमेश्वरी ॥ ३३ ॥
पृष्ठदेशे सदा पान्तु[1] गुरवस्त्रिविधाश्च ते ।
पादयोः सर्वदा पातु त्रिपुरा परमेश्वरी ॥ ३४ ॥
जानुदेशे सदा पातु देवी मां त्रिपुरेश्वरी ।
ऊरुद्वये सदा पातु देवी त्रिपुरसुन्दरी ॥ ३५ ॥
त्रिपुरवासिनी देवी कटिदेशे सदावतु ।
त्रिपुराश्रीश्च मां नित्यं गुह्यदेशे सदावतु ॥ ३६ ॥
मूलाधारे सदा पातु देवी त्रिपुरमालिनी ।
नाभौ त्रिपुरसिद्धाऽव्यात् त्रिपुरा(च?म्बा) सदा हृदि ॥ ३
ब्रह्मरन्ध्रे सदा पातु महात्रिपुरसुन्दरी ।
आसां तु मन्त्रबीजानि प्रोक्तस्थानेषु विन्यसेत् ॥ ३
पाषाण्ड[2]गणमध्ये तु बुद्धो मां परिरक्षतु ।
ब्रह्माऽव्याद् ब्रह्मसंघाते[3] शिवो मां योगसिद्धये ॥ ३
ज्ञाने मां भास्करः पातु मोक्षे नारायणः प्रभुः ।
या शक्तिः सर्वभूतानां विद्याविद्येति गीयते ॥ ४०
सा शक्तिः सर्वदा पातु स्त्रीपुत्रधनसंपदि ।

---

१ 'तु' क. पाठः । २ 'प' ख. पाठः । ३ 'हा' क. पाठः ।

अणिमा पश्चिमे पातु लघिमा चोत्तरेऽवतु ॥ ४१ ॥
पूर्वतः पातु महिमा ईशिता दक्षिणेऽवतु ।
वशिता वायुनिलये ईशे प्राकाम्यसिद्धिदा ॥ ४२ ॥
भुक्तिसिद्धिस्तथाग्नेये पात्विच्छासिद्धी राक्षसे ।
अधः पातु प्राप्तिसिद्धिर्मोक्षसिद्धिस्तथोर्ध्वके ॥ ४३ ॥
ब्रह्माणी संध्ययोः पातु माहेश्वरी दिवावतु ।
मध्याह्ने पातु कौमारी रात्रौ च शक्रवल्लभा ॥ ४४ ॥
ब्राह्मे मुहूर्तके पातु वैष्णवी सर्वसिद्धिदा ।
निशीथे पातु वाराही चामुण्डा श(क्र?त्रु)विग्रहे ॥ ४५ ॥
महोत्साहे महालक्ष्मीः पातु नित्यं महेश्वरी ।
शीर्षे संक्षोभिणी पातु (तारि?द्रावि)णी हृदयेऽवतु ॥४६॥
आकर्षिणी शिखायां तु कवचे पातु वश्यदा ।
उन्मादिनी तथा नेत्रे सर्वगात्रे महाङ्कुशा ॥ ४७ ॥
त्रिखण्डा भुजयोः पातु बीजे बीजस्वरूपिणी ।
खेचरी पादयोः पातु योनिमुद्रा च सर्वतः ॥ ४८ ॥
(स?का)माकर्षणरूपा[1]व्यात् सदा[3]कर्षणकर्मणि ।
बुद्ध्याकर्षणरूपा[2]व्यात् परबुद्धिविकर्षणे ॥ ४६ ॥
अहंकारे सदा पातु अहंकारविकर्षणी ।
शब्दाकर्षणरूपाव्याच्छब्दाकर्षणकर्मणि ॥ ५० ॥
स्पर्शाकर्षणरूपा मां पातु स्पर्शनकर्मणि ।
रूपाकर्षणरूपाव्यात् पररूपविकर्षणे ॥ ५१ ॥

१ 'त्वा' क. पाठः । २ 'त्वा' क. पाठः । ३ 'कामा' ख. पाठः ।

रसाकर्षणरूपाऽव्याद् रसे वै परमेश्वरी ।
गन्धाकर्षणरूपा मां पातु गन्धे च सर्वदा ॥ ५२ ॥
चित्ताकर्षणरूपा मां पायादाकृष्टिकर्मणि ।
धैर्याकर्षणरूपा तु पातु धैर्यविधौ सदा ॥ ५३ ॥
स्मृत्याकर्षणरूपाऽव्याज्ज्ञानाकर्षणकर्मणि ।
नामाकर्षणरूपाऽव्यान्नामव्याहरणे सदा ॥ ५४ ॥
बीजाकर्षणरूपा मां सर्वबीजप्ररोपणे ।
परजीवाकर्षणे पात्वात्माकर्षणरूपिणी ॥ ५५ ॥
अमृताकर्षणी[1] पातु अमृतीकरणे[2] सदा ।
शरीराकर्षणी[3] पातु सदा शरीररक्षणे ॥ ५६ ॥
अनङ्गकुसुमा पातु पुरतः सर्वकर्मणि ।
अनङ्गमेखला पातु पृष्ठतः परमेश्वरी ॥ ५७ ॥
अनङ्गमदना पातु वामतो मे महेश्वरी ।
दक्षिणे सर्वदा पातु अनङ्गमदनातुरा ॥ ५८ ॥
नित्यं चानङ्गरेखाऽव्यादूर्ध्वं मम सदा प्रिये ।
अनङ्गवेगिनी पातु अधो मे परमेश्वरी ॥ ५९ ॥
तथानङ्गांकुशा नित्यं पातु मां दिक्षु सर्वदा ।
अनङ्गमालिनी पातु विदिक्षु मम सर्वदा ॥ ६० ॥
सर्वसंक्षोभिणी चोर्ध्वे पातु मां जगदीश्वरी ।
सर्वविद्राविणी चाधो दिक्षु सर्वाविकर्षणी ॥ ६१ ॥
सर्वाह्लादकरी शक्तिर्विदिक्षु परिरक्षतु ।

१ 'णे' क. पाठः । २ 'णी' क. पाठः । ३ 'णे' क. पाठः ।

सर्वसंमोहिनी पातु समन्तात् परमेश्वरी ॥ ६२ ॥
अन्तर्बहिश्च मां पातु सर्वस्तम्भनकारिणी ।
तथैव पातु मां नित्यमाकाशे सर्वजृम्भणी ॥ ६३ ॥
पाताले चैव मां पातु सर्ववश्यकरी तथा ।
देवलोके सदा पातु सर्वरञ्जनकारिणी ॥ ६४ ॥
सर्वोन्मदनशक्तिर्मां भूतले परिरक्षतु ।
सर्वार्थसाधनी शक्तिः पायाद्भूतगणालये ॥ ६५ ॥
सिद्धानामालये पातु सर्वसंपत्तिपूरणी ।
राक्षसानां च यक्षाणां सर्वमन्त्रमयी गृहे ॥ ६६ ॥
असुराणां निवासे तु सर्वद्वन्द्वक्षयंकरी ।
सर्वसिद्धिप्रदा देवी पातु राजगृहे सदा ॥ ६७ ॥
सर्वसंपत्प्रदा पातु स्वगृहे सर्वसंपदि ।
सर्वप्रियङ्करी पातु सर्वलोकेषु सर्वदा ॥ ६८ ॥
सर्वमङ्गलकार्येऽव्यात् सर्वमङ्गलकारिणी ।
सर्वकामप्रदा देवी सर्वकार्येषु[1] सर्वदा ॥ ६९ ॥
ऐश्वर्ये सर्वदा पातु सर्वैश्वर्यप्रदायिनी[2] ।
सर्वमृत्युप्रशमनी पायान्नित्यं ममालये ॥ ७० ॥
सर्वारम्भे सदा पातु सर्वविघ्नविनाशिनी ।
देहसौन्दर्यकाले तु पातु सर्वाङ्गसुन्दरी ॥ ७१ ॥
सर्वसौभाग्यकाले तु सर्वसौभाग्यदायिनी ।
सर्वज्ञा च गृहे पातु सर्वशक्तिमयी रणे ॥ ७२ ॥
सर्वैश्वर्यप्रदा मार्गे सर्वज्ञानमयी जले ।

---

१ 'कर्मणि' क. पाठः । २ 'सर्वदुःखविमोचिनी' क. पाठः ।

सर्वव्याधिषु सर्वत्र सर्वव्याधिविनाशिनी ॥ ७३ ॥
पर्वते पातु प्रबला सर्वाधारस्वरूपिणी ।
सर्वपापहरा पातु सर्वकर्मसु सर्वदा ॥ ७४ ॥
सर्वानन्दकरी[1] देवी नानाघकृतगोचरे ।
सर्ववैरिभये पातु सर्वरक्षास्वरूपिणी ॥ ७५ ॥
सर्वसंकल्पकार्येषु सर्वेप्सितफलप्रदा ।
वशिनी वश्यकार्येऽव्यात् कामेशी स्तम्भनेऽवतु ॥ ७
मोहने मोदि[2]नी पातु विमलोच्चाटनेऽवतु ।
अरुणा पातु मां वादे जै[3]यिनी जल्पकर्मणि ॥ ७७
सर्वेश्वरी काम्यकार्ये कौलिनी भेदकर्मणि ।
जृम्भणे सर्वदा पा(तु?न्तु) शराः पञ्च महेश्वरि ॥ ७
धनुर्मोहविधौ पातु पाशस्तु वश्यकर्मणि ।
महातेजोमयः पातु स्तम्भने मां तथाङ्कुशः ॥ ७६
सर्वज्ञा हृदये पातु नित्य(कृता?तृप्तिः) च शीर्षके ।
अनादिबोधिका पातु नित्यं शिखाप्रदेशके ॥ ८० ॥
कवचे मां स्वतन्त्राव्यात् नेत्रे नित्यमलुप्तिका ।
अचिन्त्यशक्ति(व?र)स्त्रेषु पायात् परमसिद्धिदा ॥ ८१
कामेश्वरी रतौ पातु युद्धे वज्रेश्वरी तथा ।
नित्यं पातु महेशा[4]नी श्रीकामे भगमालिनी ॥ ८२
रसे रूपे च गन्धे च शब्[5]दे स्पर्शे च पातु माम् ।
सर्वानन्दमयी देवी महात्रिपुरसुन्दरी ॥ ८३ ॥

---

१ 'मयी' ख. पाठः । २ 'हि क. पाठः । ३ 'अ' क. पाठः । ४ 'नि
पाठः । ५ 'ब्द' क. पाठः ।

ईशाने वटुकः पातु आग्नेय्यां योगिनीगणाः ।
त्वगसृङ्मांसमेदोऽस्थिमज्जशुक्राणि पान्तु नः ॥ ८४ ॥
क्षेत्रेशो नैर्ऋते पातु गणेशो वायुमन्दिरे ।
मातङ्गवनिता पातु शेषिका कुलसुन्दरी ॥ ८५ ॥
शक्तिर्मां सर्वदा पातु मूलाधारनिवासिनी ।
इतीदं कवचं देवि त्रिषु लोकेषु दुर्लभम् ॥ ८६ ॥
यन्नोक्तं डामरे तन्त्रे यन्नोक्तं रुद्रयामले ।
सर्वतन्त्रेषु यन्नोक्तं गन्धर्वे प्रकटीकृतम् ॥ ८७ ॥
तव प्रीत्या महादेवि गोपनीयं प्रयत्नतः ।
तव नाम्नि स्मृते देवि सर्वयज्ञफलं लभेत् ॥ ८८ ॥
सर्वत्रैव जयप्राप्तिर्वाञ्छा सर्वत्र सिध्यति ।
नाम्नः शतगुणं स्तोत्रं व्याख्यानं चापि तच्छतम् ॥ ८९ ॥
तस्माच्छतगुणं ध्यानं ध्यानाच्छतगुणो मनुः ।
मन्त्राच्छतगुणं देवि कवचं ते मयोदितम् ॥ ९० ॥
यस्मै कस्मै न दातव्यं सुगोप्यमतिदुर्लभम् ।
न देयं परशिष्याय कृपणाय सुरेश्वरि ॥ ९१ ॥
शिष्याय भक्तिहीनाय चुम्बकाय तथैव च ।
गुरुभक्तिविहीनाय परहिंसारताय च ॥ ९२ ॥
निन्दकाय कुशीलाय दाम्भिकाय महेश्वरि ।
अभक्तेभ्योऽपि पुत्रेभ्यो दत्त्वा मृत्युमवाप्नुयात् ॥ ९३ ॥
यो ददाति निषिद्धेभ्यः कवचं मन्मुखाच्च्युतम् ।
तस्य नश्यन्ति देवेशि विद्यायुःकीर्त्तिसंचयाः ॥ ९४ ॥

तं हिंसन्ति च योगिन्यो मदीयशासनात् प्रिये ।
परे नरकमाप्नोति जन्मकोटिशतानि च ॥ ६५ ॥
सर्वलक्षणयुक्ताय यन्त्रमन्त्ररताय च ।
शिष्याय शान्तचित्ताय गुरुभक्तिरताय च ॥ ६६ ॥
उदके लवणं लीनं यथा भवति पार्वति ।
मनो भवति वै लीनं पादयोः श्रीगुरोः प्रिये ॥ ६७
तदा देयं महद्गुह्यं कृपया चातिदुर्लभम् ।
गुरोः पादप्रसादेन श्रीविद्या यदि लभ्यते ॥ ६८ ॥
तथैव कवचं देवि त्रिषु लोकेषु दुर्लभम् ।
स च देवो हरः साक्षात् तत्पत्नी परमेश्वरी ॥ ६९ ॥
प्रमादादपि देवेशि श्रीगुरोर्नाम नाददेत् ।
यस्य भक्तिर्गुरौ नित्यं वर्तते देववत्[1] प्रिये ॥ १०० ॥
तस्य मन्त्रस्य यन्त्रस्य सिद्धिर्भवति नान्यथा ।
कवचस्य तथा सिद्धिर्गुटिकायाश्च सुन्दरि ॥ १०१ ॥
इदं कवचमज्ञात्वा यो जपेत् सुन्दरीं पराम् ।
नवलक्षं प्रजप्त्वापि * तस्य विद्या न सिध्यति ॥ १
शुचिः समाहितो भूत्वा भक्तिश्रद्धासमन्वितः ।
सर्वभूतालये सुप्ते निशायामर्धरात्रके[2] ॥ १०३ ॥
हेतुयुक्तो महेशानि निर्जने पशुवर्जिते ।
रक्तासनोपविष्टस्तु रक्ताभरणभूषितः ॥ १०४ ॥
ताम्बूलपूरितमुखो धूपामोदसुगन्धितः ।
संस्थाप्य वामभागे तु शक्तिं स्वामिपरायणाम् ॥ १

१ 'त' क. पाठः । २ 'र्द्ध' क. पाठः । * ऐशः पाठः

रक्तवस्त्रपरीधानां शिवमन्त्रधरां शुभाम् ।
या शक्तिः सा महादेवी हररूपस्तु साधकः ॥ १०६ ॥
अन्योन्यचिन्तनाद् देवि देवत्वमुपजायते ।
शक्तियुक्तो यजेद् देवीं श्रीचक्रे लक्षणान्विते ॥ १०७ ॥
पुष्पाञ्जलित्रयं देव्यै मूलमन्त्रेण दापयेत् ।
भोगैश्च मधुपर्काद्यैस्ताम्बूलाद्यैः सुवासितैः ॥ १०८ ॥
पूजयित्वा महादेवीं पूजाकोटिफलं लभेत् ।
पूर्वोक्त(स्या?न्या)समेवास्मिन् समये च प्रविन्यसेत् ॥१०९॥
आत्मानं परमं ध्यायेद् दिव्यस्त्रीभिरलंकृतम् ।
दिव्यं मूर्ध्नि महच्छत्रं सहस्रदलनिर्मितम् ॥ ११० ॥
सुधावर्षिमुखाम्भोजं सस्मितं दिव्यवर्चसम् ।
परमानन्दसंदोहमुदितं परमव्ययम् ॥ १११ ॥
दिव्यालङ्कारवस्त्राढ्यं दिव्यमाल्यानुलेपितम् ।
दिव्यासनसमासीनं दिव्यभोगविभोगिनम् ॥ ११२ ॥
सर्वगं सर्वभूतेशं सृष्टिस्थित्यन्तकारिणम् ।
निर्लेपं निर्मलं शान्तं सर्वव्यापिनमीश्वरम् ॥ ११३ ॥
ततो देवीं हृदम्भोजे[2] ध्यायेत् तद्गतमानसः ।
ज(वा?पा)कुसुमसंकाशां बालार्ककिरणारुणाम् ॥ ११४ ॥
रक्तपद्मसमासीनां रक्ताभरणभूषिताम् ।
रक्तवस्त्रपरीधानां पूर्णचन्द्रनिभाननाम्[3] ॥ ११५ ॥
सैवाहमित्यभेदेन द्वैतहीनं विचिन्तयेत् ।
अद्वैतानन्दभावेन साधकः परमात्मनः ॥ ११६ ॥

१ 'भू' क. पाठः । २ 'दा' क. पाठः । ३ 'न' क. पाठः ।

छायया शोणया व्याप्तं जगदेतच्चराचरम् ।
भावनावशसंपन्नो भावयेद् भावनापर: [1] ॥ ११७ ॥
एवं चिन्तापरस्याशु सिद्धयोऽष्टौ भवन्ति हि ।
संप्राप्य विपुलान् भोगान् राज्यास्पदं च भूतले ॥
ऐन्द्रं पदमवाप्याथ विहरन् नन्दने वने ।
उर्वशीप्रमुखाभिश्च स्वेच्छया दिव्यभोग(दा?वा)न् ।
तदाप्नोति परं स्थानं दुरापं त्रिदशैरपि ।
ततश्च कवचं दिव्यं पठेदेकमना: प्रिये ॥ १२० ॥
तस्य सर्वार्थसिद्धिः स्यान्नात्र कार्या विचारणा ।
इदं रहस्यं परमं परं स्वस्त्ययनं महत् ॥ १२१ ॥
सर्वेषामेव हिंस्राणां डाकिनीनां महेश्वरि ।
निशाचरगणानां च वारणं नाशनं तथा ॥ १२२ ॥
आयुर्बलप्रदं नित्यं तुष्टिपुष्टिशुभावहम् ।
नारीणां मृतवत्सानां गुणवत्सुतदायकम् ॥ १२३ ॥
सूत्या(:) सूतिगृहस्यापि बालग्रहनिवारणम् ।
विषद(स्य?स्यु)ग्रहाणां च सदा शान्तिविवर्द्धनम् ॥
विषशस्त्राग्निरुद्राणां वारणं जयदं युधि ।
जले स्थले तथाकाशे सर्वोत्पातेषु सर्वदा ॥ १२५
त्रैलोक्यवासिनामेव सर्वमङ्गलदायकम् ।
सकृद्यस्तु पठेद् देवि कवचं देवदुर्लभम् ॥ १२६ ॥
हयमेधफलं तस्य भवत्येव न संशय: ।
नित्यं यस्तु पठेद् देवि श्रृणुयाद्वा समाहित: ॥

१ 'त:' क. पाठः ।

स सर्वांल्लभते कामान् परे देवीपुरं व्रजेत् ।
संग्रामे च जयेच्छत्रून् मातङ्गानिव केसरी ॥ १२८ ॥
दहेत् तृणं यथा वह्निस्तथा शत्रूञ्जयेत् सदा ।
नास्त्राणि तस्य शस्त्राणि शरीरे प्रभवन्ति च ॥ १२९ ॥
तद्गात्रं प्राप्य शस्त्राणि ब्रह्मास्त्राणि च यानि च ।
माल्यानि कुसुमानीव सुखदानि भवन्ति हि ॥ १३० ॥
पराः पराङ्मुखा यान्ति वि(वा?ना)युद्धेन पार्वति ।
व्याधिस्तस्य कदाचित्तु दुःखं नास्ति कदाचन ॥ १३१ ॥
गतिस्तस्यैव सर्वत्र वायोस्तुल्या सदा भवेत् ।
दीर्घायुः कामभोगी सो * धनधान्यसमृद्धिमान् ॥ १३२ ॥
जितव्याधी रूपवान् स्याद् गुणवानभिजायते ।
चातुर्वर्ग्यं करे तस्य भवत्येव न संशयः ॥ १३३ ॥
अन्यस्य वल्लभः सो † वै पुत्रदारकुलान्वितः ।
इह लोके सुखं भुक्त्वा परे मुक्तो भविष्यति ॥ १३४ ॥
न तस्य दुर्गतिर्देवि कदाचिदपि जायते ।
दुर्ग्रहाः सुग्रहा यान्ति वशं गच्छन्ति मानवाः ॥ १३५ ॥
न तस्य विघ्नो भवति न शोको भुवि जायते ।
वेतालाश्च पिशाचाश्च राक्षसाश्च भयानकाः ॥ १३६ ॥
ते सर्वे विलयं यान्ति कवचस्यास्य कीर्त्तनात् ।
तस्यैव शत्रवो देवि चिन्तामात्रप्रयोगतः ॥ १३७ ॥
विनश्यन्ति न संदेहो योगिन्यो भक्षयन्ति तान् ।

---

* ऐशः पाठः । † ऐशः पाठः ।

शान्तिकादीनि कर्माणि मारणोच्चाटनानि च ॥ १३८ ॥
वचोमात्रेण देवेशि तस्य सिध्यन्ति भूतले ।
न पापैर्लिप्यते देवि महोग्रैस्तु सुदारुणैः ॥ १३९ ॥
न कालस्य वशं गच्छेन्न जरा नच दुःखिता ।
तत्र देशे न दुर्भिक्षं नच मारी प्रवर्त्तते ॥ १४० ॥
न रोगास्तत्र जायन्ते नोत्पाताः प्रभवन्ति च ।
विविधाश्चैव योगिन्यस्तस्य साधक * संनिधौ ॥ १४१ ॥
शान्तिं चैव प्रयच्छन्ति रक्षन्ति पुत्रवत् सदा ।
सर्वदा च सुखप्राप्तिः सर्वतीर्थफलं लभेत् ॥ १४२ ॥
नानेन सदृशः कश्चित् साधको भुवि जायते ।
सुरासुरमनुष्याणां तत्त्वरूपः सुखावहः ॥ १४३ ॥
येन विज्ञातमात्रेण[1] स्मृतेनैव च सुन्दरि ।
अक्षयांल्लभते कामान् मुक्तिस्थानं च गच्छति ॥ १४४ ॥
सर्वलक्षणहीनोऽपि स्मरणात् कलुषापहः[2] ।
अहो कवचमाहात्म्यं पठमानस्य नित्यशः ॥ १४५ ॥
विनापि योगचर्येण योगिनां समतां व्रजेत् ।
भूर्जत्वचि समालिख्य चक्रं तत्त्वविनिर्मितम् ॥ १४६ ॥
मध्येत्रिकोणं संलिख्य साध्यसाधकयोर्लिपिम् ।
तदूर्ध्वे मूलमन्त्रं च मातृकार्णेन वेष्टयेत् ॥ १४७ ॥
अगुरुद्रवमिश्रेण चन्दनेन सुगन्धिना ।
एतद्यन्त्रं महादेवि सुरासुरसुदुर्लभम् ॥ १४८ ॥

---

* विभक्तिलोप ऐशः । १ 'न' क. पाठः । २ 'कुल' क. पाठः ।

रोचनाकुङ्कुमेनैव तद्वाह्ये कवचं लिखेत्।
श्वेतसूत्रेण संवेष्ट्य लाक्षया परिवेष्टयेत् ॥ १४९ ॥
पञ्चामृतैः पञ्चगव्यैः स्नपयित्वा[1] शुभेऽहनि।
संपूज्य देवीरूपां तां गुटिकां सर्वकामदाम् ॥ १५० ॥
प्राणप्रतिष्ठामन्त्रेण[2] प्राणांस्तत्र निवेशयेत्।
चारुणा शातकुम्भेन भूषितां योनिमुद्रया ॥ १५१ ॥
अन्तर्योनिं ततो ध्यात्वा तत्र संस्थापयेद् बुधः।
एषा तु गुटिका देवि कण्ठलग्ना धनप्रदा ॥ १५२ ॥
शीर्षे वश्यक(रे?री) देवि कट्यां स्तम्भनकारिणी।
बद्धा वामभुजे चैषा वैरिपक्षविनाशिनी ॥ १५३ ॥
जठरे रोगशमनी पुत्रदा हृदि संस्थिता।
विद्याकरी ललाटस्था शिखायां तु यशःप्र(दः?दा) ॥ १५४ ॥
दक्षिणे बाहुमूले वै यदि तिष्ठति सर्वदा।
तदा सर्वार्थसिद्धिः स्याद्यद्यन्मनसि वर्त्तते ॥ १५५ ॥
सत्यं सत्यं पुनः सत्यं सत्यं सत्यं पुनः पुनः।
न शक्नोमि प्रभावं हि[3] कथितुं * कवचस्य वै ॥ १५६ ॥
एतत्तु कवचेनैव पठनं साधनं प्रिये।
कथितं मे तव स्नेहाद् गोपनीयं सदा प्रिये ॥ १५७ ॥

---

इति श्रीगन्धर्वतन्त्रे पार्वतीश्वरसंवादे महात्रिपुरसुन्दरीत्रैलोक्यमोहनाख्यं कवचं नाम चतुर्थः पटलः ॥ ४ ॥

---

१ 'स्ना' क. पाठः। २ 'मात्रे' क. पाठः। ३ 'तं' क. पाठः।
* अयं णिजलोपे ऐशः पाठः।

# पञ्चमः पटलः ।

पार्वत्युवाच

विना यन्त्रेण चेत् पूजा देवता न प्रसीदति ।
तस्मात् कथय देवेश यन्त्रमस्या मनोहरम् ॥ १॥
यस्य दर्शनमात्रेण दारिद्र्यं नश्यति ध्रुवम् ।

ईश्वर उवाच ।

सैवमालोच्य सर्गादौ सच्चिदानन्दरूपिणी ॥ २॥
समस्ततत्त्वसंयोगात् स्मृत्यधिष्ठानरूपिणी ।
व्यक्तीकरोति नित्या(वः?या)प्रकृतिः परमः पुमान् ॥
सा तत्त्वसंज्ञा चिन्मात्रा[2]ज्ज्योतिषः संनिधेस्तथा ।
विचिकीर्षुर्योनिभूता क्वचिदभ्येति बिन्दुना ॥ ४॥
अतिव्यक्ता पराशक्तिरविनाभावलक्षणा ।
अखण्डपरचिच्छक्तिर्व्याप्ता चिद्रूपिणी विभुः ॥ ५
समस्ततत्त्वभावेन विवर्ते(त्सा?च्छा)समन्विता ।
प्रयाति बिन्दुभावं च क्रियाप्राधान्यलक्षणम् ॥ ६
बैन्दवं मातृचक्रस्य त्रिरूपत्वं पुनर्भवेत् ।
बिन्दुः शिवात्मकस्तत्र बीजं शक्त्यात्मकं स्मृतम्
तयोर्योगे भवेन्नादस्तेभ्यो यच्चिन्तयाम्यहम् ।
तस्मात् तानि च चक्राणि तत्प्रकारः प्रकथ्यते ॥
ततः प्राङ्मुख आसीनश्चक्रोद्धारं समारभेत् ।
हेमरूप्यादिताम्राणां पट्टे चातिमनोहरे ॥ ६ ॥

'त्त्व' क. पाठः । २ 'त्रा ज्यो' क. पाठः ।

चतुरस्त्रे समे शुद्धे मध्योच्छूनविभूषिते ।
युग्माङ्गमिलितं देवि पट्टस्येह समीरितम् ॥ १० ॥
अथवा परमेशानि भूमौ चक्रं समालिखेत् ।
हस्तमात्रमिते शुद्धे गोमयेनोपलेंपिते ॥ ११ ॥
सिन्दूररजसा तत्र कुङ्कुमेनाथ वा प्रिये ।
आलिखेच्चक्रराजं च लेखन्या हैमया तथा ॥ १२ ॥
अथवा कुशमूलेन दर्भपाणिः समाहितः ।
नेत्ररम्यं यथा चक्रं तथा कुर्याद्विचक्षणः ॥ १३ ॥
प्रतीच्यग्रं लिखेदेकं त्रिकोणं तदुपर्यथ ।
पूर्वत्रिकोणमध्याग्रं त्रिकोणान्तरमालिखेत् ॥ १४ ॥
अथ संधिद्वयं भित्त्वा प्रागग्रं विलिखेत् परम् ।
त्रिकोणमध्यगं चक्रमष्टकोणं तथा भवेत् ॥ १५ ॥
ततो दशारचक्रस्य निर्माणं शृणु पार्वति ।
दक्षिणोत्तरगा रेखास्तिस्रो यास्तत्र तास्वपि ॥ १६ ॥
मध्यरेखां परित्यज्य रेखे द्वे परिवर्धयेत् ।
तेन षट्कोणकं कृत्वा संधिभेदे चतुष्टयम् ॥ १७ ॥
कृत्वा रेखाद्वयं कुर्याद् दशकोणं यथा भवेत् ।
तथान्यदशकोणस्य निर्माणं परिकीर्त्यते ॥ १८ ॥
दक्षिणोत्तरगास्त्वेवं रेखाः पञ्च भवन्ति याः ।
तासां रेखा(द्व?त्र)यं मध्ये हित्वा पूर्वापरं तु तत् ॥ १९ ॥
बाह्यरेखाद्वयं देवि पूर्ववत् परिवर्धयेत् ।

'लि' क. पाठः । 'र्द्धं' क. पाठः ।

तेन षट्कोणकं कृत्वा संधिभेदचतुष्टयम् ॥ २० ॥
कृत्वा रेखाद्वयं कुर्याद् दशकोणं यथा भवेत् ।
चतुर्दशारचक्रस्य निर्माणं कथ्यतेऽधुना ॥ २१ ॥
दक्षिणोत्तरगास्त्वेवं रेखाः सप्त भवन्ति याः ।
तासां रेखा(द्व?त्र)यं हित्वा बाह्ये पूर्वापरं ततः ॥
दीर्घं रेखाद्वयं मन्त्री पूर्ववत् परिवर्धयेत्[1] ।
तेन षट्कोणकं कृत्वा संधिभेदचतुष्टयम् ॥ २३ ॥
दशारीकृत्य तेनैव संधिभेदचतुष्टयात् ।
रेखाद्वयं बहिः कुर्याद्रेखाः स्युर्नव चैवं[2] वै ॥ २४
कल्पयेदथ तस्याग्रैरन्यकोणचतुष्टयम् ।
एवं चतुर्दशारं स्याद्विलोचनमनोहरम् ॥ २५ ॥
एवं निष्पादिते चक्रे यद्भवति च तच्छृणु ।
मध्ये त्रिकोणमेव स्यात् तन्मध्ये बिन्दुरिष्यते ॥ २
चतुर्णामपि चक्राणां बहिरग्रास्त्रिकोणकाः ।
त्रिचत्वारिंशच्च गुणिता योनयोऽष्टौ च शोभनाः ॥ २
मत्स्या द्वादश संपन्नाश्चतुष्कोणोपशोभिताः ।
ग्रन्थयोऽष्टादशापि स्युः षट्पथा ग्रन्थयोऽपरे ॥ २८
चतुर्विंशतिसंख्याताः शोभनास्ते चतुष्पथाः ।
अष्टकोणकगर्भं तु चतुष्कोणत्रयं तथा ॥ २९ ॥
दक्षिणोत्तरपूर्वासु दिक्षु संभवति क्रमात् ।
दक्षिणोत्तरगास्तत्र नव रेखा भवन्ति हि ॥ ३० ॥

---

१ 'र्द्धं' क. पाठः । २ 'मेन' क. पाठः ।

नव रेखास्तथैवान्या वह्निवायुदिगायताः ।
नव रेखास्तथैवान्या नैर्ऋतेशदिगायताः ॥ ३१ ॥
तत्र ये पञ्च देवेशि साधकाभिमुखाग्रकाः ।
त्रिकोणास्ते शक्तयः स्युः पञ्च (ने?त)त्र शुभोदयाः ॥३२॥
पूर्वाग्रा ये तु चत्वारो वह्नयस्ते प्रकीर्त्तिताः ।
एवं चक्रं विनिर्माय बाह्ये वृत्तं विलिख्य च ॥ ३३ ॥
तेनाष्टदलपद्मस्य निर्माणं तद्बहिस्तथा ।
वृत्तेन षोडशदलं लिखेत् पद्मं मनोहरम् ॥ ३४ ॥
वृत्तत्रयं तु तद्बाह्ये तद्बाह्ये चतुरस्रकम् ।
त्रिरेखं भूपुरं विद्धि चतुर्द्वारोपशोभितम् ॥ ३५ ॥
एवं भवन्ति चक्राणि बिन्दुनैव नव क्रमात् ।
वृत्तत्रयं महेशानि न पूजायां निगद्यते ॥ ३६ ॥
एवमेतस्य चक्रस्य प्रभावो वर्णि(तं?तुं) मया ।
न शक्यते महेशानि कल्पकोटिशतैरपि ॥ ३७ ॥
एवमेतन्महाचक्रं महाश्रीत्रिपुरामयम् ।
यन्त्रं शरीरमित्याहुर्मन्त्रं ज्ञानमखण्डितम् ॥ ३८ ॥
शरीरं त्रिविधं प्राहुर्भौतिकं च मनोमयम् ।
परं ज्ञानमयं नित्यं यदनाशि निरन्तरम् ॥ ३९ ॥
मुद्रां भौतिकमित्याहुर्यन्त्रं विद्धि मनोमयम्[2] ।
मन्त्रं ज्ञान[3]मयं विद्धि एवं त्रिधा वपुर्भवेत् ॥ ४० ॥
मुद्राशरीरं मे (ब्रूहि?विद्धि) अङ्गभूतं तथा परम् ।

---

१ क. एतत् पद्यार्धं नास्ति। २ 'हरम्' क. पाठः। ३ 'काम' क. पाठः।

योनिभूता महामुद्रा शरीरमिति कीर्तितम् ॥ ४१ ॥
तस्या रससमुत्पन्नाः कामेश्वर्यादिकास्तथा ।
बिन्दुचक्रं वरारोहे सर्वानन्दमयं प्रिये ॥ ४२ ॥
संविद्रूपं महाचक्रं ज्ञेयं ब्रह्मस्वरूपकम् ।
ततः परं शिवाङ्कस्थां महात्रिपुरसुन्दरीम् ॥ ४३ ॥
समावाह्य यजेद्देवीं परयाथ सपर्यया ।
अग्नीशासुरवायव्यमध्ये दिक्षु च पार्वति ॥ ४४ ॥
षडङ्गयुवतीः † पश्चात् पूजयित्वा विधानतः ।
तन्मयीश्चाथ नित्याश्च यजेत् सौभाग्यकामुकः ॥ ४५
महात्र्यस्त्रं स्मरेत् तत्र पञ्चदशक[2]लात्मकम् ।
वामावर्तक्रमेणैव कलाः पञ्चदश क्रमात् ॥ ४६ ॥
अकाराद्यां[3]मुकारान्तां[4] दक्षिणस्यां विचिन्तयेत् ।
ततश्च पूर्वरेखायां दीर्घकर्णादि ‡ पञ्चकम् ॥ ४७ ॥
विचिन्त्योत्तररेखायां शक्त्या(सी?दि) * परिचिन्तयेत्
कामेश्वर्यादिकानित्यास्तथैव परिपूजयेत् § ॥ ४८ ॥
प्रतिपत्तिथिमारभ्य पौर्णमास्यन्तमद्रिजे ।
एकैकां पूजयेन्नित्यां तत्तत्तिथिक्रमेण तु ॥ ४९ ॥
आदावेकैकवृद्ध्या तु यजेत् साधकसत्तमः ।

---

१ 'द्व' ख. पाठः । २ 'का' ख. पाठः । ३ 'द्या उ' ख. पाठः । ४ 'न्ता' ख.

† सर्वज्ञादिशक्तीः । ‡ ऊकारादि । * एकारादि । § नित्या यथा १ का
२ भगमालिनी ३ नित्यक्लिन्ना ४ भेरुण्डा ५ वह्निवासिनी ६ वज्रेश्वरी ७ शि
८ त्वरिता ९ कुलसुन्दरी १० नित्या ११ नीलपताका १२ विजया १३ सर्व
१४ ज्वालामालिनी १५ चित्रा ॥ ह्रीं श्रीं अं कामेश्वरीनित्याश्रीपादुकां पूजयामि त
नम इत्येवं वामावर्तेन संपूजयेत् ।

कृष्णपक्षे महेशानि पूजयेत्तु त्रिमण्डलम् ॥ ५० ॥
विचित्राद्या वरारोहे यावत् कामेश्वरी भवेत् ।
पूजनीया विलोमेन वान्या(ः) तथैव पार्वति ॥ ५१ ॥
उभयोः पक्षयोरन्ते यथोक्तध्यानयोगतः ।
(स्व?स)र्गस्थां षोडशीं नित्यां महात्रिपुरसुन्दरीम् † ॥५२॥
तत्तद्विद्यास्तथा ध्यानं यन्त्राणि पूजनानि तु ।
होमान्यन्यानि सर्वाणि काम्यानि च वरानने ॥ ५३ ॥
पटलैः पञ्चसंख्यैस्तु पश्चात् वक्ष्याम्यहं शिवे ।
अत्राङ्गावृतिभूतानां शृणु पूजां वरानने ॥ ५४ ॥

ईश्वर उवाच

तत्र तत्र महेशानि समावाह्य विधानतः ।
पूजयेत् साधको भक्त्या य(दो?थो)क्तक्रमवर्त्म(का?ना)।५५।
मूलाद्येनैव तत्राद्यां हंसेन पुटितेन तु ।
द्वितीयेन द्वितीयां च तृतीयेन तृतीयकाम् ॥ ५६ ॥
चतुर्थेन चतुर्थीं च पञ्चमेनैव पञ्चमीम् ।
षष्ठेन तु तथा षष्ठीं सप्तमेन तु सप्तमीम् ॥ ५७ ॥
अष्टमेनाष्टमीं चैव नवमीं नवमेन तु ।
दशमीं दश(मी?मे)नैव एकादशीं तथैव हि ॥ ५८ ॥
एकादशाक्षरेणैव द्वादशीं द्वादशेन तु ।
त्रयोदशीं च तत्रैव त्रयोदशाक्षरेण तु ॥ ५९ ॥
चतुर्दशाक्षरेणैव यजेत् तत्र चतुर्दशीम् ।
पञ्चदशाक्षरेणैव यजेत् पञ्चदशीं ततः ॥ ६० ॥

---

१ 'सस्' ख. पाठः । † पूजयेदिति शेषः ।

समस्तेन तथा देवि षोडशीं परिपूजयेत् ।
आदावन्ते च मध्ये च सपर्या खलु पार्वति ॥ ६१ ॥
महादेव्याः समाख्याता नित्यैव विहितागमे ।
तामेव पूजयेद्वापि महात्रिपुरसुन्दरीम् ॥ ६२ ॥
यतस्तस्याः समुत्पन्नं नित्यामण्डलमीदृशम् ।
अथान्यत् संप्रवक्ष्यामि काम्यं कामार्थसिद्धये ॥ ६३ ॥
यथोक्तां कुलजां शस्तां चारुलक्षणलक्षिताम् ।
स्वेच्छाऋतुमतीं पूर्ण[2]यौवनाच्छ[3]न्नशैशवाम् ॥ ६४ ॥
तत्राद्य[1]दिवसे देवीं पूजयित्वा यथाविधि ।
यजेत् कामेश्वरीमाद्यां द्वितीयां द्वितीये तथा ॥ ६५ ॥
तृतीयेऽथ तृतीयां च चतु[4]र्थे च चतुर्थिकाम् ।
पञ्चमे पञ्चमीं चैव षष्ठीं षष्ठे तथाहनि ॥ ६६ ॥
सप्तमे सप्तमीं चैव अष्टमीमष्टमेऽहनि ।
नवमे नवमीं देवीं दशमे दशमीं तथा ॥ ६७ ॥
एकादशीं तथा रुद्रे द्वादशीं द्वादशेऽहनि ।
त्रयोदशदिने देवीं त्रयोदशीं क्रमेण तु ॥ ६८ ॥
चतुर्दशीं तथा शक्रे पञ्चदशीं ततो यजेत् ।
षोडशीं षोडशे पूर्णे यजेद् (बु?वृ)द्धिक्रमेण तु ॥ ६९ ॥
अन्याश्चैव यजेत् पश्चादपरं यत् प्रकीर्तितम् ।
षोडशर्तुनिशाः स्त्रीणां तासु क्रमोत्क्रमाद् यजेत् ॥ ७० ॥
यथाविधि क्रमेणैव न दिनं व्यतिलङ्घयेत् ।

---

१ 'आद्या' क. पाठः । २ 'र्णां' क. पाठः । ३ 'च्छादितशै' क. पाठः ।
४ 'र्थीं' क. पाठः ।

नैव विसर्जयेत् तां तु यावत्सा[1] स्यात् फलार्थिनी ॥ ७१ ॥
फलार्थिनीं विदित्वैव विसृज्यान्यां समाश्रयेत् ।
निशाः षोडश संयुक्ताः षोडश शक्तयस्तथा ॥ ७२ ॥
एकस्मिन् दिवसे देवि लभ्यन्ते भाग्ययोगतः ।
पूजयेत्ताः प्रयत्नेन यथावत् पूर्वसूचिताः ॥ ७३ ॥
रात्रौ वृद्ध्या दिने हान्या रसे मध्ये स्थितो बली ।
ऋतुमेकं क्रमेणैव स भवेत् सुरपादपः ॥ ७४ ॥
विमलाजयिनीमध्ये गुरवः * कथितास्तु ते ।
त्रैलोक्यमोहने चक्रे बुद्धं च परिपूजयेत् ॥ ७५ ॥
ब्रह्मविष्णुशिवाख्यास्तास्तिस्रो रेखाश्च तन्निभाः ।
तत्रादौ ब्रह्मरेखायामणिमाद्याः † स्थिताः प्रिये ॥ ७६ ॥
वराभयकरा रक्ताः समीहितफलप्रदाः ।
कौमारी पीतवर्णा च शक्तितोमरधारिणी ॥ ७७ ॥
वरदाभयहस्ता च ध्यातव्या परमेश्वरी ।
अङ्कुशं तोमरं विद्युत्कुलिशौ बिभ्रती करैः ॥ ७८ ॥
इन्द्राणी गौरवर्णा च ध्येया सर्वसमृद्धिदा ।
वैष्णवी श्याववर्णा च शंखचक्रवराभयान् ॥ ७९ ॥
हस्तपद्मैश्च बिभ्राणा दिव्यभूषणभूषिता ।
वाराही श्यामवर्णा च पोत्रिवक्त्रसमन्विता ॥ ८० ॥
हलं च मुसलं[2] खड्गं खेटकं दधती करैः ।

---

१ 'स्या' क. पाठः । २ 'प' क. पाठः । * अष्टारचक्रे गुरुक्रमसपर्या बोध्येति सूच्यते ।
† अणिमा–लघिमा–महिमा–ईशित्व–प्राकाम्य–भुक्तिसिद्धि–इच्छासिद्धि–रससिद्धि–मोक्षसि-
द्धय इत्येता ब्रह्मरेखायां पूज्याः ।

चामुण्डा कृष्णवर्णा च शूलं डमरुकं तथा ॥ ८१

खड्गं वेतालकं चैव दधाना दक्षिणैर्भुजैः ।

खेटकं चषकं[1] चैव नागं घण्टां च वामकैः ॥ ८२

ब्रह्माणीप्रमुखाः * सर्व(ा) विष्णुरेखा समाश्रिताः

ब्रह्माणी रक्तवर्णा च चतुर्भिः शोभिता मुखैः ॥

वरदाभयहस्ता च कुण्डिका[2]क्षलसत्करा ।

माहेश्वरी श्वेतवर्णा त्रिनेत्रा शूलधारिणी ॥ ८४ ॥

कृपाणमे(नं?णं) परशुं दधाना पाणिभिः प्रिये ।

भेदमस्याः परं गुह्यं संक्षेपात् कथ्यं[3]तेऽधुना ॥ ८५

महालक्ष्मीस्तु पीताभा पद्मे दर्पणमेव च ।

मातुलुङ्गफलं चैव दधाना परमेश्वरी ॥ ८६ ॥

शिवरेखां समाश्रित्य संक्षोभणयादिकाः § स्थिताः

रक्ताः संक्षोभणीमुख्याः स्वस्वमुद्राकरान्विताः ॥ ८

एताः प्रकटयोगिन्यो ध्येयाः सर्वसमृद्धये ।

अणिमापुरतो देवि त्रिपुरा चक्रनायिका ॥ ८८ ॥

शुद्धस्फटिकसंकाशा मुक्तारत्नविभूषिता[4] ।

पुस्तकं चाक्षमालां च कमलद्वयमुत्तमम् ॥ ८९ ॥

बिभ्रती सिद्धये ध्येया महापातकनाशिनी ।

त्रिवृत्तं‡चन्द्रसूर्याग्निस्वरूपं विद्धि पार्वति ॥ ९० ॥

---

१ 'स' क. पाठः । २ 'ण्ड' क. पाठः । ३ 'थिता' ख. पाठः । ४ 'ताः' क.

* ब्रह्माणी–माहेश्वरी कौमारी–वैष्णवी–वाराही–इन्द्राणी–चामुण्डा–महालक्ष्म मध्यमायां विष्णुरेखायां पूज्याः । § संक्षोभण्यादयो मुद्रादेव्यः प्रकटयोगिन्य ह्ने चक्रे चतुरस्ररेखात्मके शिवरेखायां संपूज्याः ।

‡ वृत्तत्रयं महेशानि न पूजायां निगद्यते (२।३६) इत्युक्त्या पूजायां नोपयुज्यते

सर्वाशापूरके चक्रे रविवेददलान्विते ।
ब्रह्माणं चिन्तयेत्तत्र स्रवत्पीयूषवर्षिणिं[1] ॥ ६१ ॥
कामाकर्षणिकाद्यास्तु षोडशस्वरसंयुताः ।
[2]सृणिपाशधराः सर्वा रूपेणापीह तत्समाः ॥ ६२ ॥
एतास्तु गुप्तयोगिन्यो * ध्येयाः सर्वसमृद्धिदाः ।
कामाकर्षणिकाग्रे तु त्रिपुरेशी व्यवस्थिता ॥ ६३ ॥
त्रिपुरासदृशी ध्येया त्रिपुरेशी वरानने ।
अष्टपत्रं वरारोहे जपाकुसुमसंनिभम् ॥ ६४ ॥
सर्वसंक्षोभ(नं?णं) नाम सर्वकामफलप्रदम् ।
चिन्तयित्वा शिवं तत्र वर्गाष्टकसमन्विताः ॥ ६५ ॥
अनङ्गकुसुमाद्यास्तु स्मृता गुप्ततराश्च ‡ ताः ।
सुन्दरीसदृशाः सर्वाः सर्वकामफलप्रदाः ॥ ६६ ॥
अनङ्गकुसुमाग्रे तु ध्येया त्रिपुरसुन्दरी ।
सर्वालङ्कारसंपन्ना पुस्तकं चाक्षमालिकाम् ॥ ६७ ॥
वराभयौ च दधती बन्धूककुसुमप्रभा ।
सर्वसौभाग्यदे चक्रे दाडिमीकुसुमप्रभे ॥ ६८ ॥
चतुर्दशारके देवि भास्करं परिचिन्तयेत् ।

---

१ 'र्पिते' ख. पाठः । २ 'शृ' क. पाठः ।

* ता यथा कामबुद्ध्यहंकारशब्दस्पर्शरूपरसगन्धचित्तधैर्यस्मृतिनामबीजात्मामृतशरीराकर्षण्यः इति गुप्तयोगिन्यः सर्वाशापरिपूरके षोडशदलचक्रे संपूज्याः ।

‡ यथा अनङ्गकुसुमानङ्गमेखलानङ्गमदनानङ्गमदनातुरानङ्गरेखानङ्गवेगिन्यनङ्गाङ्कुशानङ्गमालिनीति एता गुप्ततरयोगिन्यः सर्वसंक्षोभकारकेऽष्टदलचक्रे संपूज्याः ।

सर्वसंक्षोभणीमुख्याः † संप्रदायाः स्मृता इमाः ॥
सर्वसंक्षोभणीशक्तेः[1] पुरस्त्रिपुरवासिनी ।
सुन्दर्याः सदृशी ध्येया सर्वकामफलप्रदा ॥ १०० ॥
सर्वार्थसाधके चक्रे सर्वरक्षाकरे तथा ।
बाह्यारदशकोणे च जपाकुसुमसन्निभे ॥ १०१ ॥
नारायणं प्रपूज्याथ बाह्यारदशके ततः ।
सर्वसिद्धिप्रदामुख्याः कुलकौला ‡ इमाः स्मृताः ॥
सर्वसिद्धिप्रदाग्रे तु त्रिपुरा[2]श्रीर्व्यवस्थिता ।
उद्यद्भानुसहस्राभा दिव्यालंकारभूषिता ॥ १०३ ॥
पुस्तकं जपमालां च दधती वरदाभये ।
अन्तर्दशारचक्रे च पूज्याः सर्वसमृद्धिदाः ॥ १०४
तथा निग[र्व?र्भ]योगिन्यः सर्वज्ञा[3]प्रमुखाः * प्रिये
सर्वज्ञापुरतो देवि स्थिता त्रिपुरमालिनी ॥ १०५ ॥
इन्द्रगोपप्रभा देवी पाशाङ्कुशकपालिनी ।
महाभीति[ह?क]रा सम्यक् साधकानां क्षणादियम् ॥

---

१ 'क्ति' क. पाठः । २ 'र' ख. पाठः । ३ 'ज्ञा' क. पाठः ।

† सर्वसंक्षोभिणी–सर्वविद्राविणी–सर्वाकर्षिणी–सर्वाह्लादिनी–सर्वमोहिनी–सर्वस्तम्भ सर्वजृम्भिणी–सर्ववशङ्करी–सर्वरञ्जनी–सर्वोन्मादिनी–सर्वार्थसाधनी–सर्वसंपत्पूरणी–सर्व यी–सर्वद्वन्द्वक्षयंकरीत्येताः संप्रदाययोगिन्यः सर्वसौभाग्यदायके चतुर्दशारचक्रे पूज्याः

‡ सर्वादयः सिद्धिप्रदा–संपत्प्रदा–प्रियंकरी–मङ्गलकारिणी–कामप्रदा–दुःखविमोचिनी प्रशमनी–विघ्नविनाशिनी–अङ्गसुन्दरी–सौभाग्यदायिनी–इत्येताः कुलकौलयोगिन्यः स धके बहिर्दशारचक्रे पूज्याः ।

* सर्वज्ञा–सर्वशक्ति–सर्वैश्वर्यप्रदा–सर्वज्ञानमयी–सर्वव्याधिविनाशिनी–सर्वाधारस्वरू र्वपापहरा–सर्वानन्दमयी–सर्वरक्षास्वरूपिणी–सर्वेप्सितफलप्रदा–इत्येता निगर्भयोगिन्यः रक्षाकरेऽन्तर्दशारचक्रे पूजनीयाः ।

सर्वरोगहरे चक्रे बालार्ककिरणारुणी[1] ।
वशिनीप्रमुखास्तत्र रहस्ययोगिनीर्यजेत् ॥ १०७ ॥
वशिनीप्रमुखाश्चारक्ता वराभयकरान्विताः ।
पुस्तकं जपमालां च दधानाः परमेश्वरि ॥ १०८ ॥
वशिनीपुरतो देवि सर्वसिद्धिप्रदायिनीम् ।
तथा त्रिपुरसिद्धां च ध्यायेद्विषविनाशिनीम् ॥ १०९ ॥
त्रिकोणाग्रविभागस्य दक्षिणे वामके प्रिये ।
चतुष्पथसमायुक्ते बाणचापौ प्रपूजयेत् ॥ ११० ॥
त्रिकोणस्योर्ध्वभागस्य वामदक्षिणयोस्तथा ।
षडध्वरूपयोर्देवि पाशाङ्कुशौ व्यवस्थितौ ॥ १११ ॥
सर्वसिद्धिप्रदे चक्रे त्रिकोणे परमेश्वरि ।
उद्यत्सूर्यसहस्राभे बन्धूककुसुमप्रभे ॥ ११२ ॥
अतिरहस्ययोगिन्यः संस्थिता वीरवन्दिते ।
अग्रकोणे अग्निचक्रे कामरूपे वरानने ॥ ११३ ॥
कामेश्वरी त्रिनेत्रा च तरुणारुणविग्रहा ।
चषकं[2] वरदानं च पाशं चाङ्कुशमेव च ॥ ११४ ॥
दधती परमेशानि ध्येया रुद्रात्मशक्तिका ।
वामकोणे त्रिकोणस्य सूर्यचक्रे महेश्वरि ॥ ११५ ॥
जालन्धरे महापीठे वज्रेश्वरी समीरिता ।
त्रिनेत्रा पूर्णचन्द्रास्या बन्धूककुसुमप्रभा ॥ ११६ ॥

---

1 'लक' क. पाठः । 2 'स' क. पाठः ।

* वशिनी-कामेश्वरी-मोदिनी-विमला-अरुणा-जयिनी-सर्वेश्वरी-कौलिनी-वाग्देवता रहस्ययोगिन्यः सर्वरोगहरे वसुकोणचक्रे संपूज्याः ।

पाशाङ्कुशौ शरांश्चापं चषकं मातुलुङ्गकम् ।
दधती चारुरूपा सा ध्येया विष्ण्वात्मशक्तिका ॥
दक्षकोणे त्रिकोणस्य (लो?सो)मचक्रे वरानने ।
पूर्णगिर्यालये देवि कथिता भगमालिनी ॥ ११८ ॥
त्रिनेत्रा तरुणेन्दुमस्ता सिन्दूरारुणविग्रहा ।
पुस्तकं जपमालां च पाशाङ्कुशकमेव च ॥ ११९ ॥
दधती परमेशानी ध्येया ब्रह्मात्मशक्तिका ।
कामेश्वरी पुरोभागे त्रिपुरा(म्ना?म्बा) व्यवस्थिता ॥
मालिनीसदृशी ध्येया सर्वकामफलप्रदा ।
अथवा रश्मयः सर्वा देवीरूपेण चिन्तयेत् ॥ १२१
नवावरणशक्तीनां ध्यानं देव्याः समं यतः ।
निःसरन्ति यथा नित्यं सूर्यबिम्बान्मरीचयः ॥ १२
देव्यस्तथा समुत्पन्ना महादेव्याः शरीरतः ।
उड्याणपीठके देवि ब्रह्मचक्रे वरानने ॥ १२३ ॥
परापररहस्याख्या देवी ब्रह्मस्वरूपिणी ।
चक्रेशीमपि तामेव पूजयेत् साधकोत्तमः ॥ १२४
स्थितिक्रमेण पूजेयं यन्त्रोद्धारक्रमेण तु ।
सृष्टिक्रमं महद्गुह्यं पूजनं परमेश्वरि ॥ १२५ ॥

पार्वत्युवाच

चक्रमण्डलमाख्यातं न पूजा तत्र मण्डले ।
इदानीं कथयेशान पूजाक्रममनुत्तमम् ॥ १२६ ॥

---

१ 'स' क. पाठः ।

ईश्वर उवाच ।

शृणु देवि प्रवक्ष्यामि पूजाक्रममनुत्तमम् ।
यस्य प्रबोधमात्रेण जीवन्मुक्तः प्रमोदते ॥ १२७ ॥
देव्या नित्योदिता पूजा त्रिभिर्भेदैर्व्यवस्थिता ।
[1]परा चैवापरा देवि तृतीया च परापरा ॥ १२८ ॥
चक्रमध्ये समावाह्य पू(ज?ज्य)ते द्रव्यविस्तरैः ।
प्रथमा सा समाख्याता मता पुरन्दरादिभिः ॥ १२९ ॥
मृ(दा?द्वा)सने समासीनः खगसंयमने रतः ।
समकायशिरोग्रीवो नासालोकनतत्परः ॥ १३० ॥
विकल्परूपसंजल्पविमुखो भावतत्परः ।
महापद्मवनान्तःस्थां परमानन्दरूपिणीम् ॥ १३१ ॥
आप्यायितजगद्रूपां परमामृतवर्षिणीम् ।
तत्तज्ज्ञानमये चक्रे परमात्मस्वरूपिणीम् ॥ १३२ ॥
[2]अर्धमात्रां योनिरूपां बिन्दुत्रिवलयात्मिकाम् ।
परमानन्दपुष्पेण पूजयेदात्मरूपिणीम् ॥ १३३ ॥
इन्द्रियप्रीणनैर्द्रव्यैर्विहितं स्वात्मपूजनम् ।
उत्तमेयं द्वितीया सा मया निष्पाद्यते सदा ॥ १३४ ॥
परापरा समाख्याता उभयं यत्र विद्यते ।
देवकीसूनुना चेयं निष्पाद्यते सदा प्रिये ॥ १३५ ॥

---

इति श्रीपार्वतीश्वरसंवादे गन्धर्वतन्त्रे यन्त्रोद्धारावरणशक्त्यर्चनं नाम पञ्चमः पटलः ॥ ५ ॥

---

१ 'अपरा च' क. पाठः । २ 'र्द्धं' क. पाठः ।

## षष्ठः पटलः ।

पार्वत्युवाच ।

देव्याः पूजा समाख्याता तृतीया या महेश्वर ।
कथय तां सुरश्रेष्ठ विस्तरेणाधुना प्रभो ॥ १ ॥
ज्ञानेन कर्मणा चेह देहशुद्धिर्द्विधा भवेत् ।
ज्ञानशुद्धिस्त्वया प्रोक्ता कर्मशुद्धिर्न दर्शिता ॥ २ ॥
वि(न्मु?एमू)त्रपिच्छलो देहः कथं देवमयो भवेत् ।
तन्मे वद महादेव प्रसादसुमुख प्रभो ॥ ३ ॥

ईश्वर उवाच

ज्ञानेन कर्मणा वापि सिद्धिर्भवति नान्यथा ।
ज्ञानयोगश्च वक्तव्यः कर्मयोगं शृणु प्रिये ॥ ४ ॥
ब्राह्म्ये मुहूर्ते उत्थाय साधकः स्थिरमानसः ।
पद्मासनसमासीनः प्राणायामपुरःसरः ॥ ५ ॥
ब्रह्मरन्ध्रेस्थिते पद्मे सहस्रदलशोभिते ।
विमले पूर्णचद्रस्य मण्डले चिन्तयेद् गुरुम् ॥ ६ ॥
शुद्धस्फटिकसंकाशं श्वेताभरणभूषितम् ।
तादृक्प्रसूनमाल्यादिविभूषिततनुं तथा ॥ ७ ॥
पद्मासनसमासीनं सर्वयोगिनिषेवितम् ।
वराभयकरं शान्तं द्विनेत्रं करुणामयम् ॥ ८ ॥
वामोरुगतया शक्तया रक्तया वामपाणिना ।
धारयन्त्योत्पलं दत्तहस्तेनालिङ्गितं विभुम् ॥ ९ ॥

---

१ 'तां कथय' क. पाठः । २ 'स्ता' क. पाठः । ३ 'न्ध्रे' ख. पाठः । ४ 'तं' क.

परमानन्दसंदोहसान्द्रमानसमीश्वरम् ।
आनन्दसान्द्ररक्ताक्षं स्मरेत् स्मितमुखाम्बुजम् ॥ १० ॥
❀बालाद्यं भुवनेशानी रमा चैवाथ खेचरी ।
शिवचन्द्रौ मातृकान्तं कालशक्रा(द्यु?म्बु)वह्नयः ॥ ११ ॥
वायुश्च वामकर्णेन योजिता बिन्दुनादिनः ।
[च?व]क्रं कृत्वादिमं तेषु कर्णे वामाक्षि योजयेत् ॥१२॥
शिवचन्द्रौ त्रिशूलाढ्यौ बिन्दुना परिमण्डितौ ।
चन्द्रशिवौ त्रिशूलाढ्यौ [स्व?स]र्गवन्तौ महेश्वरि ॥ २३ ॥
तस्मात् स्वगुरुनामान्ते आनन्दनाथ चालिखेत् ।
तथा शक्तिपदान्ते वै अम्बापदमतो लिखेत् ॥ १४ ॥
पादुकां पूजयामीति विधिना परिपूजयेत् ।
ं पृथिव्यात्मना ब्रह्मणा गन्धं कल्पयामि गन्धतन्मात्रात्मने
ा[ण?णे]न्द्रियाय] गन्धं गृहाण स्वाहा,
अथाङ्गुष्ठकनिष्ठाभ्यां योजयेद्गन्धमुत्तमम् ॥ १५ ॥
आकाशात्मना सदाशिवेन पुष्पं कल्पयामि शब्दतन्मात्रात्मने
ोत्रेन्द्रि(य?याय) पुष्पं गृहाण स्वाहा,
अङ्गुष्ठतर्जनीयोगं पुष्पदानं तथैव हि ।
वाय्वात्मना ईश्वरेण धूपं कल्पयामि स्पर्शतन्मात्रात्मने
गिन्द्रियाय स्पर्शं गृहाण स्वाहा,
अङ्गुष्ठमध्यमायोगं धूपदानं तथैव हि ॥ १६ ॥

---

१ 'तत्रोप' क. पाठः । ❀ बालाद्यं ऐं भुवनेशानी ह्रीं रमा श्रीं खेचरी हसखफ्रें शिवो
न्द्राः स मातृकान्तं ह कालो म शक्रो ल अम्बु व वह्निः र वायुः य वामकर्णः
वक्रमिति यथा सहखफ्रें सहक्षमलवरयीमिति । शिवचन्द्राविति ह्सौः चन्द्रशिवौ स्हौः ।

[वं?रं] वह्न्यात्मना रुद्रेण दीपं कल्पयामि रूपतन्मात्रात्
चक्षुरिन्द्रियाय रूपं गृहाण स्वाहा,

अङ्गुष्ठाभ्यां महेशानि दीपं दद्यात् समाहितः ।

वं अमृतात्मना विष्णुना नैवेद्यं कल्पयामि रसतन्मात्रात्
जिह्वेन्द्रियाय रसं गृहाण स्वाहा,

अङ्गुष्ठानामिकायोगं नैवेद्यं तत्प्रतिष्ठितम् ॥ १७ ॥
एवं कुलगुरुं देवि पूजयित्वा विधानतः ।
योनिमुद्रां प्रदर्श्याथ प्रणमेत् सिद्धिहेतवे ॥ १८ ॥
नमस्ते भगवन्नाथ शिवाय गुरुरूपिणे ।
विद्यावतारसंसिद्ध्यै स्वीकृतानेकविग्रह ॥ १९ ॥
नवाय नवरूपाय परमात्मैकरूपिणे ।
सर्वाज्ञानतमोभेदभानवे चिद्घनाथ ते ॥ २० ॥
स्वतन्त्राय दया[तृ?क्लृ]प्तविग्रहाय शिवात्मने ।
परतन्त्राय भक्तानां भव्यानां भव्यरूपिणे ॥ १२ ॥
विवेकिनां विवेकाय विम[र्षा?र्शा]य विम[र्ष?र्शि]न
प्रकाशिनां प्रकाशाय ज्ञानिनां ज्ञानरूपिणे ॥ २२
पुरस्तात् पार्श्वयोः पृष्ठे नमस्कुर्यामुपर्यधः ।
सदा सच्चित्तरूपेण विधेहि भवदासनम् ॥ २३ ॥
अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया ।
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥ २४ ॥
नमोऽस्तु गुरवे तुभ्यं ब्रह्मविष्णुशिवात्मने ।

१ 'यःचि०' ख. पाठः ।

अविद्याग्रस्तसंसारसागरोत्तारहेतवे ॥ २५ ॥
गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः ।
गुरुरेव परं ज्ञानं गुरुरेव परं तपः ॥ २६ ॥
अतः सर्वत्र देवेशि गुरुपूजा गरीयसी ।
अन्यदेवसपर्या वा चान्यदेवस्य कीर्तनम् ॥ २७ ॥
गुरुदेवं विना देवि तदग्रे क्रियते यदि ।
तदा नरकमाप्नोति सत्यमेतद्वदाम्यहम् ॥ २८ ॥
पूजिते गुरुपादे वै सर्व[देवः?दैव]सुखी भवेत् ।
सर्वेषां मन्त्रतन्त्राणां पितासौ यः सदाशिवः ॥ २९ ॥
यस्य भक्तिर्गुरौ नित्यं वर्तते देववत् प्रिये ।
तस्य सर्वार्थसिद्धिः स्यान्नान्यथा खलु पार्वति ॥ ३० ॥
गुरुपादरजो मूर्ध्नि ध्यात्वा कर्म समारभेत् ।
ब्रह्मरन्ध्रे सहस्रारे कर्पूरधवलो गुरुः ॥ ३१ ॥
वराभयकरो नित्यो ब्रह्मरूपी सदानघः ।
जागर्ति परमेशानि निजस्थानप्रकाशकः ॥ ३२ ॥
कुलनाथं परित्यज्य ये शाक्ताः प[रि?र]सेविनः ।
तेषां दीक्षा च यागश्च ह्यभिचाराय कल्पते ॥ ३३ ॥
तस्मात् सर्वप्रयत्नेन कुलीनं गुरुमाश्रयेत् ।
कुलीनः सर्वविद्यानामधिकारीति गीयते ॥ ३४ ॥
दीक्षाप्रभुः स एवात्र सर्वतन्त्रेषु नापरः ।
गुरुमण्डलपूजां तु कुर्यात् सप्तसु पर्वसु ॥ ३५ ॥

१ 'ल्प्य' क. पाठः ।

देव्युवाच

विना योगं न सिध्येत[1] कुण्डलीचङ्क्रमः प्रभो ।
मूलपद्मे कुण्डलिनी यावन्निद्रायिता प्रभो ॥ ३६ ॥
तावन्न किंचित् सिध्येत[2] मन्त्रयन्त्रार्चनादिकम् ।
जागर्ति यदि सा देवी बहुभिः पुण्यसंचयैः ॥ ३७
तदा प्रसादमायान्ति मन्त्रयन्त्रार्चनादयः ।
शिववद्विहरेल्लोके अष्टैश्वर्यसमन्वितः ॥ ३८ ॥
योगयोगाद् भवेन्मुक्तिर्मन्त्रसिद्धिरखण्डिता ।
सिद्धे मनौ परावाप्तिरिति शास्त्रार्थनिर्णयः ॥ ३९ ॥
युक्तात्मा येन विहरेत् स्वर्गे मर्त्ये रसातले ।
जीवन्मुक्तश्च देहान्ते परं निर्वाणमाप्नुयात् ॥ ४०
तत् कार्त्स्न्येन परं योगं कथयस्व मयीश्वर[3] ।

ईश्वर उवाच

कथयामि तव स्नेहाद् योगयोग्यासि पार्वति ॥ ४१
संसारोत्तारणं मुक्तिर्योगशब्देन कथ्यते ।
योगो हि ललिता देवी निश्चितं विद्धि पार्वति
न योगो नभसः पृष्ठे न भूमौ न रसातले ।
ऐक्यं जीवात्मनोश्चा[4]हुर्योगं योगविशारदाः ॥ ४३ ॥
कामक्रोधलोभमोहमदमात्सर्यसंज्ञकाः[5] ।
तत्समूहाः षडाख्याता योगविघ्नकरा इमे ॥ ४४ ॥
यो[गङ्गै?गाङ्गै]रेभिर्जित्वा तान्योगिनो योगमाप्नुयुः

१ 'ह्वये' क. पाठः । २ 'ह्वये' क. पाठः । ३ 'हे' ख. पाठः । ४ '...
पाठः । ५ 'कः' क. पाठः ।

यमं नियममासनप्राणायामौ ततः परम् ॥ ४५ ॥
प्रत्याहारं धारणाख्यं ध्यानं सा[1]र्धं समाधिना ।
अष्टाङ्गान्याहुरेतानि योगिनो योगसाधने ॥ ४६ ॥
अहिंसा सत्यमस्तेयं ब्रह्मचर्यं दयार्जवम् ।
क्षमा [2]धृतिर्मिताहारः शौचं चेति यमा दश ॥ ४७ ॥
तपः संतोषमास्तिक्यं दानं देवस्य पूजनम् ।
सिद्धान्तश्रवणं चैव ह्रीर्मतिश्च जपो हुतम् ॥ ४८ ॥
दशैते नियमाः प्रोक्ता योगशास्त्रविशारदैः ।
पद्मासनं स्वस्तिकाख्यं भद्रं वज्रासनं तथा ॥ ४९ ॥
वीरासनमिति प्रोक्तं क्रमादासनपञ्चकम् ।
ऊर्वोरुपरि विन्यस्य सम्यक् पादतले उभे ॥ ५० ॥
अङ्गुष्ठौ च निबध्नीयाद् हस्ताभ्यां व्युत्क्रमात् ततः ।
पद्मासनमिति प्रोक्तं योगिनां हृदयङ्गमम् ॥ ५१ ॥
जानू[3]र्वोरन्तरे सम्यक् कृत्वा पादतले उभे ।
ऋजुकायो वसेद्योगी स्वस्तिकं तत्प्रचक्षते ॥ ५२ ॥
सीव[4]न्याः पार्श्वयोर्न्यस्येद् गुल्फयुग्मं सुनिश्चलम् ।
वृषणाधः पादपार्ष्णी पाणिभ्यां परिबन्धयेत् ॥ ५३ ॥
भद्रासनं समुद्दिष्टं योगिभिः परिकीर्तितम् ।
ऊ[5]र्वोः पादौ क्रमान्न्यस्य जान्वोः प्रत्यङ्मुखाङ्गु[6]ली ॥ ५४ ॥
करौ नि[7]दध्यादाख्यातं वज्रासनमनुत्तमम् ।
एकं पादमधः कृत्वा विन्यस्योरावथेतरम् ॥ ५५ ॥

---

१ 'र्द्धं' क. पाठः । २ 'धृतिमिताहारशौचं' क. पाठः । ३ 'नु' पाठः ।
४ 'सेम' क. पाठः । ५ 'उ' ख. पाठः । ६ 'ली:' ख. पाठः । ७ 'ब' क. पाठः ।

ऋजुकायो वसेद्योगी वीरासनमितीरितम् ।
इडया कर्षयेद्वायुं बाह्यं षोडशमात्रया ॥ ५६ ॥
धारयेत् पूरितं योगी चतुःषष्ट्या च मात्रया* ।
सुषुम्नामध्यगं सम्यग् द्वात्रिंशन्मात्रया शनैः ॥ ५७ ॥
नाड्या पिङ्गलया चैवं रेचयेद्योगवित्तमः ।
प्राणायाममिमं प्राहुर्योगशास्त्रविशारदाः ॥ ५८ ॥
भूयोभूयः क्रमात्तस्य व्यत्यासेन समाचरेत् ।
मात्रावृद्धिक्रमेणैव सम्यग् द्वादश षोडश ॥ ५९ ॥
जपध्यानादिभिर्युक्तं सगर्भं तद्विदुर्बुधाः ।
त[दु?द]पेतं विगर्भं च प्राणायामं परं विदुः ॥ ६० ॥
क्रमादभ्यसतः पुंसो देहे स्वेदोद्गमोऽधमः ।
मध्यमः क[ल्प?म्प]संयुक्तो भूमित्यागः परो मतः ॥ ६१ ॥
उत्तमस्य गुणावाप्तिर्यच्छीलनकमिष्यते ।
इन्द्रियाणां विचरतां विषयेषु निराकुलम् ॥ ६२ ॥
बलादाहरणं तेभ्यः प्रत्याहारोऽयमीरितः ।
अङ्गुष्ठगुल्फजानुषु सी[म?व]नीलिङ्गनाभिषु ॥ ६३ ॥
हृद्ग्रीवाकण्ठदेशेषु लम्बिकायां ततो नसि ।
भ्रूमध्ये स्तनके मूर्ध्नि द्वादशान्ते यथाविधि ॥ ६४ ॥
धारणं प्राणमरुतोर्धारणेति निगद्यते ।
समाहितेन मनसा चैतन्यान्तरवर्तिना ॥ ६५ ॥

---

१ 'मण' क. पाठः । २ 'से' ख. पाठः ।

* मात्रालक्षणं यथाह नारदः-कालेन यावतात्मीयो हस्तः स्वं जानुमण्डलम् । पर्येति मात्रा तुल्या स्यात स्वया श्वासैकमात्रयेति ॥ तथा फेत्कारिणीतन्त्रे-जानुं प्रदक्षिणीकृत्य न द्रुतं न विलम्बितम् । क्रियते चांगुलीस्फोटः सा मात्रा परिकीर्तितेति ।

आत्मन्यभीष्टदेवानां ध्यानं ध्यानमिहोच्यते ।
समत्वभावना नित्यं जीवात्मपरमात्मनोः ॥ ६६ ॥
समाधिमाहुर्मुनयः प्रोक्तमष्टाङ्गलक्षणम् ।
इति ते कथितं देवि कामादिषट्कनाशनम् ॥ ६७ ॥
दुर्लभं विषयासक्तैः सुलभं संयमात्मनाम् ।
समाधिः संविदुत्पत्तिः परजीवैकतां प्रति ॥ ६८ ॥
यदि जीवः पराद्भिन्नः कार्य्यतामेति सुव्रते ।
[स्व?अ]चिरत्वं च प्रसज्येत[1] घटवत् परमेश्वरि ॥ ६९ ॥
विनाशित्वं भयं चैव द्वि[त?ती]या[वि?दि]ति ते श्रुतिः ।
नित्यः सर्वगतो ह्यात्मा कूटस्थो दोषवर्जितः ॥ ७० ॥
एकः सन् भिद्यते भ्रान्त्या मायया न स्वरूपतः ।
तस्माद् द्वैतं न मे चास्ति न प्रपञ्चो न सं[स्मृ?सृ]तिः ।७१।
यथाकाशो घटाकाशो महाकाश इतीरितः ।
तथा भ्रान्तिर्द्विधा प्रोक्ता ह्यात्म[2] जीवेश्वरात्मना ॥ ७२ ॥
नाहं देहो नच प्राणो नेन्द्रियाणि तथैव च ।
न मनो नैव बुद्धिश्च नैव चित्तमहंकृतिः ॥ ७३ ॥
नाहं पृथ्वी न सलिलं नच वह्निस्तथानिलः ।
नचाकाशो न शब्दश्च नच स्पर्शस्तथा रसः ॥ ७४ ॥
नहि गन्धो न रूपं च न मायाहं न संसृतिः ।
सदा साक्षिस्वरूपत्वाद्[3] ब्रह्म चैवास्मि केवलः ॥ ७५ ॥
सोऽहं ब्रह्म न संसारी न मत्तोऽन्यत् कदाचन ।

---

१ 'ज्यैव' ख. पाठः । २ 'त्म' क. पाठः । ३ 'पाद्धा' क. ख. पाठः ।

इति विद्यात् स्वमात्मानं समाधिः परिकीर्तितः ॥ ७

समाधौ स्वस्वरूपोऽसौ तुरीयस्वर एव हि ।
तुरीयांशः पराशक्तिर्बिन्द्वात्मा ब्रह्म केवलम् ॥ ७७

प्रज्ञात्मानं वदन्त्येके एकेऽपि ब्रह्म केवलम् ।
जीवमीश्वरभावेन विद्यात् सोऽहमिति ध्रुवम् ॥ ७

यथा फेनतरङ्गादि समुद्रादुत्थितं पुनः ।
समुद्रे लीयते तद्वज्जगदात्मनि लीयते ॥ ७६ ॥

यस्यैवं परमात्मा[स?स्वा]पृथग्भूतः प्रकाशितः ।
स याति परमं भावं स्वयं साक्षात् परामृतम ॥

यदा मनसि चैतन्यं भाति सर्वात्मकं सदा ।
योगिनोऽव्यवधानेन तदा संपद्यते स्वयम् ॥ ८१ ॥

यदा भूतानि सर्वाणि स्वात्मन्येवाभिपश्यति ।
सर्वभूतेषु चात्मानं ब्रह्म संपद्यते [स?त]दा ॥ ८

यदा सर्वाणि भूतानि समाधिस्थो न पश्यति ।
एकीभूतः परेणासौ तदा भवति केवलः ॥ ८३ ॥

यदा[2] जन्मजरादुःखव्याधीनामेव भेषजम् ।
केवलं ब्रह्मविज्ञानं जायतेऽसौ तदा शिवः ॥ ८४

तस्माद्विज्ञानतो मुक्तिर्नान्यथा भवकोटिभिः ।
मन्त्रौषधिबलैर्यद्वज्जीर्यते भक्षितं विषम् ॥ ८५ ॥

तद्वत् सर्वाणि कर्माणि जीर्यन्ति ज्ञानिनः क्षणात्
देहाभिमाने गलिते विदिते परमात्मनि ॥ ८६ ॥

---

१ 'प्रिये' ख. पाठः । २ 'तदा' क. पाठः ।

यत्र यत्र मनो याति तत्र तत्र समाधयः ।
अहं ब्रह्म[1] नचान्योऽस्मि मुक्तोऽहमिति भावयेत् ॥८७॥
सच्चिदानन्दरूपोऽहं नित्यं मुक्तस्वभाववान् ।
एवं समाधियुक्तो यः समाधये स कल्पते[2] ॥ ८८ ॥
सदाशिवोऽहमित्युक्त्वा स्वेच्छया[3] विहरेद्यतिः ।
लिप्यते न स पापेन बध्यते नच कर्मणा ॥ ८९ ॥
यथाग्निविद्रुतं स्वर्णं मालिन्यं दहति क्षणात् ।
तथा ब्रह्मार्पितात्मासौ सर्वकर्माणि दह्यति ॥ ९० ॥
आत्मस्थां देवतां त्यक्त्वा बहिर्देवान्विचि[न्व?नु]ते ।
करस्थं कौस्तुभं त्यक्त्वा भ्रमते काचतृष्णया ॥ ९१ ॥
न योगेन न यन्त्रेण न मन्त्रेण विना हि सः [?] ।
द्वयोरभ्यासयोगेन ब्रह्म संसिद्धिकारणम् ॥ ९२ ॥
तमःपरिवृते गेहे घटो दीपेन दृश्यते ।
एवं मायावृतो ह्यात्मा मनुना गोचरीकृतः ॥ ९३ ॥
एतत्ते कथितं देवि ब्रह्मज्ञानमिदं महत् ।
विज्ञाय गुरुतो जप्त्वा संसारसागरं तरेत् ॥ ९४ ॥
यत्र यत्र मृतश्चायं गङ्गायां श्वपचालये ।
ब्रह्मविद् ब्रह्मभूयाय कल्पते[4] नान्यथा प्रिये ॥ ९५ ॥
विश्वं शरीरमित्युक्तं पञ्चभूतात्मकं प्रिये ।
चन्द्रसूर्याग्नितेजोभिर्जीवब्रह्मैकरूपकम् ॥ ९६ ॥
तिस्रः कोट्यस्तदर्धेन[5] शरीरे नाडयो मताः[6] ।

---

१ 'देवि' ख. पाठः । २ 'ल्प्य' क. पाठः । ३ 'स्व' क. पाठः । ४ 'ल्प्य' क. पाठः । ५ 'र्द्धे' क. पाठः । ६ 'तः' क. पाठः ।

तासु मुख्या दश प्रोक्तास्तासु तिस्रो व्यवस्थिताः ।
प्रधाना मेरुदण्डेऽत्र चन्द्रसूर्याग्निरूपिणी ।
शक्तिरूपा तु सा नाडी साक्षादमृतविग्रहा ॥ ९७
इडा वामे स्थिता नाडी शुक्ला तु चन्द्ररूपिणी ।
पिङ्गलाख्या च या दक्षे पुंरूपा सूर्यविग्रहा ॥ ९८
दाडिमीकुसुमप्रख्या विषाख्या चापरा मता ।
मेरुमध्यस्थिता या तु मूलादाब्रह्मरन्ध्रगा ॥ १००
सर्वतेजोमयी सा तु सुषुम्ना[1] वह्निरूपिणी ।
तस्या मध्ये विचित्राख्या अमृतस्राविणी शुभा ॥
सर्वदेवमयी सा तु योगिनां हृदयङ्गमा ।
विसर्गाद्बिन्दुपर्यन्तं व्याप्य तिष्ठति तत्त्वतः ॥ १०२
मूलाधारे त्रिपुराख्ये इच्छाज्ञानक्रियात्मके ।
मध्ये स्वयंभूलिङ्गं तु कोटिसूर्यसमप्रभम् ॥ १०३ ॥
तदूर्ध्वे[2] तत्तुरीयं तु ध्यायेद्बन्धूकसंनिभम् ।
तदूर्ध्वे[3] तच्छिखाकारा कुण्डली रक्तविग्रहा ॥ १०४
सा एव हि परा सूक्ष्मा महात्रिपुरसुन्दरी ।
चैतन्यं सर्वभूतानां शब्दब्रह्म यदुच्यते ॥ १०५ ॥
तत्प्राप्य कुण्डलीरूपं प्राणिनां देहमध्यगम् ।
सर्वतेजोमयं तत्तु सच्चिदानन्दमव्ययम् ॥ १०६ ॥
तद्बाह्ये हेमवर्णाभं [र?व]सवर्णं * चतुर्दलम् ।
द्रुतहेमसमप्रख्यं पद्मं तत्र विभावयेत् ॥ १०७ ॥

---

१ 'म्णा' क. पाठः । २ 'र्द्धे' क. पाठः । ३ 'र्द्धे' क. पाठः ।
* वादिसान्तवर्णोपेतमित्यर्थः ।

तदूर्ध्वेऽग्निसमप्रख्यं षड्दलं हीरकप्रभम् ।
बादिलान्तषडर्णे[1]न युक्त[2] स्वाधिष्ठानसंज्ञकम् ॥ १०८ ॥
मूलमाधारषट्कानां मूलाधारं ततो विदुः ।
स्वशब्देन परं लिङ्गं स्वाधिष्ठानं ततो विदुः ॥ १०९ ॥
तदूर्ध्वे नाभिदेशे तु मणिपूरं महत् पुरम् ।
हेमाभं वैद्युताभं च बहुतेजोमयं तथा ॥ ११० ॥
मणिवद्भिन्नं तत्पु[3]रं मणिपूरं ततो विदुः ।
दशभिश्च दलैर्युक्तं डादिफान्ताक्षरान्वितम् ॥ १११ ॥
विष्णुनाधिष्ठितं पद्मं विश्वालोकनकारणम् ।
तदूर्ध्वेऽनाहतं पद्ममुद्यदादित्यसंनिभम् ॥ ११२ ॥
कादिठान्तार्णै[4]रर्कपत्रैश्च समलंकृतम् ।
तन्मध्ये बाणलिङ्गं तु सूर्यायुतसमप्रभम् ॥ ११३ ॥
शब्द[5]ब्रह्ममयः शब्दोऽनाहतस्तत्र दृश्यते ।
अनाहताख्यं तत्पद्मं योगिभिः परिकीर्त्यते ॥ ११४ ॥
आनन्दसदनं तत्तु पुरुषाधिष्ठितं परम् ।
तदूर्ध्वे तु विशुद्धाख्यं दलैः षोडशभिर्युतम् ॥ ११५ ॥
स्वरैः षोडशकैर्युक्तं धूम्रवर्णं महत्प्रभम् ।
विशुद्धिं तनुते यस्माज्जीवस्य हंसलोकनात् ॥ ११६ ॥
विशुद्धं पद्ममाख्यातमाकाशाख्यं महाद्भुतम् ।
आज्ञाचक्रं तदूर्ध्वे तु आत्मनाधिष्ठितं परम् ॥ ११७ ॥

---

१ ‘ डूत्र ’ ख. पाठः । २ ‘ क्तं ’ क. पाठः । ३ ‘ तत्पुरं मणिवद्भिन्नं ’ ख. पाठः ।
४ ‘ न्तदलैः ’ क. पाठः । ५ ‘ ब्दो ’ क. पाठः ।

हृत्वादिद्विदलं पद्मं चन्द्रेणाधिष्ठितं तु तत् ।
आज्ञासंक्रमणं तत्र गुरोराज्ञेति कीर्तितम् ॥ ११८
कैलासाख्यं तदूर्ध्वे तु बोधिनी तु तदूर्ध्वतः ।
सहस्राराम्बुजं देवि बिन्दुस्थानं तदूर्ध्वतः ॥ ११९
आदौ पूरकयोगेन स्वाधारे योजयेन्मनः ।
गुदमेढ्रान्तरे शक्तिं तामाकुञ्च्य प्रबोधयेत् ॥ १२०
लिङ्गभेदक्रमेणैव बिन्दुस्थानं समानयेत् ।
शंभुना तां परां शक्तिमेकी(भाव?भूतां)विचिन्तयेत् ॥
तदुद्भवामृतं वक्रद्रुतं लाक्षारसोपमम् ।
पाययित्वा च तां शक्तिं परोक्तां योगसिद्धिदाम् ॥
षट्चक्रदेवतास्तत्र संतर्प्यामृतधारया ।
आनयेत्तेन मार्गेण मूलाधारं पुनः सुधीः ॥ १२३
यातायातक्रमेणैव तत्र कुर्यान्मनोलयम् ।
एवमभ्यस्यमानं तु अहन्यहनि पार्वति ॥ १२४ ॥
जरामरणदुःखाद्यैर्मुच्यते भवबन्धनैः ।
इत्युक्तं परमं योगं योनिमुद्राप्रबन्धनम् ॥ १२५ ॥
अथापरं प्रवक्ष्यामि समाधिं भवनाशनम् ।
अथवा परमेशानि यथोक्तध्यानयोगतः ॥ १२६ ॥
हृत्पद्मकर्णिकामध्ये[2] ध्यायेद्देवीमनन्यधीः ।
त्रिपुरात्मकमात्मानं भावयेद्व्यस्तविग्रहः ॥ १२७ ॥
ऐक्यं संभावयेन्नित्यं स्वगुरुदेवतात्मनाम् ।

---

१ 'द्रे' क. पाठः । २ 'लि' ख. पाठः ।

अहं देवो नचान्योऽस्मि ब्रह्मैवाहं न शोकभाक् ॥१२८॥
सच्चिदानन्दरूपोऽहं शुद्धबुद्धस्वभाववान् ।
प्रणवं पूर्वमुद्धृत्य तदिति परतस्ततः ॥ १२९ ॥
सदिति तु समालोच्य कर्म कुर्याद्विचक्षणः ।
स्मरणात् कर्मणामाद्ये ब्रह्मभूयाय कल्पते ॥ १३० ॥
सर्वमङ्गलसंपन्नो बहिर्निर्गत्य साधकः ।
त्य(क्त?क्त्वा)मूत्रपुरीषे च करपादौ विशोधयेत् ॥ १३१ ॥
मुखं प्रक्षाल्य देवेशि नासारन्ध्रद्वयं ततः ।
नेत्राञ्जनं विधायैव शुद्धस्थानं समाश्रयेत् ॥ १३२ ॥
नेत्राञ्जनमकृत्वैव यः पश्येत् सौरमण्डलम् ।
जन्मार्जितफलं नश्येत् का कथा तस्य दुर्मतेः ॥ १३३ ॥
त्रितत्त्वेन त्रि(धा?रा)चम्य दन्तधावनमाचरेत् ।
दन्तकाष्ठम(था?खा)दित्वा पूजयेद्यस्तु देवताम् ॥ १३४ ॥
तत्पूजा विफला देवि मृते च नरकं व्रजेत् ।
क्लीमात्मकं कामदेवं सर्वान्ते जनमा[3]लिखेत् ॥ १३५ ॥
प्रियाय हृदयान्तोऽयं मनुर्दन्तविशुद्धये ।
चतुर्दशस्वरैर्वक्त्रं क्षालयेच्छुद्धिहेतवे ॥ १३६ ॥

---

इति गन्धर्वतन्त्रे श्रीपार्वतीश्वरसंवादे कर्मयोगादिक्रमनिरूपणं
नाम षष्ठः पटलः ॥ ६ ॥

---

१ ‘ न्द्विः ’ क. पाठः । २ ‘ भाव्य ’ ख. पाठः । ३ ‘ वंजनमथा ’ ख. पाठः । ४ ‘ देंह ’ ख. [पा]ठः । ५ ‘ स्सि ’ ख. पाठः ।

## सप्तमः पटलः ।

शंकर उवाच

प्रातः स्नानं ततः कुर्यात् त्रैपुरं योजयन् क्रमम् ।
सुगन्धिसलिलैः शुद्धैः कुलतीर्थेऽथवा पुनः ॥ १ ॥
नद्यादौ विधिवत् स्नायात् कुलदर्भविधा(य?र)कः
रौप्यं दक्षिणतर्जन्यामनामा हेमसंयुता ॥ २ ॥
वामकनिष्ठिका हेमैः कुलदर्भोऽयमीरितः ।
एष एव भवेद्दर्भो न दर्भो वनसंभवः ॥ ३ ॥
अशून्यं तु करं कुर्याद्वह्नीन्द्वर्कप्रतिष्ठया ।
सर्वभूतवशी स स्यान्मुद्रया चातिशोभया ॥ ४ ॥
त्रितत्त्वेन त्रि(धा?रा)चम्य संकल्प्य पापनुत्तये ।
कुलपात्रे सरत्नं च सतिलं सजलं ततः ॥ ५ ॥
गृहीत्वा कुलदेवस्य प्रीतये स्नानमाचरेत् ।
अस्नातस्य फलं नास्ति तथातर्पयतः पितॄन् ॥ ६ ॥
इदं विष्णुभैरवं तु विचक्रम इतीरितम् ।
मृदालम्भनकृत्ये च नित्यमेवमुदीरयेत् ॥ ७ ॥
कुलचक्रं जले न्यस्य कुलमुद्रां विधाय च ।
एहि गङ्गे नमस्तुभ्यं सर्वतीर्थसमन्विते ॥ ८ ॥
आवाहयामि देवि त्वां स्नानार्थमिह सुन्दरि ।
आवाह्याम्भसि संयोज्य सोमसूर्याग्निमण्डलम् ॥ ९

१ 'स्म' ख. पाठः ।

संचिन्त्य मन्त्री तन्मध्ये ध्यायेत् त्रिपुरसुन्दरीम् ।
गायत्र्या च[1] महादेव्याः सुन्दरीमाह्वयेच्छिवाम् ॥ १० ॥
त्रिवारम(जनौ?ञ्जने)वारि मूलमन्त्रेण मन्त्रयेत् ।
अभिषिञ्चेत् ततो मूर्ध्नि[2] मूलमन्त्रं हृदि स्मरन् ॥ ११ ॥
त्रिभिस्तु त्रिपुराबीजैस्त्रिधा मज्जनमाचरेत् ।
तस्मादुत्थाय देवेशि निर्मुक्ताशेषविग्रहः ॥ १२ ॥
त्र्यक्षरीं च समुच्चार्य दुकूले परिधापयेत् ।
सकेशं मूषिकाक्रान्तमधौतं भग्नमम्बरम् ॥ १३ ॥
मलिनं परकीयं च पर्युषितं च वर्जयेत् ।
तिलकं कुलरूपं च कृत्वाचम्य विधानतः ॥ १४ ॥
ततः संध्यामुपासीत पापहानाय साधकः[3] ।
स्नानं च त्रिविधं प्रोक्तं संध्या च त्रिविधा स्मृता ॥ १५ ॥
आन्तरं च भवेद्देवि बाह्यं मानसमेव च ।
मानसं वै भवेत् स्नानं यः सदा शुद्धमानसः ॥ १६ ॥
स्पर्शते पादुके देवि[4] निर्विकल्पः सदैव हि ।
बाह्यं मन्त्रैश्च[5] संप्रोक्तमान्तरं शृणु सांप्रतम् ॥ १७ ॥
प्रागुक्तक्रमयोगेन प्राणायामपरो बुधः ।
शक्तिं पराशिवेनैव संगमय्य[6] विधानतः ॥ १८ ॥
तदुद्भवामृते शश्वन्निमज्य पुनरेव हि ।
स्नायाच्च विमले तीर्थे पुष्करे हृदयाश्रिते ॥ १९ ॥

१ 'ध्याश्च' क. पाठः । २ 'र्ध्नि' क. पाठः । ३ 'हा येन साधना' क. पाठः । ४ 'स्पर्शलेपादिके वापि' ख पाठः । ५ 'श्चमन्त्रैव' ख. पाठः । ६ 'मार्थं' क. पाठः ।

बिन्दुतीर्थेऽथवा स्नात्वा पुनर्जन्म न विद्यते ।
आत्मानं सर्वदा सम्यग् ध्यायेद्ध्यानपरायणः ॥ २०
देवताभेदतः संध्या मानसीयं परा प्रिये ।
शिवशक्त्योः समायोगो यस्मिन् काले प्रजायते ॥ २१
सा संध्या कुलनिष्ठानां समाधिस्थैः प्रतीयते ।
अपरां कथयाम्यत्र सर्वपापविनाशिनीम् ॥ २२ ॥
उपविश्य शुचौ देशे त्रितत्त्वेन त्रिराचमेत् ।
प्राणायामत्रयं कृत्वा त्रिभि[2]र्बीजैस्त्रिधावि(ध?धि)म् ॥ २
वामहस्ते जलं गृह्य गलितोदकबिन्दुभिः ।
सप्तधा प्रोक्षणं कुर्यान्मूर्ध्नि[3] मन्त्रमनुस्मरन् ॥ २४ ॥
अवशिष्टोदकं दक्षहस्ते संगृह्य साधकः ।
नासामाश्लिष्य तोयेन ततस्तेनाघमर्षणम् ॥ २५ ॥
इडयाकृष्य देहान्तः क्षालितैः पापसंचयैः ।
कृष्णवर्णं तदुदकं द[4]क्षनाड्या विरेचितम् ॥ २६ ॥
दक्षहस्ते तु तन्मन्त्री पापरूपं विचिन्त्य च[5] ।
पुरतो वज्रपाषाणे प्र[6]क्षिपेदस्त्रमन्त्रतः ॥ २७ ॥
इत्यघमर्षणं कृत्वा पुनराचमनं तथा ।
अभिषिञ्चेत् ततो मूर्ध्नि विधिना साधकोत्तमः ॥ २८
ओं आपो देवी रसोऽमृतं पूतं ब्रह्म पुनीमहे ।
जलाञ्जलित्रयं भूमौ मार्तण्डभैरवाय च ॥ २९ ॥
ऊर्ध्वबाहुस्ततो मन्त्री मार्तण्डं समुपाश्रयेत् ।

---

१ ‘ धा ’ क. पाठः । २ ‘ धा ’ ख. पाठः । ३ ‘ दृध्नि ’ क. पाठः । ४ क. पाठः । ५ ‘ न्तयेत ’ ख. पाठः । ६ ‘ नि ’ ख. पाठः ।

ओं उदुत्यं जातवेदसं देवं वहन्ति केतवः ॥ ३० ॥
दृशे विश्वाय मार्तण्डशेषे भैरवमीरयेत्[1] ।
सूर्यमण्डलमध्ये तु कुलचक्रं विचिन्तयेत् ॥ ३१ ॥
बाल्योचितं स्पृहन्तीं वै बालिकां[2] चक्रमध्यतः ।
बालार्कमण्डलाभासं भानुवह्नीन्दुलोचनाम् ॥ ३२ ॥
पाशाङ्कुशौ शरांश्चापं धारयन्तीं शिवां स्मरेत् ।
मध्याह्ने चिन्तयेद् देवीं नवयौवनशोभिताम् ॥ ३३ ॥
सायाह्ने चिन्तयेद् देवीं त्रैलोक्यैकप्रभामयीम् ।
सर्वयौवनसंपन्नामुज्ज्वलां परमां कलाम् ॥ ३४ ॥
तामेव चिन्तयेद्रात्रौ भोगी भोगपरायणाम् ।
अष्टोत्तरशतावृत्त्या गायत्रीं च जपेत् सुधीः ॥ ३५ ॥
रविमण्डलगां देवीं प्रणिपत्य समापयेत् ।
एवं संध्यां समाप्याथ हृदि विद्यां परामृ(षे?शे)त् ॥३६॥
अथवा परमेशानि सदैनां परिचिन्तयेत् ।

देव्युवाच

इदानीं श्रोतुमिच्छामि कथमत्राधिकारिता ॥ ३७ ॥
वेदव्रतविहीनानां व्रत्यादीनां कृतागसाम् ।
तथैवानुपनीतानां स्त्रीशूद्राणां भवेच्छिव ॥ ३८ ॥
कथमेते महादेव मुक्तिं गच्छन्त्यनुत्तमाम् ।
न विना ब्राह्मणं मुच्येद्देहब(न्ध्या?न्धा)दिति श्रुतिः ॥३९॥

ईश्वर उवाच

1 'सूर्यं मार्तण्डशेषे देवेशि भैरवं पदमीरयेत्' ख. पाठः । 2 'का' ख. पाठः ।

देवदारुवने पूर्वं ब्राह्मणानतिदुर्धियः ।
विलोक्य भगवान् विष्णुर्मामभ्येत्याभिवाद्य च ॥
उपविष्टस्तदा देवः कारुण्यद्रुतचेतसा ।
पृष्टवान् मां महादेवि तेषां मुक्तेर्हि कारणम् ॥

भगवानुवाच

इमे दुर्मतयः सर्वे वेदाचारबहिष्कृताः ।
अन्यायमैथुने (श?स)क्ताः सुरापानपरायणाः ॥ ४२
आत्मज्ञानविहीनानां योगाभ्यासावहेलिनाम् ।
कथमेषां भवेन्मुक्तिस्तदुपायं वद प्रभो ॥ ४३॥
शूद्रादीनां कथं देव दीक्षायामधिकारिता ।

ईश्वर उवाच

अपि कृत्वा दुराचारान् पतितो वेदवर्जितः ॥ ४४
नारी शूद्रोऽथवा व्रात्यो यां ज्ञात्वा ब्राह्मणो भवेत्
यया विज्ञायते ब्रह्म सच्चिदानन्दमव्ययम् ॥ ४५
तामेव कथयाम्यद्य तवैव हृदि संस्थिताम् ।
चतुर्विंशतितत्त्वेन निर्मितां[2] तत्स्वरूपिणीम्[3] ॥ ४६
त्रिकारं चम्पकापीतं ब्रह्मविष्णुशिवात्मकम् ।
शतपत्रासनारूढं ध्यायेत् पद्मासनास्थितम् ॥ ५७ ॥
पुकारं चिन्तयेद्देवमतसीपुष्पसंनिभम् ।
पद्ममध्यस्थितं सौम्यमुपपातकनाशनम् ॥ ४८ ॥
रकारं कपिलं नित्यं कमलासनसंस्थितम् ।
ध्ययेच्छान्तं सुरश्रेष्ठ महापातकनाशनम् ॥ ४९ ॥

१ 'क्ति' क. पाठः । २ 'ता' क. पाठः । ३ 'णी' क पाठः ।

सुकारं चिन्तयेद्देवमिन्द्रनीलसमप्रभम् ।
निर्दहेत् सर्वदुःखानि ग्रहरोगोद्भवानि च ॥ ५० ॥
न्दकारं वह्निदीप्ताभं चिन्त(ना?ये)त् पुरुषर्षभ ।
भ्रूणहत्याकृतं पापं तत्क्षणादेव नश्यति ॥ ५१ ॥
(रि?यै)कारं विमलं ध्यायेद् ब्रह्महत्याविनाशनम् ।
(रि?वि)कारं चिन्तयेद्विद्वान् शुद्धस्फटिकसंनिभम् ॥५२॥
पापं नश्यति तच्छिप्रमगम्यागमनोद्भवम् ।
(सु?च्च)कारं चिन्तयेद्योगी शुद्धस्फटिकसंनिभम् ॥ ५३ ॥
अभक्ष्यभक्षणं पापं तत्क्षणादेव नश्यति ।
हेकारं तारकावर्णमिन्दु(शेष?शीर्ष)विभूषितम् ॥ ५४ ॥
योगिनां वरदं ध्यायेद् ब्रह्महत्याविनाशनम् ।
काकारं कृष्णवर्णं च नीलमेघसमप्रभम् ॥ ५५ ॥
ध्यात्वा पुरुषशार्दूल पापं नाशयति ध्रुवम् ।
मेकारं रक्तवर्णं च कमलासनसंस्थितम् ॥ ५६ ॥
गोहत्यादिकृतं पापं नाशयत्येव तत्क्षणात् ।
श्वकारं परमं ध्यायेत् तप्तकाञ्चनसंनिभम् ॥ ५७ ॥
कमलासनमासीनं मन्त्री हत्याविमोचनम् ।
(रि?यै)कारं शुक्लवर्णं तु जातीपुष्पसमप्रभम् ॥ ५८ ॥
गुरुहत्याकृतं पापं ध्यात्वा दहति तत्क्षणात् ।
धीकारं चिन्तयेच्छुक्लं कुन्दपुष्पसमप्रभम् ॥ ५९ ॥
पितृमातृवधात् पापान्मुच्यते नात्र संशयः ।

---

१ 'यं' क. पाठः ।

मकारं पद्मरागाभं चिन्तयेद् दीप्ततेजसम् ॥ ६० ॥
पूर्वजन्मार्जितं पापं तत्क्षणादेव नश्यति ।
हिकारं शङ्खवर्णं तु पूर्णचन्द्रसमप्रभम् ॥ ६१ ॥
अशेषपापदहनं ध्यायेन्नित्यमिहाच्युत(?) ।
तत्कारं पाण्डुरं ध्यायेत् पद्मस्योपरि संस्थितम् ॥ ६२
प्रतिग्रहकृतं पापं स्मरणादेव नश्यति ।
नःकारं रक्तवर्णं तु इन्द्रगोपसमप्रभम् ॥ ६३ ॥
ध्यात्वा प्राणिवधं पापं निर्दहेज्जगदीश्वर ।
क्लिन्कारं रक्तवर्णं तु स्मरेद्वज्रसमप्रभम् ॥ ६४ ॥
निर्दहेत् सर्वपापानि नान्यैः पापैः प्रलिप्यते ।
नेकारं तु मुखं पूर्वमुद्यदर्कसमप्रभम् ॥ ६५ ॥
सकृद्ध्यात्वा सुरश्रेष्ठ स गच्छेद् ब्रह्मणः पदम् ।
नीलोत्पलदलश्यामं प्रकारं दक्षिणाननम् ॥ ६६ ॥
सकृद् ध्यात्वा सुरश्रेष्ठ स गच्छेद्वैष्णवं पदम् ।
सौम्यं गोरोचनापीतं चोकारं चोत्तराननम् ॥ ६७ ॥
सकृद् ध्यात्वा सुरश्रेष्ठ स गच्छेद्रुद्रतां पुनः ।
शरच्चन्द्रनिभं शान्तं दकारं पश्चिमाननम् ॥ ६८ ॥
सकृद् ध्यात्वा सुरश्रेष्ठ स गच्छेदैश्वरं पदम् ।
यात्कारं च शिरः प्रोक्तमूर्ध्वाननमितीरितम् ॥ ६९ ॥
सकृद् ध्यात्वा सुरश्रेष्ठ सदाशिवपुरं व्रजेत् ।
अक्षराणां तु सर्वेषां वक्ष्यन्ते देवताः क्रमात् ॥ ७

१ 'द्रां' क पाठः ।

अग्निवायुसूर्यविद्युद्यमा वरुण एव च ।
बृहस्पतिस्तु[1] पर्जन्य इन्द्रो गन्धर्व एव च ॥ ७१ ॥
पूषा शिवश्च तुष्टा च वसवश्च[2] मरुत्तथा ।
सोमोऽङ्गिरा विश्वेदेवा अश्विनौ च प्रजापतिः ॥ ७२ ॥
सर्वदेवश्च रुद्रश्च ब्रह्मा विष्णुश्च देवताः ।
जपकाले चिन्तयित्वा तासां सायुज्यमाप्नुयात् ॥ ७३ ॥
ललितायास्त्रिभिर्बीजैस्त्रिपदीयं[3] त्रयीमयी ।
एतज्ज्ञात्वा तु मेधावी जपहोमं करोति यः ॥ ७४ ॥
षडङ्गमविधायादौ ध्यायं(तां?स्तां)परदेवताम् ।
न भवेत् सूतकं तस्य मृतकं च न विद्यते ॥ ७५ ॥
यश्चैवं तु न जानाति गायत्रीं च यथाविधि ।
कथितं सूतकं तस्य मृतकं च मयानघ ॥ ७६ ॥
नैव दानफलं तस्य नच यज्ञफलं लभेत् ।
नच तीर्थफलं प्रोक्तं तस्यैवं सूतके सति ॥ ७७ ॥
गायत्र्येषा समाख्याता त्रैपुरी सर्वसिद्धिदा ।
गायन्तं त्रायते यस्माद् गायत्री तेन चोच्यते ॥ ७८ ॥
महापातकयुक्तोऽपि प्रजपेद् दशधा यदि[4] ।
सत्यं सत्यं महादेवि मुक्तो भवति तत्क्षणात् ॥ ७९ ॥
अष्टोत्तरसहस्रं वै जपेदेनामनन्यधीः ।
सर्वपापविनिर्मुक्तो भवेत् पूजाधिकारवान् ॥ ८० ॥
जीवन्मुक्तो जामदग्न्यः शिष्यो मे घोरपातकैः ।

---

१ 'तिं तु' क. पाठः । २ 'वा' ख. पाठः । ३ 'स्त्रीपदे' ख. पाठः ।
४ 'शतावृत्त्या गायत्री जपते यदि' ख. पाठः ।

विमुक्तो मातृहत्याद्यैर्मीननाथस्तथा परः ॥ ८१ ॥
जेगीषव्यश्च चन्द्रश्च वासवश्च विमोचितः ।
गुरुतल्पगमनाद्यैस्तथागस्त्यः प्रमोचितः ॥ ८२ ॥
अभक्ष्यभक्षणात् पापादनयैव विमोचितः ।
चाण्डालगमनाद्यैश्च वशिष्ठश्चापि मोचितः ॥ ८३ ॥
दत्तात्रेयः सुरापानाज्ज्वलनः सर्वभक्षणात् ।
त एव ब्रह्मणाः सर्वे विष्णुना प्रभविष्णुना ॥ ८४
अनयैव महादेवि सर्व एव प्रमोचिताः ।

देव्युवाच

धन्या चानुगृहीतास्मि त्वया नाथेन शंकर ॥ ८५ ॥
निःसंशयास्मि देवेश भ्रमो द्वैतश्च मे हतः ।
कतिधा सा भवेद् देव तदिदानीं वद प्रभो ॥ ८६

ईश्वर उवाच

एकैव सा महादेवि बहुधा भिन्नतां गता ।
सौरी च वैष्णवी चैव शाक्ती ब्राह्म्यथ शांभवी ॥
तत्तन्त्रे ताः प्रयोक्तव्यास्त्रैपुरीयं प्रकाशिता ।
तर्पणं च त्रिधा प्रोक्तं सांप्रतं तच्छृणु(स्व?ष्व)मे
सोमार्कानलसंघट्टात् स्खलितं यत् परामृतम् ।
तेनामृतेन दिव्येन तर्पयेत् परदेवताम् ॥ ८६ ॥
आन्तरं तर्पणं ह्येतन्मानसं शृणु सांप्रतम् ।
आत्मानं तन्मयं स्मृत्वा सदा संतर्पितात्मवान् ॥
सर्वदा सर्वकार्येषु संतुष्टः स्थिरमानसः ।
उपविश्य शुचौ देशे ततस्तर्पणमारभेत् ॥ ९१ ॥

तर्पयित्वा गुरूनादौ मूलदेवीं च तर्पयेत् ।
बीजद्वयं ततो विद्या हुतभुग्दयितान्विता ॥ ९२ ॥
ततो देव्याः स्वनामान्ते तर्पयामि नमःपदम् ।
देवान् पितॄन् ऋषींश्चैव तर्पयेत् कुलवारिणा ॥ ९३ ॥
तर्पणादौ प्रयुञ्जीत तृप्यतां वृद्धभैरवः ।
तथैव परमेशानि विष्णुं रुद्रं प्रजापतिम् ॥ ९४ ॥
एवं ऋषीन् प्रतर्प्याथ पितॄनपि च भैरवान् ।
तृप्यतां सुन्दरी माता पिता भैरवस्तृप्यताम् ॥ ९५॥
आदौ त्रिपुरपूर्वं च तर्पणे विनियोजयेत् ।
श्राद्धे विवाहे दाने च स्नाने चानङ्गपूजने ॥ ९६ ॥
सर्वदा सर्वकार्येषु तान्त्रिके वैदिके तथा ।
त्रिपुरभैरवं चैव स्मरेत् त्रिपुरसुन्दरीम् ॥ ९७ ॥
स्वविद्यां संस्मरन् कुर्य्यात् क्रियां सर्वत्र चोदिताम् ।
द्विजातीनां च संस्कारो वेदोक्तः समुदाहृतः ॥ ९८ ॥
तेषां तु तत्र तत्रापि विद्यया विधिमाचरेत् ।
अन्येषामपि वर्णानां विद्ययैव समापयेत् ॥ ९९ ॥
विद्यया संस्कृतो यस्तु स एव ब्राह्मणो मतः ।
निध(नो?ने)विद्यया दाहो विद्ययान्यत् समाचरेत् ॥१००॥
तेनैव तन्मयी सिद्धिः सर्वत्र भवति ध्रुवम् ।
यावन्न दीयते देवि सूर्यायार्घ्यं[1] विधानतः ॥ १०१ ॥
विधिना विहिता पूजा तावत् केन प्रगृह्यते ।
मार्तण्डभैरवायार्घ्यं दूर्वाभिः सि[2]ततण्डुलैः ॥ १०२ ॥

---

१ 'यात्' क. पाठः । २ 'शि' क. पाठः ।

रक्तपुष्पैश्चन्दनैश्च सगणाय निवेदयेत् ।
‡ शिवबीजं वह्निसंस्थं वामनेत्रविभूषितम् ॥ १०३
नादबिन्दुकलायुक्तं हंसःपदमथो लिखेत् ।
मार्तण्डभैरवायेति प्रकाशशक्ति चालिखेत् ॥ १०४
सहितायेति चोक्त्वा वै इदमर्घ्यमतः परम् ।
वह्निजायान्वितं कृत्वा सूर्यायार्घ्यं निवेदयेत् ॥ १०
न दद्याद्भास्करायार्घ्यं शंखतोयैर्महेश्वरि ।
सर्वदेवमयं सूर्यं सर्वदेवनमस्कृतम् ॥ १०६ ॥
पूजयित्वा विधानेन प्रदक्षिणमनुव्रजन् ।
प्रणम्य भगवन्तं वै सर्वपापैः प्रमुच्यते ॥ १०७ ॥
यः सदा पूजयेद् देवं दृष्ट्वा वा प्रणमेत् प्रभुम् ।
पूजितं दैवतत्वेन ब्रह्माण्डान्तरगोचरम् ॥ १०८ ॥
तिस्रः कोट्योऽर्द्धकोटी च तीर्थानां यदुदाहृतम् ।
सकृत् प्रदक्षिणं देवि दद्यात् तत्फलमञ्जसा ॥ १०
तीर्थानां दर्शने यद्यत् तत्तद्भास्करदर्शनात् ।
सर्वतीर्थामृतैः स्नातो स सदा सूर्यरश्मिभिः ॥ ११
अथ त्रिपुरगायत्र्या देव्यै चार्घ्यं निवेदयेत् ।
सूर्यमण्डलसंस्थायै पूर्वोक्तध्यानयोगतः ॥ १११ ॥
चक्रराजं हृदि ध्यात्वा तत्र देवीं समानयेत् ।
अष्टोत्तरशतावृत्त्या जपन् विद्यामनन्यधीः ॥ ११२

---

इति श्रीगन्धर्वतन्त्रे पार्वतीश्वरसंवादे स्नानसंध्योपासनादिवि

सप्तमः पटलः ॥ ७ ॥

---

१ 'यः' ख. पाठः । ‡ शिवेत्यादिना ह्रींबीजोद्धारः कृतः । § गुप्तदीक्षाविषये इदं

# अष्टमः पटलः ।

ईश्वर उवाच

ततो मौनी विशुद्धात्मा हृदि विद्यां पराम्रृ(वे?शे)त् ।
अबहिर्मानसो योगी यागभूमिमथाविशेत् ॥ १ ॥
केशकीटादिसंयुक्ता न स्निग्धा नातिपिच्छला ।
न रूक्षा[1] नातिनीचा वै नात्युच्चा[2] न वनान्विता ॥ २ ॥
न च वायुभिराच्छन्ना नान्यप्राणिसमाकुला ।
धूलिकर्दमसंयुक्ता पशुभिर्न विलोकिता ॥ ३ ॥
वृक्षादिभिरनाकीर्णा द्रववा[3]रिसमाकुला ।
अनावृता चतुर्दिक्षु मनसस्तु[4]ष्टिकारिणी ॥ ४ ॥
ऊषरे कृषिसंयुक्[5]ते स्थाने पुण्येऽपि नार्चयेत् ।
यागभूमिर्निषिद्धैषा विहिता कथ्यतेऽधुना ॥ ५ ॥
वापीकूपसमीपस्था सुमनोद्यानमध्यगा * ।
विचित्रमण्डपैर्युक्ता शुद्धवेदिपरि(स्कृ?ष्कृ)ता ॥ ६ ॥
पताकाध्वजसंकीर्णा लाक्षारुणपरिच्छदा ।
पुष्पप्रकरसंकीर्णा घण्टाचामरभूषिता ॥ ७ ॥
दीपदर्पणसंयुक्ता[6] वितानोपपरिष्कृता[7] ।
पेयैर्भक्ष्यैः समायुक्ता कर्पूरागुरुधूपिता ॥ ८ ॥
बालार्कसदृशी रम्या मनःसंतोषकारिणी ।
तत्तदायुधपूर्णान्तर्विभूषितप्रपूजिता ॥ ९ ॥

---

१ 'रु' क. पाठः । २ 'च्चा' ख. पाठः । ३ 'द्रा' ख. पाठः । ४ 'सोतु' क. पाठः ।
५ 'क्त' क. पाठः । ६ 'ता' क. पाठः । ७ 'स्कृ' क. पाठः । * संधिरैशः ।

एवमेषा महादेवि यागभूमिः समीरिता ।
पूजावेद्या बहिः स्थित्वा चतुर्हस्तान्तरे धिया ॥
गृहे चेद् द्वारदेशस्थ आचम्य मनसा गुरून् ।
प्रणमेदिष्टदेवीं च दिक्पालानपि चेतसा ॥ ११
इन्द्रमग्निं यमं वन्दे निर्ऋतिं वरुणं तथा ।
पवनं धनदं चेशं प्रजापतिमनन्तकम् ॥ १२ ॥
गणेशं चैव क्षेत्रेशं वन्दे द्वारश्रियं तथा ।
गणनाथं च वटुकं दुर्गां क्षेत्रं रतिं स्मरम् ॥ १३
प्रीतिं वसन्तकं चैव शङ्खपद्मनिधी तथा ।
सरस्वतीं महालक्ष्मीं मायां दुर्गां नमाम्यहम् ॥
भद्रकालीं च स्वस्तिं च स्वाहां शुभंकरीं तथा ।
गौरीं च लोकधात्रीं च वागीश्वरीं नमाम्यहम् ॥
ब्रह्माणं वास्तुपुरुषं प्रणमामि यथाक्रमम् ।
पुष्पाञ्जलिमथैतेभ्यो भक्त्या परमया दिशेत् ॥
मण्डलं वामतः कृत्वा चतुरस्रं महेश्वरि[2] ।
आधारं पूजयेत् तत्र पात्रं चाम्बोदकान्वितम् ॥
संस्कृत्य परमेशानि सर्वभूतबलिं हरेत् ।
तारं च भुवनेशानीं सर्वविघ्नपदं ततः ॥ १८ ॥
(हृ?कृ)दन्ते सर्वभूतेभ्यो हुंकारं वह्निवल्लभाम् ।
समुच्चरन् बलिं दद्यान्मुद्रया तत्त्वसंज्ञया ॥ १९
अङ्गुष्ठानामिकायोगं तत्त्वमुद्रेयमीरिता ।

१ 'धिं' क. पाठः । २ 'जलेन चतुरस्रकम्' ख. पाठः ।

बालान्ते चास्त्रमालिख्य ङेन्तं फट्कारसंयुतम् ॥ २० ॥
अस्त्रमन्त्रः समाख्यातः सर्वविघ्नौघनाशकः ।
अनेनैवाक्षतान् सम्यक् संमन्त्र्य सप्तधा ततः ॥ २१ ॥
अपसर्पन्तु ते भूता भूमौ ये चान्तरि[1]क्षगाः ।
दिव्यलोकगता ये च ते नश्यन्तु[2] शिवाज्ञया ॥ २२ ॥
अनेनैवाक्षतांस्तत्र विकिरेद्यज्ञमण्डपे ।
ऐंक्लींसौः इति मन्त्रेण पूजा(देव्या?वेद्यां) महेश्वरि ॥२३॥
अङ्गं संकोचयन् वामं प्रविशे[3]द्दक्षिणाङ्घ्रिणा ।
यागमन्दिरगांस्तत्र विघ्नानुत्सारयेत् ततः ॥ २४ ॥
पार्ष्णिघातकरस्फोटसमुदञ्चितवक्त्र[4]कैः ।
तालत्रयमिदं कृत्वा विघ्नान्सर्वानपाहरेत् ॥ २५ ॥
ततः पुनर्हुंफडिति पार्श्वमूर्ध्व[5]मधस्तथा ।
आत्मनः क्रोधदृष्ट्याथ निरीक्ष्य सुमना भवेत् ॥ २६ ॥
वीक्षणं (सर्व?वर्म)बीजेन यज्ञभूमेः समीरितम् ।
त(तू?त्तु)र्यो बिन्दुसंयुक्तः कलानादसमन्वितः ॥ २७ ॥
ब[6]र्मबीजमिदं प्रोक्तं धर्मकामार्थसाधनम् ।
प्रोक्षणं चास्त्रमन्त्रेण यागभूमेः समाचरेत् ॥ २८ ॥
अशुद्धपक्षिसंयोगपक्षिविष्टावसेचनम् ।
मूषिकामण्डूकस्पर्शकृमिकीटादिसंगमः ॥ २९ ॥
अज्ञातदूषणं[7] स्थानं मार्जनादौ च यद्भवेत् ।
एवमादीनि नश्यन्ति लोकनात् स्पर्शनात् प्रिये ॥ ३० ॥

---

१ 'री' क. पाठः । २ 'न्ति' ख. पाठः । ३ 'दं' क. पाठः । ४ 'कः' क. पाठः ।
५ 'र्द्धं' क. पाठः । ६ 'ध' ख. पाठः । ७ 'तदूषितं' ख. पाठः ।

मधुकैटभयोर्मेदसंघातैर्दृढतां गता ।
मेदिनी सर्वदाशुद्धा सुरपूजासु सर्वतः ॥ ३१ ॥
तस्य दोषस्य मोक्षार्थं कामबीजं लिखेत् क्षितौ ।
नैवेद्यादि स्वयं धृत्वा आच्छाद्य मीनमुद्रया ॥ ३२ ॥
वायुबीजेन संशोष्य वह्निना[2] च मलं दहेत् ।
श्रीवत्समुद्रया दृष्ट्या तत् सर्वमवलोकयेत् ॥ ३३ ॥
यदात्मना न विज्ञातं सम्यक् पुष्पादिदूषणम् ।
अस्पर्शनादिकं वापि यदन्यायार्जितं भवेत् ॥ ३४ ॥
तथा निर्माल्यसंस्पृष्टिः कीटाद्यारोहणं च यत्[3] ।
तत् सर्वं नाशमायाति नैवेद्याद्यवलोकनात् ॥ ३५ ॥
नैवेद्यकादिकं यत्तु पुष्पगन्धादिकं च यत् ।
सर्वमाच्छादितं कार्यं यावदावाहयेत् पराम् ॥ ३६ ॥
आवाह्य स्थापयित्वा तु निराच्छादं प्रकाशयेत् ।
राक्षसाः प्रतिगृह्णन्ति निराच्छादं यतः प्रिये ॥ ३७ ॥
आसनं च ततः कुर्यान्नातिनीचं नचोच्छ्रितम् ।
आसनं चार्घ्यपात्रं च भग्नमासादयेन्न तु ॥ ३८ ॥
कृष्णाजिने मोक्षसिद्धिः श्रीमोक्षौ व्याघ्रचर्म्मणि ।
काम्यार्थं कम्बले चैवमभीष्टं रक्तकम्बले ॥ ३९ ॥
कुशासने सर्वसिद्धिर्मारणे कृष्णकम्बलम् ।
त्रिपुरापूजने शस्तं रक्तकम्बलमासनम् ॥ ४० ॥
नैतद् द्विहस्ततो दीर्घं सार्धहस्ता(नु?न्न)विस्तृतम् ।
न त्र्यङ्गुलात् समुच्छ्रायं पूजाकर्म्मणि संग्रहेत् ॥ ४१ ॥

१ 'धा' क. पाठः । २ 'म' क. पाठः । ३ 'चरेत्' क. पाठः ।

यथेष्टं चार्म्मणं कुर्यात् पूर्वोक्तं सिद्धिदायकम् ।
न दीक्षितो विशेज्जातु कृष्णसाराजिने गृही ॥ ४२ ॥
धरण्यां दुःखसंभूतिर्दौर्भाग्यं[1] दारुजासने ।
आम्रनिम्बकदम्बानामासनं वंशनाशनम्[2] ॥ ४३ ॥
वकुले किंशुके चैव पनसेषु हतश्रियः ।
वंशेष्टकाश्मधरणीतृणपल्लवनिर्म्मितम्[3] ॥ ४४ ॥
वर्जयेदासनं मन्त्री दारिद्र्यव्याधिदुःखदम् ।
नाराचैर्वारिभिन्नं स्याद्विशीर्णं भग्नमेव च ॥ ४५ ॥
पर्युषितं परेषां तद्धौतं च विवर्जयेत् ।
गान्तारीनिर्म्मितं[4] शस्तं नानादारुमयं[5] शुभम् ॥ ४६ ॥
न यथेष्टासनो भूयात् पूजाकर्म्मणि साधकः ।
काष्ठादिकासनं कुर्यान्मितमेव सदा प्रिये ॥ ४७ ॥
चतुर्विंशत्यङ्गुलेन[6] दीर्घं काष्ठासनं शिवे ।
षोडशाङ्गुलविस्तीर्णमुच्छ्रायाच्चतुरङ्गुलम् * ॥ ४८ ॥
तदर्धाङ्गुलं वा कुर्यान्नोच्छ्रितं चात आचरेत् ।
धरण्या वस्त्रसंयोगाद् दारुजे कम्बलस्य च ॥ ४९ ॥
कौशेयाजिनसंयोगो हन्ति पुण्यं पुरातनम् ।
यथाशक्त्येकतो मन्त्री शस्तासनमुपाविशेत् ॥ ५० ॥
पाणिभ्यामासनं धृत्वा विहितं विस्तरेद् भुवि ।

---

१ ‘तिद्दो’ क. पाठः । २ ‘सर्वं क. पाठः । ३ ‘बिल्वज’ ख. पाठः । ४ ‘रुभा’ [illegible]. पाठः । ५ ‘न्यद्दा’ ख. पाठः । ६ ‘लं हि’ ख. पाठः ।

* कम्बलं चार्मणं शैलं महामायाप्रपूजने ।
प्रशस्तमासनं देवि कथितं वरवर्णिनि ॥ इत्याधिकः ख. पाठः ।

पराबीजं* समुच्चार्य ततश्चाधारपूर्वकम् ॥ ५२॥
शक्तिपदं समालिख्य कमलासनमालिखेत् ।
ङेन्तं नमःपदं कुर्यादनेनैवासनं यजेत् ॥ ५२॥
मूलप्रकृतिं तत्रैव कूर्मं च परिचिन्तयेत् ।
अनन्तं चापि संपूज्य पृथिव्यर्घ्यं निवेदयेत् ॥ ५३
प्रणवं पूर्वमुच्चार्य पृथिव्यै नम इत्यपि ।
पाणिभ्यामासनं धृत्वा स्मरेदेवं विधानतः ॥ ५४ ॥
मेरुपृष्ठ ऋषिः प्रोक्तः सुतलं छन्द ईरितम् ।
कूर्मो वै देवता चात्र आसनस्योपवेशने ॥ ५५ ॥
विनियोगस्तथा प्रोक्त उपविशेत् समन्त्रकम् ।
पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता ॥
त्वं च धारय मां नित्यं पवित्रमासनं कुरु ।
दुःशिल्पिरचितत्वादि यदन्यासनदूषणम् ॥ ५७ ॥
अज्ञातरूपकं याति विलयं विधिना प्रिये ।
पदद्वयं समं सम्यगूरुद्वयोपरिस्थितम् ॥ ५८ ॥
सव्यं पादमुपादाय दक्षिणोपरि विन्यसेत् ।
विष्टभ्य कट्योः पार्ष्णी तु नासाग्र(ग्र?न्य)स्तलोचनः
पद्मासनं भवेदेतत् प्रशस्तं त्रिपुरार्चने ।
स्वस्तिकं गोमुखं चैवमूर्ध्वस्वस्तिकमेव वा ॥ ६० ॥
पर्यङ्कमासनं शस्तमेवं बद्धासनः प्रिये ।
पश्यन्नभीष्टदेवं च पाददोषं न पश्यति ॥ ६१ ॥

---

* परेति ह्रींबीजमत्र ज्ञेयम् ।

न युक्तमन्यथा पाददर्शनं सुरपूजने ।
दिग्विभागेषु कौवेरी दिक् शिवाप्रीतिदायिनी ॥ ६२ ॥
तस्मात् तन्मुख आसीनः पूजयेत् त्रिपुरां सदा ।
उत्तराभिमुखो भूत्वा यदा देवीं प्रपूजयेत् ॥ ६३ ॥
उत्तराशा तदा देवि पूर्वाशैव न संशयः ।
ईशानमग्निकोणं स्याद्वायुकोणं तथेशकम् ॥ ६४ ॥
दक्षिणाशा तदा ज्ञेया पश्चिमाशा महेश्वरि ।
राक्षसं वायुकोणं स्यादाग्नेयं राक्षसं भवेत् ॥ ६५ ॥
प्राक्प्रत्यङ्मुखपूजायां लौकिकं पश्चिमं स्मृतम् ।
दक्षिणोत्तरपूजायां संमुखं पश्चिमं स्मृतम् ॥ ६६ ॥
योगिनीचक्रपूजायां दिगियं नान्यथा भवेत् ।
कुङ्कुमारुणदेहस्तु रक्ताभरणभूषितः ॥ ६७ ॥
रक्तासनोपविष्टस्तु लाक्षारुणगृहे स्थित(म्?ः) ।
ताम्बूलरागवदनो धूपामोदसुगन्धितः ॥ ६८ ॥
कर्पूरक्षोददिग्धाङ्गो रक्तचन्दनभूषितः ।
सर्वशृङ्गारवेशाढ्यस्त्रिपुरीकृतविग्रहः ॥ ६९ ॥
मनःसंकल्परक्तो वा साधकः स्थिरमानसः ।
कृताञ्जलिपुटो भूत्वा मन्दस्मितमुखाम्बुजः ॥ ७० ॥
वामकर्णोर्ध्वभागे[2] तु गुरुं च प्रणमेत् ततः ।
दक्षकर्णोर्ध्वभागे[3] तु गणेशं प्रणमेद् बुधः ॥ ७१ ॥
दुर्गां नमेत् पुरोभागे पृष्ठतः क्षेत्रनायकम् ।

१ 'दग्निश्च' ख. पाठः । २ 'र्द्ध' क. पाठः । ३ 'र्द्ध' क. पाठः ।

स्वदक्षे वामतो देव्या दीपं संस्थापयेत्ततः ॥ ७२ ॥
ततो रमिति मन्त्रेण शिखां दीपस्य संस्पृशेत् ।
देवतीर्थेन देवेशि संस्पृश्य च विधानतः ॥ ७३ ॥
सुप्रकाशो महादीपः सर्वतस्तिमिरापहा ।
सबाह्याभ्यन्तरं ज्योतिर्दीपोऽस्तु शुभदायकः ॥ ७४ ॥
स तस्य शुभदो दीपो भवेत् स्पर्शनमात्रतः ।
पतङ्गकीटकेशादिदाहक्रव्यादसङ्गतः[1] ॥ ७५ ॥
वसामज्जास्थिसंभूतिर्यदाद्यनुपयोगि(नः?ता) ।
अज्ञातरूपकं सर्वं दोषं स्पर्शाद्विनाशयेत् ॥ ७६ ॥
रोचनाकुङ्कुमाभ्यां च कस्तूरीचन्दनेन्दुभिः ।
रञ्जितं चक्रराजं च स्वयंभूकुसुमैर्युतम् ॥ ७७ ॥
सिन्दूररजसाक्रान्तं पुरतः सिंहविष्टरे ।
संस्थाप्य सहसा देवि योगिनीभिः समं ततः ॥ ७८ ॥
देवीरूपं विचिन्त्याथ चक्रे पुष्पाञ्जलिं दिशेत् ।
अशून्यं[2] कुसुमैः कुर्याच्छून्ये विघ्नाद्यनेकशः[3] ॥ ७९ ॥
गन्धपुष्पाक्षतादीनि दक्षभागे निधापयेत् ।
प्रक्षालनाय करयोः पात्रं पश्चान्निधापयेत् ॥ ८० ॥
अर्घ्यादिकं पुरोभागे सव्ये कुम्भं निधापयेत् ।
मण्डलं वामतः कृत्वा जलेन चतुरस्रकम् ॥ ८१ ॥
वह(तु?न्)कराभ्यां देवेशि तत्राधारं मनोहरम् ।
सुवर्णरौप्यताम्रादिविहितं स्थापयेत् ततः ॥ ८२ ॥

१ 'संह' क. पाठः । २ 'न्यकु' क. पाठः । ३ 'न्य' ख. पाठः ।

वह्निमण्डलरूपं तं कलाभिः सह पूजयेत् ।
कलशं हेमजं धन्[1]यं निश्छिद्रं चापि सुन्दरम् ॥ ८३ ॥
वस्त्रपूतैर्जलैः पूर्णं सगन्धैर्दोषवर्जितैः ।
पानीयं घटमध्यस्थं वी[चन्?क्ष्य] गुह्यं च साधकः ॥८४॥
वामेन पाणिना देवि तत्राधारे निवेशयेत् ।
पूजयेत् सूर्यरूपं तं कलाभिः परमेश्वरि ॥ ८५ ॥
[कल्पं तं च?कलशं तं] समभ्यर्च्य विशेषेण वरानने ।
तत्रस्थममृतं साक्षाच्चन्द्ररूपं विचिन्तयेत् ॥ ८६ ॥
चन्द्रमण्डलमभ्यर्च्य कलाभिः सुरवन्दिते ।
आनन्दभैरवं तत्र यजेदानन्दभैरवीम् ॥ ८७ ॥
यद्यन्यद्दूषणं पात्रे तोये वा[2]ज्ञानतो भवेत् ।
तत्सर्वं नाशमायाति पूजार्हः कलशो भवेत् ॥ ८८ ॥
पात्रमस्त्राम्बुभिः प्रोक्ष्य दक्षतो वह्निमण्डले[3] ।
साधारं स्थापयेद्देवि पूजयेत् तं यथाविधि ॥ ८९ ॥
शुद्धोदकेन संपूर्[4]णं मूल[5]विद्यां ततो जपेत् ।
प्रोक्षयेत्तेन कलशं प्रोक्षणीस्थेन वारिणा ॥ ९० ॥
वामतस्तु तथा शङ्खं प्रतिष्ठाप्य विधानतः ।
तदुत्तरत एवास्मिन् पाद्यमाचमनीयकम् ॥ ९१ ॥
चक्रोपरि शिवां नत्वा भूतशुद्धिमथाचरेत् ।
स्वभावतः सदाशुद्धं पञ्चभूतात्मकं वपुः ॥ ९२ ॥
(मनः?सदा)पूतिसमायुक्तं श्लेष्मविण्मूत्रपिच्छिलम् ।

---

१ 'धा' क. पाठः । २ 'रा' क. पाठः । ३ 'दक्षिणे स्थापयेत्ततः ख. पाठः ।
४ 'संपूज्य' ख. पाठः । ५ 'मन्त्रं' ख. पाठः ।

तस्यैव हि विशुद्ध्यर्थं वायूग्निसलिलाक्षरैः ॥ ९३ ॥
शोषदाहौ तथा भस्मप्रोत्सादोऽमृतवर्षणम् ।
आप्लावनं च कर्तव्यं पूरकुम्भकरेचकैः ॥ ९४ ॥
पञ्चशुद्धिविहीनेन कृतं यदभिचारवत् ।
विपरीतफलं दद्यादभक्त्याभ्यर्चनं तथा ॥ ९५ ॥
शरीराकारभूतानां भूतानां यद्विशोधनम् ।
अव्ययब्रह्मसंस्पर्शाद् भूतशुद्धिरियं प्रिये ॥ ९६ ॥
अन्तःकरणमध्ये तु ज्योतिरात्[1]मा प्रवर्तते ।
लिङ्[2]गदेहं तु तं[3] प्राहुर्योगिनस्तत्त्ववेदिनः ॥ ९७ ॥
तस्य वै शोधनं चैव सर्वशुद्धिः प्रजायते ।
तदेव विश्वजननकारणं जन्मकारणम् ॥ ९८ ॥
तत्प्रतीतौ भवेन्मुक्तिर्नान्यतो जन्मकोटिभिः ।
प्राणायामत्रयं कृत्वा योनिमुद्रां ❀ तथा स्मरेत् ॥
विद्याकूटत्रयं देवि वह्न्यर्केन्दुमयं धिया ।
पुरत्रयेऽथ संचिन्त्य तेषामैक्यं ततः स्मरेत् ॥ १०० ॥
तस्मिंस्तेजोमये (विश्वे?बिम्बे) सच्चिदानन्दधामनि ।
केवलानुभवानन्दे पर[4]ब्रह्मणि शाश्वते ॥ १०१ ॥
निमज्य बिन्दुगे धाम्नि क्षणं स्थित्वा तु चिन्तयेत् ।
बालार्ककिरणारक्तं तत्तत्तेजोमयं स्मरेत् ॥ १०२ ॥

---

१ 'या' ख. पाठः । २ 'ङ्गं' ख. पाठः । ३ 'तत्' ख. पाठः । ४ 'रम्' ख.
❀ तल्लक्षणं यथा— मिथः कनिष्ठके बद्ध्वा तर्जनीभ्यामनामिके । अनामिको-
र्ध्वदीर्घमध्यमयोरधः । अङ्गुष्ठाग्रद्वयं न्यसेद्योनिमुद्रेयमीरिता ॥ इति ।

शुद्धलाक्षामृताम्भोधिमध्ये चातिमनोहरे[1] ।
नवरत्नमये द्वीपे तच्चिन्तामणिमण्डपे ॥ १०३ ॥
रत्नसिंहासनाम्भोजे वह्न्यर्केन्दुस्वरूपिणीम् ।
बालार्ककोटिसंकाशां तुरीयां परमां कलाम् ॥ १०४ ॥
दक्षिणाधःकरे बाणान् वामाधो धनुरेव च ।
दक्षिणोर्ध्वे(शृ?स्त्र) णिं वामे पाशं चापि करे[2] धृतम् ॥१०५॥
अरुणामरुणाकल्पवसनादित्रयान्विताम् ।
आत्माभेदेन संचिन्त्य शुद्धज्ञानस्वभाविनम्[3] ॥ १०६ ॥
केवलानुभवानन्दमात्मानं परिचिन्तयेत् ।
ओंह्रींहंसस्ततः सोहं स्वाहेति मनुना शिवे ॥ १०७ ॥
बालाबीजत्रयस्यान्ते महात्रिपुरसुन्दरि ।
आत्मानं रक्षरक्षेति कुर्याद्रक्षां हृदि स्पृशन् ॥
दिग्बन्धः स्वास्त्रिया(?)चैवं छोटिकाभिः समन्ततः ॥१०८॥

---

इति श्रीगन्धर्वतन्त्रे पार्वतीश्वरसंवादे यागधामार्चनभूतशुद्ध्यादिवर्णनं नाम अष्टमः पटलः ॥ ८ ॥

---

१ 'रम्' क. पाठः । २ 'रैर्धृताम्' ख. पाठः । ३ 'नीम्' ख. पाठः । ४ 'स्र' क. पाठः ।

## नवमः पटलः ।

ईश्वर उवाच

देव एव यजेद्देवं नादेवो देवमर्चयेत् ।
न्यासं विना जपं प्राहुरासुरं विफलं शिवे ॥ १ ॥
न्यासात्तदात्मको भूत्वा देवो भूत्वा तु तं यजेत्
प्राणायामैस्तथा ध्यानैर्न्यासैर्देवशरीरता ॥ २ ॥
न्यासविधिं शृणु प्राज्ञे करशुद्धिपुरःसरम् ।
मातृकाद्यं समुद्धृत्य द्वितीयं च सबिन्दुकम् ॥ ३ ॥
शान्तान्तं [1]कादिसंयुक्तमेकारान्तान्तयोजितम् ।
एवमेषा महाविद्या करशुद्धिकरी * मता ॥ ४ ॥
गृहीत्वा रक्तपुष्पं च सगन्धं साधकस्ततः[2] ।
अनेनैव तु मन्त्रेण पुष्पं हस्ततलस्थितम् ॥ ५ ॥
संमार्ज्य सव्यहस्तेन वामेन पाणिना ततः ।
निर्मञ्छ्य कामबीजेन जिघ्रेपेद्वाग्भवेन तु ॥ ६ ॥
ऐशान्यां निःक्षिपेदेतच्छेष[3]बीजेन पार्वति ।
अङ्गुल्यग्राणि शुद्धानि पुष्पस्य ग्रहणाद्भवेत् ॥ ७ ॥
मर्दनात् करयोः शुद्धिर्निर्मञ्छनात्तु पृष्ठयोः ।
घ्राणाद्देवाश्च तुष्यन्ति तीर्थानां च समागमः ॥ ८ ॥
प्रक्षेपात् सर्वविघ्नानां दूरसंस्थानमेव च ।

---

१ 'न्तक' क. पाठः । २ 'कोत्तमः' ख. पाठः । ३ 'शव' ख. पाठः ।

* सबिन्दु मातृकाद्यं अं द्वितीयं च आं शान्तेत्यादिना सौः इत्येषा करशुद्धि

दुर्गन्धोच्छिष्टसंस्पर्शदूषणं करयोस्तु यत् ॥ ९ ॥
अज्ञातरूपं तत्सर्वं नाशयेद्विधिनामुना ।
करशुद्धिं विधायादावृषिन्यासादिकं ततः ॥ १० ॥
ऋषिच्छन्दोदैवतानां विन्यासेन विना यदा ।
जप्यते साधितेऽप्येष न तत्र तत्फलं लभेत् ॥ ११ ॥
ऋषिरस्या महेशानि दक्षिणामूर्तिरव्ययः ।
पंक्तिश्छन्दस्तथा प्रोक्तं विद्यायाः शृणु पार्वति ॥ १२ ॥
देवता परमेशानी महात्रिपुरसुन्दरी ।
विनियोगः समाख्यातो भुक्तिमुक्तिप्रसाधने ॥ १३ ॥
शिरसि मुखवृत्ते च हृदये च प्रविन्यसेत् ।
मातृकां शृणु देवेशि सर्वपापविनाशिनीम् ॥ १४ ॥
या ब्राह्मीप्रमुखा देव्यो मातरः परिकीर्तिताः ।
तासां मन्त्राणि सर्वाणि व्यञ्जनानि स्वैरास्तथा ॥ १५ ॥
चन्द्रबिन्दुसमायुक्ताः सर्वकामफलप्रदाः ।
ऋषिः संमोहनः प्रोक्तश्छन्दो गायत्रमुच्यते ॥ १६ ॥
देवतेयं समुद्दिष्टा समस्तजननी परा ।
शक्तयस्तु (सु?स्व)रा देवि बीजं व्यञ्जनसंचयः ॥ १७ ॥
विनियोगः समुद्दिष्टः समस्तजनमोहने ।
स्वरेण दीर्घयुक्तेन षडङ्गानि समाचरेत् ॥ १८ ॥
हृदयं च शिरो देवि शिखा च कवचं ततः ।
नेत्रम[न्त्रं?स्त्रं]न्यसेत् स्वीयमुद्राजातियुतं नमः ॥ १९ ॥

---

१ 'त्स' क. पाठः । २ 'च्छ' क. पाठः । ३ 'सु' क. पाठः । ४ 'च्छ' क. पाठः ।

स्वाहा वषड् हुं च वौषट् फडन्तं योजयेत् प्रिये ।
षडङ्गोऽयं मातृकायाः सर्वपदोत्तरः शिवे ॥ २० ॥

बालार्ककोटिरुचिरां स्फटिकाक्षमालां
कोदण्डमिक्षुजनितं [स्व?स्म]रपञ्चबाणान् ।
विद्यां च हस्तकमलैर्दधतीं त्रिनेत्रां
ध्यायेत् समस्तजननीं नवचन्द्रचूडाम् ॥ २१ ॥

ह्यष्टपत्राम्बुजे कण्ठे स्वरान् षोडश चिन्तयेत् ।
हृत्पद्मे द्वादशच्छदे कादीन् द्वादश विन्यसेत् ॥ २
दशपत्राम्बुजे नाभौ डकारादीन् न्यसेद्दश ।
षट्पत्रे लिङ्गमध्यस्थे बकारादीन् न्यसेच्च षट् ॥ २
आधारे चतुरो वर्णान् वादीन् न्यसेच्चतुर्दले ।
हक्षौ भ्रूमध्यगे पद्मे द्विदले परिचिन्तयेत् ॥ २४ ॥
इत्यन्तर्मातृकाः स्मृत्वा बहिर्न्यासं ततश्चरेत् ।
❀अकारादिक्षकारान्ता मातृकाः परिकीर्तिताः ॥ २
प्रत्येकं कामबीजाद्याः सर्वकामफलप्रदाः ।
चन्द्रबिन्दुसमायुक्ता नमोन्ताश्च प्रविन्यसेत् ॥ २६
ललाटे मुखवृत्ते च नेत्रकर्णेषु पार्वति ।
नासागण्डौष्ठदन्तेषु समूर्धास्येषु शांकरि ॥ २७ ॥
पाणिपादयुगस्यान्तःसंध्यग्रेषु क्रमाच्छिवे ।
पार्श्वद्वये पृष्ठनाभिजठरेषु क्रमान्न्यसेत् ॥ २८ ॥

---

१ 'स्वाहावषड्वौंपडस्त्रं फड' क. पाठः । २ 'शिवे' क. पाठः ।

❀ बहिर्मातृकान्यासमाह अकारेत्यादिना । क्लींअंनमो ललाटे इत्येवं ज्ञेयम् ।

यादीन् सधातुकान् देवि क्रमेणैव ततो न्यसेत् ।
त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्राणि धातवः ॥ २९ ॥
प्राणात्मा च जीवात्मा च परमात्मा तथैव च ।
हृदये बाहुमूले च तथा कण्ठप्रदेशके ॥ ३० ॥
स्कन्ध(कक्ष)योर्हृदयप्रान्ते पाणिपादयुगे तथा ।
जठराननयोर्देवि सर्वाङ्गेषु क्रमान्न्यसेत् ॥ ३१ ॥
*ललाटेऽनामिकां मध्यां विन्यसेन्मुखपङ्कजे ।
तर्जनीमध्यमानामाङ्गुष्ठा एव तु नेत्रयोः ॥ ३२ ॥
अङ्गुष्ठं कर्णयोर्देवि कनिष्ठाङ्गुष्ठकौ नसोः ।
मध्यास्तिस्रो गण्डयोश्च मध्यमामोष्ठयोः प्रिये ॥ ३३ ॥
अनामां दन्तयोर्देवि मध्यमामुत्तमाङ्गके ।
मुखेऽनामां मध्यमां च हस्तपादेऽथ पार्श्वयोः ॥ ३४ ॥
कनिष्ठानामिकामध्यास्तास्तु पृष्ठेऽथ पार्वति ।
तास्तु साङ्गुष्ठका नाभौ सर्वाः कुक्षौ प्रविन्यसेत् ॥ ३५ ॥
हृदये च तलं सर्वं बाह्वोः कण्ठप्रदेशके ।
स्कन्धयोर्हृदयप्रान्ते हस्तपादयुगे तथा ॥ ३६ ॥
जठरास्ययुगे देवि तलमेव प्रकीर्तितम् ।
एतास्तु मातृकामुद्राः क्रमेण परिकीर्तिताः ॥ ३७ ॥
अज्ञात्वा विन्यसेद्यस्तु न्यासः स्यात्तस्य निष्फलः ।
अनामया वा पुष्पैर्वा मनसा वा न्यसेदुत ॥ ३८ ॥

---

१ 'ज्ञ' क. पाठः । * मातृकान्यासमुद्रा निर्दिशति ललाटेऽनामिकामित्यादिना ।

एवं तु मातृकान्यासं यः कुर्यात् परमेश्वरि ।
सर्वयज्ञेषु पूजासु पूतो योग्यश्च जायते ॥ ३९ ॥
नातः परतरो मन्त्रो[1] विद्यते क्वचिदेव हि ।
ये ये मन्त्रा देवतानामृषीणामथ रक्षसाम् ॥ ४० ॥
ते सर्वे मातृकामन्त्रे नित्यमेव प्रतिष्ठिताः ।
सर्वमन्त्रमयश्चायं सर्वदेवमयस्तथा ॥ ४१ ॥
चतुर्वर्गप्रदश्चायं तुष्टिपुष्टिप्रदायकः ।
सर्वपीठमयश्चापि मातृकान्यास उच्यते ॥ ४२ ॥
यः कुर्यान्मातृकान्यासं विनैव सुरपूजनात् ।
तस्माद्बिभेति सततं भूतग्रामश्चतुर्विधः ॥ ४३ ॥
तं द्रष्टुमपि देवाश्च स्प(र्श?र्ध)यन्ति महौजसम् ।
स तु सर्वं[3] वशं कुर्यान्न च याति पराभवम् ॥ ४४ ॥
पुटितां सर्वबीजेन समस्तजननीं पराम् ।
पञ्चाशन्मातृकां विद्यां जपेदष्टोत्तरं शतम् ॥ ४५ ॥
वाग्देवतां हृदि ध्यात्वा मूर्ध्नि सर्वाक्षराणि तु ।
द्विधा च मातृकामन्त्रैः सक्रमैर्व्युत्क्रमैरपि ॥ ४६ ॥
मन्त्रयित्वा महेशानि प्रभाते यः पिबेज्जलम् ।
स वाग्मी पण्डितो धीमाञ्जायते प्रवरः कविः ॥ ४
चन्द्रबिन्दुसमायुक्तान् स्वरान् पूर्वं पठेद्बुधः ।
व्यञ्जनानि तु सर्वाणि केवलानि पठेत् प्रिये ॥ ४८
जलं हस्ततले गृह्य पठित्वाक्षरसंहतिम् ।

---

१ 'रं मन्त्रं' क. पाठः । २ 'यं' क. पाठः । ३ 'वं' क. पाठः ।

अभिमन्त्र्य च तत्तोयं प्रथमं पू(र्व?र)कैः पिबेत् ॥ ४९ ॥
कुम्भकेन द्वितीयं तु तृतीयं रेचकेन तु ।
एवं सकृत् त्रिवारं तु पीत्वा तोयं विचक्षणः ॥ ५० ॥
दृढाङ्गः पण्डितो भूयात् पुत्रपौत्रसमन्वितः ।
त्रिसंध्यमथ पीत्वैवं मातृकामन्त्रमन्त्रितम् ॥ ५१ ॥
तोयं कवित्वमाप्नोति सर्वान् कामांस्तथैव च ।
सततं कुरुते यस्तु मातृकामन्त्रमन्त्रितम् ॥ ५२ ॥
तोयदा[पा]नं महादेवि पूरकुम्भकरेचकैः ।
स सर्वकामान् संप्राप्य पुत्रपौत्रसमृद्धिमान् ॥ ५३ ॥
भूत्वा महाकविर्लोके बलवान् सत्यविक्रमः ।
सर्वत्र दुर्लभो भूत्वा चान्ते मोक्षमवाप्नुयात् ॥ ५४ ॥
राजानमथवा राजपुत्रं भार्यां च वा प्रिये ।
वशीकरोति न चिरान्मातृकामन्त्रपालकः ॥ ५५ ॥

---

इति श्रीगन्धर्वतन्त्रे पार्वतीश्वरसंवादे करशुद्ध्यन्तर्बहिर्मातृकान्यासवर्णनं
नाम नवमः पटलः ॥ ९ ॥

# दशमः पटलः ।

श्रीदेव्युवाच

षोढाख्यां मातृकां देव कथयस्व वृषध्वज ।

ईश्वर उवाच

गणेशैः प्रथमो न्यासो द्वितीयस्तु ग्रहैर्मतः ॥ १ ॥

नक्षत्रैश्च तृतीयः स्याद्योगिनीभिश्चतुर्थकः ।

राशिभिः पञ्चमो न्यासः षष्ठः पीठैर्निगद्यते ॥ २ ॥

षोढा न्यासस्त्वयं प्रोक्तः सर्वकामफलप्रदः ।

श्रीदेव्युवाच

फलं चास्य प्रयोगं च विशदीकुरु तत्त्वतः ॥ ३ ॥

ईश्वर उवाच

नारायणोऽस्यर्षि प्रोक्तश्छन्दस्त्रिष्टुबुदाहृतम् ।

शिवशक्त्यात्मवर्णा(ऋषी?राशि)र्देवता च सदाशिवः

हंसः शक्तिः परा बीजं श्रीबीजं चैव कीलकम् ।

पुरुषार्थप्रसाध्ये च विनियोगः प्रकीर्तितः ॥ ५ ॥

मूर्ध्नि संचिन्तयेद्देवि श्रीगुरुं शिवरूपिणम् ।

(१) रमाबीजं परं पश्चाद्धंसात् स्वराद्यमीरितम् ॥ ६

विघ्नेश्वराय वै प्रोच्य श्रियै नमस्ततः परम् * ।

विघ्नराजादिकानेवं शक्तियुक्तांस्तथैव च ॥ ७ ॥

विन्यसेन्मातृकास्थाने मातृकैकान्वितं शिवे ।

विघ्नराजाय देवेशि(क्रि?ह्रि)यै नमस्ततः परम् । ८

१ 'ऋषिः' क पाठः । * अंविघ्नेश्वराय श्रियै नमो ललाटे इत्यादिरूपो न्यासो बोद्ध

विनायकाय च तुष्ट्यै शांत्यै शिवोत्तमाय च ।
विघ्नकर्[1]त्रे तथा पुष्ट्यै नम इति प्रविन्यसेत् ॥ ९ ॥
विघ्नहर्त्रे सरस्वत्यै नम इति प्रविन्यसेत् ।
विनायकाय मेधायै पूर्ववदथ विन्यसेत् ॥ १० ॥
एकदन्ताय कान्त्यै च द्विदन्ताय च यामिनीम् ।
गजवक्राय मोहिन्यै निरञ्जनजटे❀तथा ॥ ११ ॥
कपर्दिने च तीव्रायै ज्वालिनी दीर्घवक्त्रकः ।
शङ्कुकर्णाय नन्दायै स्वरसा च वृषध्वजः ॥ १२ ॥
गणनाथश्च कामिन्या गजेन्द्रश्च शुभा तथा ।
जयिनी शूर्पकर्णश्च सत्यया च त्रिलोचनः ॥ १३ ॥
लम्बोदराय विघ्नेश्यै महानन्द[3]ः स्वरूपिणी ।
कामदया चतुर्मूर्तिः सदाशिवस्ततः परम् ॥ १४ ॥
मदविह्वलया युक्त आमोदो विकटायुतः ।
दुर्मुखाय च घूर्णायै सुमुखो भूतिसंयुतः ॥ १५ ॥
प्रमदाय तथा भूम्यै एकपादो मतिस्तथा ।
द्विजिह्वो रमया युक्तः सुरसेनश्च मानुषी ॥ १६ ॥
मकरध्वजया युक्तो वीरश्च परमेश्वरि ।
षण्मुखाय विकर्णायै वरदो भृङ्ग(?भ्रुकु)टीयुतः ॥ १७ ॥
वामदेवाय लज्जायै दीर्घघोणायुतस्ततः ।
वज्रतुण्डो द्विरण्डश्च धनुर्धरायुतः प्रिये ॥ १८ ॥

---

१ 'ह' क. पाठः 'कृते' ख. पाठः । २ 'का' ख. पाठः । ३ 'न्दस्त्र' क. पाठः ।
❀ निरञ्जनाय जटायै नम इति प्रयोगो बोध्यः ।

सेनान्ये चैव यामिन्यै ग्रामणी रात्रिसंयुतः ।
मत्तश्चन्द्रिकया युक्तो विमत्तायै[1] शशिप्रभा ॥ १९ ॥
तथैव परमेशानि लोलया मत्तवाहनः ।
जटि[ले?ने]चपलाद्यै च मुण्डी ऋद्धियुतस्तथा ॥
खड्गी दुर्भगया युक्तो वरेण्यः [शु?सु]भगायुतः ।
न्यस्तव्यः परमेशानि शिवया वृषकेतनः ॥ २१ ॥
भक्तप्रियाय[3] दुर्गायै मेघनादाय कामिनी ।
कालकुब्जा[4]समायुक्तो गणेश्वरः प्रकीर्तितः ॥ २२ ॥
गणेशो विघ्नहारिण्या न्यस्तव्यः साधकोत्तमैः ।
[२] सूर्यमुखान् महादेवि न्यसेत् कामदुघानथ ॥ २
स्वरान् पूर्वं समुद्धृत्य चन्द्रबिन्दुसमन्वितान् ।
सूर्याय नम उच्चार्य हृदये च प्रविन्यसेत् ॥ २४ ॥
भ्रुवोर्मध्ये तथा सोमं [ष?य]वर्गेण प्रविन्यसेत् ।
भूपुत्रं लोचनद्वन्द्वे कवर्गेण तथैव च ॥ २५ ॥
बुधं च हृदये देवि चवर्गेण प्रविन्यसेत् ।
बृहस्पतिं तथा कण्ठे टवर्गेण प्रविन्यसेत् ॥ २६ ॥
भार्गवं तु गले देशे तवर्गेण तथा प्रिये ।
पवर्गेण शनिं नाभौ राहुं गुदे शवर्गकैः ॥ २७ ॥
ळक्षाभ्यां पादयोः केतुं न्यसेदेवं विधानतः ।
(३) स्वराद्यं च द्वितीयं च अश्विन्यै नम इत्यपि ॥२
ललाटे च प्रविन्यस्य तथान्यानपि विन्यसेत् ।

१ 'लाय' ख. पाठः । २ 'त्रिण्यै' क. पाठः । ३ 'दय' ख. पाठः । ४ '
ख. पाठः । ५ 'जिह्वा' ख. पाठः ।

इंयुतां भरणीं देवि दक्षनेत्रे प्रविन्यसेत् ॥ २९ ॥
ईंउंऊंकृत्तिकां चैव विन्यसेद्वामनेत्रके ।
ऋंॠंऌंॡंयुतां देवि रोहिणीं दक्षकर्णके ॥ ३० ॥
एंयुतां मृगशीर्षां च वामकर्णे प्रविन्यसेत् ।
ऐंकारेण तथार्द्रां च दक्षनासापुटे न्यसेत् ॥ ३१ ॥
ओंऔंपुनर्वसुं चैव वामनासापुटे न्यसेत् ।
कंयुतं च न्यसेत् पुष्यं[2] कण्ठ[3]देशे च पार्वति ॥ ३२ ॥
खगाभ्यां च तथाश्लेषां दक्षस्कन्धे प्रविन्यसेत् ।
घङाभ्यां च मघां देवि वामस्कन्धे प्रविन्यसेत् ॥ ३३ ॥
चंपूर्वफल्गुनीं चैव दक्षकुर्परके न्यसेत् ।
वामकुर्परके देवि छंजंउत्तरफल्गु(णी?नी)म् ॥ ३४ ॥
दक्षिणे मणिबन्धे तु झंञंहस्तं च विन्यसेत् ।
मणिबन्धे तथा वामे टंठंचित्रां प्रविन्यसेत् ॥ ३५ ॥
डंकारेण तथा स्वातीं[4] दक्षहस्ततले न्यसेत् ।
ढणाभ्यां च विशाखां वै वामहस्ततले तथा ॥ ३६ ॥
तथाभ्यामनुराधां च न्यसेन्नाभौ समाहितः ।
दंधंज्येष्ठां कटौ दक्षे त्रिभिर्मूलां च वामतः ॥ ३७ ॥
पूर्वाषाढां बकारेण दक्षोरौ विन्यसेत् ततः ।
भकारेणोत्तराषाढां वामोरौ तदनन्तरम् ॥ ३८ ॥
दक्षजानुप्रदेशे च मंश्रवणं[6] च विन्यसेत् ।

---

१ ‘तां’ क. पाठः । २ ‘ष्यां’ क. पाठः । ३ ‘एठे’ क. पाठः । ४ ‘स्वां’ क. पाठः ।
५ ‘ती’ क. पाठः । ६ ‘णां’ क. पाठः ।

यंरंयुतां धनिष्ठां च वामे जानुनि विन्यसेत् ॥ ३९
शतभिषां लकारेण दक्षजङ्घाप्रदेशके ।
वंशंवर्णस्थितां वामे पूर्वभाद्रपदां न्यसेत् ॥ ४० ॥
तथैवोत्तरभाद्रां[1] च षसहैर्दक्षपादतः ।
ळक्षाभ्यां बिन्दु(मदूद्वा?मूर्ध)भ्यां रेवतीं विन्यसेत्ततः
(४) रक्ताक्षीं च श्वेतवर्णां पशुभीतिकरां[2] शुभाम्
खड्गं च चषकं चैव शूलं खट्वाङ्गमेव च ॥ ४२ ॥
अनुग्रामुग्रदंष्ट्रां च एकास्यां रिपुनाशिनीम् ।
पायसान्नप्रसक्तां[3] च स्वरैः कल्पितविग्रहाम् ॥ ४३ ॥
डाकिनीं भावयेद्दीवीं सर्वकामप्रपूरणीम् ।
*स्वरान् पूर्वं समुद्धृत्य चन्द्रबिन्दुसमन्वितान् ॥
ठान्तद्वयं ततः पश्चात् पाशतुरीयभेदितम् ।
नादबिन्दुकलायुक्तं बीजद्वयमुदीरितम् ॥ ४५ ॥
ठान्तं भान्तं महीबीजं वारुणं वह्निवायवौ ।
वामकर्णस्ततो देवि नादबिन्दुकलायुतः ॥ ४६ ॥
डाकिन्यै नम इत्यन्ते संबोध्य डाकिनीं ततः ।
[दुग्धान्न?त्वग्धातु]गत इत्युक्त्वा चतुःषष्टिपदं तत
लक्षकोटिपदस्यान्ते योगिनीस्वामिनीति च ।
सर्वसत्त्ववशं ब्रूयात् क(वि?रि)शब्द(मयं?पदं)तत

---

१ 'द्रं' क. पाठः । २ 'ह' क पाठः । ३ 'श' क. पाठः ।

* अँ आँ इँ ईँ उँ ऊँ ऋँ ॠँ लृँ ॡँ एँ ऐँ ओँ औँ अँ अँः डाँ ढँ यूँ डाकिन्यै नमः डाकिनि त्वग्धातुगते चतुष्षष्टिलक्षकोटियोगिनी स्वामिनि = करि आज्ञां मे देहि मम विच्चे । इति स्पष्टम् ।

आज्ञां मे देहि तत्पश्चान्मम वि(क्रि?च्चे)पदद्वयम् ।
विशुद्धौ विन्यसेद्देवि राकिनीं चिन्तयेत् ततः ॥ ४६ ॥
हृत्पुण्डरीकमध्यस्थां दंष्ट्राभीमसुखीं तथा ।
नवीननीरदश्यामां पीनोन्नतपयोधराम् ॥ ५० ॥
शूलं डमरुकं चैव दधतीं वज्रपद्मके[1] ।
शुक्ला(न्वाश?न्नास)क्तचित्तां च कठवर्णात्मविग्रहाम् ॥५१॥
कठवर्णास्ततो रेफे पूर्ववत् स्वरभेदिते ।
[चा?ठा]न्तं हित्वाग्निबीजं च पूर्ववत् तदनन्तरम् ॥ ५२ ॥
राकिन्यै नम आभाष्य संबोध्य च तथा भवेत् ।
असृग्धातुगते पश्चाद् द्वात्रिंशल्लक्षकोटि च ॥ ५३ ॥
योगिनीस्वामिनि प्रान्ते पूर्ववत् तदनन्तरम् ।
रक्तवर्णां त्रिनेत्रां च देवदेवेशसंयुताम् ॥ ५४ ॥
दं[ष्ट्रीं?ष्ट्रिणीं]सुग्ररूपाभां वज्रं[2] शक्तिं वराभयौ ।
दधतीं चिन्तयेत् देवीं गुडभक्तोत्सुकां पराम् ॥ ५५ ॥
एवं ध्यात्वा महेशानीं डफवर्णात्मविग्रहाम् ।
डफवर्णास्ततो देवि भूबीजद्वितयं तथा ॥ ५६ ॥
वह्निं हित्वा म[हा?ही]बीजं पूर्ववदपरं तथा ।
(सा?ला)किन्यै नम उच्चार्य संबोध्य च तथा व्रजेत्[3] ॥५७॥
मांसधातुगते पश्चात् षोडशलक्षकोटितः ।
पूर्ववदपरं सर्वं नाभिपद्मे प्रविन्यसेत् ॥ ५८ ॥
स्वाधिष्ठानाख्यपद्मे च काकिनीं परिचिन्तयेत् ।

---

१ 'वज्रपद्मे च धारिणीम्' क. पाठः । २ 'रुद्रं' क. पाठः । ३ 'भवेत्' ख पाठः ।

पीतवर्णां महामत्तां गजकुम्भोपमस्तनीम् ॥ ५६ ॥
दध्यन्ना[श?स]क्तचित्तां च सुरप्रवरवन्दिताम् ।
शूलं डमरुकं चैव पाशं चाभयमेव च ॥ ६० ॥
वहन्तीं परमेशानीं बादिलान्तात्मविग्रहाम् ।
बादिलान्तास्[1]तथा कांकींकमलवरयूं ततः ॥ ६१ ॥
काकिन्यै नम इत्यन्ते संबोध्य चैव काकिनीम् ।
मेदोधातुगते पश्चात् तथाष्ट(दल?लक्ष)कोटि च ॥
योगिनी[2]स्वामिनि प्रोच्य पूर्ववदपरं तथा ।
पञ्चवक्त्रां त्रिनेत्रां च वह्निभानुस्वरूपिणीम् ॥ ६३ ॥
चापं बाणं तथा पाशं सृ[3]णिं च पुस्तकं तथा ।
ज्ञानमुद्रां च हस्ताब्जैर्दधतीं परमेश्वरीम् ॥ ६४ ॥
मुद्गान्नप्रीतिसंयुक्तां मूलाधारे विचिन्तयेत् ।
वादि[ध?सा]न्तां[4]स्तथा सांसीं[5]समलवरयूं तथा ॥ ६
[शा?सा]किन्यै नम इत्यन्ते संबोध्य सा[6]किनीं ततः
अस्थिधातुगते चैव चतुर्लक्षेति कोटि च ॥ ६६ ॥
योगि(नि?नी) स्वामिनि प्रान्ते वरवरदपदं तथा ।
बिन्दुस्थां शुक्लवर्णां च हक्षवर्णस्वरूपिणीम् ॥ ६७
डमरुं चाक्षसूत्रं च कपालं खड्गमेव च ।
पुस्तकं ज्ञानमुद्रां च दधतीं बाहुभिः सदा ॥ ६८
लोचनत्रयसंयुक्तां षड्वक्त्रां सर्वमोहिनीम् ।

---

१ 'न्त' क. पाठः । २ 'नि' क. पाठः । ३ 'शृ' क. पाठः । ४ 'न्त' पाठः । ५ 'शांशीं श' क. पाठः । ६ 'शा' क. पाठः ।

हरिद्रान्नप्रसक्ता च मधुमद्सुदान्विताम् ॥ ६९ ॥
देवेन्द्रवन्दितां देवीं भावयेद्धाकिनीं पराम् ।
हंक्षंहांहीं च देवेशि हमलवरयूं तथा ॥ ७० ॥
हाकिन्यै नम उच्चार्य संबोध्य चैव हाकिनीम् ।
मज्जाधातुगते पश्चाद् द्विलक्षकोटिशब्दतः ॥ ७१ ॥
शेषं पूर्ववदुद्धृत्य भ्रुवोर्मध्ये प्रविन्यसेत् ।
अकारादिक्षकारान्तां मातृकां सर्वमुच्चरेत् ॥ ७२ ॥
यांयीं[2] तु परमेशानि यमलवरयूं तथा ।
याकिन्यै नम इत्यन्ते संबोध्यैव तु याकिनीम ॥ ७३ ॥
शुक्रधातुगते पश्चाद्दशकोटिपदं ततः ।
पूर्ववच्च प्रविन्यस्य (५) राशिन्यासमतः परम् ॥ ७४ ॥
*वेदाद्यैर्दक्षगुल्फेऽथ मेषं विन्यस्य पार्वति ।
दक्षजानौ वृषं त्र्यर्यैर्वृषणे मिथुनं त्रिभिः ॥ ७५ ॥
द्वाभ्यां कर्कटकं कुक्षौ द्वाभ्यां स्कन्धेऽथ सिंहकम् ।
अनुस्वारविसर्गाभ्यां शवर्गेण च कन्यकाम् ॥ ७६ ॥
दक्षिणे च शिरोभागे विन्यसेद्वीरवन्दिते ।
तथा वामशिरोभागे कवर्गेण तुलां न्यसेत् ॥ ७७ ॥
चवर्गेण तथा स्कन्धे वृश्चिकं विन्यसेत् ततः ।
टवर्गेण तथा कुक्षौ धन्विनं विन्यसेत् ततः ॥ ७८ ॥
मकरं तु तवर्गेण वृषणे (दक्षिणे?वामके) न्यसेत् ।

---

१ 'ष' क. पाठः । २ 'यां' क. पाठः ।

* अँ आँ इँ ईँ मेषाय नमो दक्षगुल्फे इत्यादि ज्ञेयम् । वेदाद्यैश्चतुभिरक्षरैरित्यर्थः ।

पवर्गेण तथा कुम्भं वामजानुनि विन्यसेत् ॥ ७९ ॥
यवर्गेण चकारेण मीनं गुल्फे तु वामके ।
चतुर्थीनतिसंयुक्तं स्थानेष्वेवं क्रमान्न्यसेत् ॥ ८० ॥
(६)अथ [पि?पी]ठानि विधिना[1] यथास्थाने प्रविन्य
परापूर्वं च सर्वेषां मातृकां च पृथक् पृथक् ॥ ८१ ॥
चतुर्थीनतियुक्तानि मातृकावन्न्यसेत् क्रमात् ।
कामरूपं महापीठं वाराणसीं ततः परम् ॥ ८२ ॥
नेपालं[2] च महापीठं पौण्ड्रवर्धनमेव च[3] ।
पुरस्थिरं महादेवि चरस्थिरमतः परम् ॥ ८३ ॥
पूर्णशैलं महापीठमर्बुदं च ततः परम् ।
काश्मीरं च तथा पीठं कान्यकुब्जमथो भवेत् ॥ ८
आम्रातकेश्वरं पीठमेकाम्रं[5] च ततः शिवे ।
त्रिस्रोतः पीठमुद्दिष्टं कामकोट्टं[6]मतः परम् ॥ ८५ ॥
कैलासं भूतनगरं केदारं पीठमुत्तमम् ।
श्रीपीठं च तथौंकारं जालन्धरमतः परम् ॥ ८६ ॥
मालवं च कुलान्तं च देवमातृकमेव च ।
गोकर्णं च ततो देवि मारुतेश्वरमेव च ॥ ८७ ॥
अट्टहासं च विरजं राजगृहमतः परम् ।
पीठं कोल्लगिरिं चैव एलापुरमतः प्रिये ॥ ८८ ॥
कालेश्वरमहापीठं प्रणवं च जयन्तिका ।

---

१ 'व' क. पाठः । २ 'मेदानं' क. पाठः । ३ 'पौणडवर्द्धनं तथा' ख पाठः । ४ 'केशं महा' ख. पाठः । ५ 'म्रं' ख. पाठः । ६ 'टि' ख. पाठः । ७ 'नवं' क. पाठः ।

पीठमुज्जयिनीं चैव क्षीरिकापीठमेव च ॥ ८९ ॥
हस्तिनापुरकं पीठं पीठमुड्डीशमेव च।
प्रयागं चैव षष्ठीशं मायापुरजलेश्वरौ ॥ ९० ॥
मलयं च महापीठं श्रीशैलमथत्रापि च[1]।
मेरुं गिरिं महेन्द्रं च वामनं चापि विन्यसेत् ॥ ९१ ॥
हिरण्यपुरकं पीठं महालक्ष्मीपुरं च वै।
उड्डीयानं महापीठं छायापुरं[2]मतः परम् ॥ ९२ ॥
षोढान्यासस्त्वयं प्रोक्तः सर्वपापहरः सदा।
षोढान्यासविहीनो यः प्रणमेद्देवि सुन्दरीम् ॥ ९३ ॥
सोऽचिरान्मृत्युमाप्नोति नरकं च प्रपद्यते।
एवं न्यस्तशरीरस्तु भवेद् गङ्गाधरः स्वयम् ॥ ९४ ॥
मन्त्री नचात्र संदेहो निग्रहानुग्रहक्षमः।
न तस्य पूज्यो लोकेऽस्मिन् पितृमातृमुखो नरः ॥९५॥
स्वयं च साधकश्रेष्ठो यं कंचन न (विन्दाति?वन्दते)।
स म(र्थो?र्त्यो)मृत्युमाप्नोति नात्र कार्या विचारणा ॥९६॥
नमस्कारं न कुर्वीत ज्येष्ठस्यापि कदाचन।
गुरोरपि न पद्येत[3] म्रियते नात्र संशयः ॥ ९७ ॥
तस्मात् सर्वप्रयत्नेन नमस्कारं विवर्जयेत्।
कामं क्रोधं तथा लोभं मायाहंकारमेव च ॥ ९८ ॥
संकल्पं भोजनालापं न कुर्यात् केनचित्सह।
भोक्तव्यं योषिता सार्धं यत्किंचित् तत्त[4]यैव हि ॥ ९९ ॥

१ 'च तथा प्रिये' ख. पाठः। २ 'पीठ' ख. पाठः। ३ 'वन्देत' क. पाठः।
४ 'न्म' क. पाठः।

विन्यसेद्देवि युक्तात्मा त्रिकालं च दिवा निशि ।
यथा साभ्यासयोगेन सामर्थ्यं तद्वदाम्यहम् ॥ १
यत्रायं निवसेद्देवि षोढान्यासी च साधकः ।
दिव्यं क्षेत्रं भवेत्तत्र समन्ताच्छतयोजनम् ॥ १०
देवाः सर्वे नमस्यन्ति तं नमामि न संशयः ।
कृत्वा न्यासमिमं देवि यत्र गच्छति साधकः ॥
तत्र यद्विषये चैव यन्[1]मानं पुरुषैः सह ।
द्यावान्तरिक्षभूशैलजलारण्यनिवासिनः ॥ १०३ ॥
भूतप्रेतपिशाचाश्च यक्षकूष्माण्डराक्षसाः ।
पश्यन्ति पावकारूढं ये चान्ये हिंसका जनाः ॥
शत्रुसंहतिसंकीर्णे[2] संग्रामेऽथापदेषु च ।
न भयं विद्यते तस्य परत्र शिवतां व्रजेत् ॥ १०५
ये केचित् पापसंघाताः सप्तजन्मान्तरोद्भवाः ।
नश्यन्ति न्यासमात्रेण भास्करेण तमो यथा ॥ १
सतताभ्यासयोगेन षण्मासेन च मानवे[3] ।
दह्यते सर्वपापानि ब्रह्महत्यादिकानि च ।
किंचातिबहुनोक्तेन मम तुल्यो भवेद् ध्रुवम् ॥ १

---

इति श्रीगन्धर्वतन्त्रे पार्वतीश्वरसंवादे षोढान्यासक्रमनिरूपणं
दशमः पटलः ॥ १० ॥

---

१ 'षण्मा' क. पाठः । २ 'र्णौ' क. पाठः । ३ 'वः' क. पाठः ।

## एकादशः पटलः ।

---

ईश्वर उवाच

करशुद्धिर्ऋषिन्[1]यास आसनं च ततः परम्[2] ।
कराङ्गयोः षडङ्गानि वशिन्याद्यमतः परम्[3] ॥ १ ॥
न(र?व]योनिचतुर्व्यूहतत्त्वन्यासादिकं तथा ।
मूलवर्णादिविन्यासः संमोहनाख्य एव च ॥ २ ॥
एतदेव हि नित्यं स्यात् काम्यं चान्यत् प्रकीर्तितम् ।
करशुद्धिकरीपूर्वं *त्रिपुरेति पदं ततः ॥ ३ ॥
अमृतार्णवशब्दोपर्यासनाय नमो मनुः ।
पादयोर्विन्यसेत् पश्चाद्बालान्ते त्रिपुरेश्वरी ॥ ४ ॥
पोताम्बुजासनायान्ते नमो जानुनि विन्यसेत् ।
ह्रीं[4]क्लींसौस्त्रिपुरेत्युक्त्वा सुन्दरीति पदं ततः ॥ ५ ॥
ङेन्तमात्मासनायान्ते नम(उच्चार्य?ऊर्वोः प्र)विन्यसेत् ।
आद्यं[5] मध्यं तथान्तं च(श?कु)मार्याः शिवसंयुतम् † ॥६॥
त्रिपुरवासिनीत्युक्त्वा चक्रासनाय हृत्ततः ।
कटिद्वये[6] प्रविन्यस्य शिवं सोमयुतं कुरु ॥ ७ ॥
एतस्या एव विद्याया ‡ त्रिपुरँश्रीपदं ततः ।
सर्वमन्त्रासनायान्ते नमो गुह्ये प्रविन्यसेत् ॥ ८ ॥

---

१ 'भूतं' ख. पाठः । २ 'पीठन्यासं तथैवच' ख. पाठः । ३ 'मातृकान्यासमेव च' ख. पाठः । ४ 'द्रीं' क. पाठः । ५ 'दि' क. पाठः । ६ 'देशे' क. पाठः । ७ 'रं' क. पाठः ।

* अंआंसौः इति करशुद्धिकरीविद्या । † बालाया बीजत्रये शिवेति हकारेण संयुतम् ।

‡ समनन्तरोक्तविद्याया एव बीजत्रये शिवो हकारः सकारेण युतः ।

† परा च कामबीजं च वारुणं त्विन्द्रसंयुतम् ।
योनियुक्तं सबिन्दुं च त्रिपुरमालिनी ततः ॥ ९ ॥
साध्यासनाय मूले च नम इति प्रविन्यसेत् ।
‡ मायाबीजं रमाबीजं कुमार्याश्च तृतीयकम् ॥ १० ॥
तथा त्रिपुरसिद्धान्ते साध्यसिद्धासनं ततः
नाभिदेशे प्रविन्यस्य हृदये च प्रविन्यसेत् ॥ ११
§ शिवचन्द्रौ वह्निसंस्थौ वाग्भवं तदनन्तरम् ।
कामराजं कुमार्यास्तु शिवचन्द्रान्वितं कुरु ॥ १२ ॥
पृथ्वीबीजात्ततो वह्निं शक्तिबीजे ततः परम् ।
शिववह्नी नियोज्यैव हित्वा सर्गं तु बैन्दवम् ॥
संयोज्य परमेशानि त्रिपुराम्बापदं ततः ।
प[र्वग?र्यङ्क]शक्तिपीठाय नमो हृदि प्रविन्यसेत् ॥
* वदन्याशेषबीजान्ते महात्रिपुरभैर[व?वी] ।
सदाशिवमहाप्रेतपद्मासनाय चालिखेत् ॥ १५ ॥
नम इत्यज[बंद्धे?रन्ध्रे]तु विन्यसेत् साधकोत्तमः ।
‡‡ वह्निर्वरुणशक्रं च षष्ठस्वरविभूषितम् ॥ १६ ॥
नादबिन्दुकलायुक्तं वशिनीति पदं ततः ।

---

१ 'त्रिपुर' क. पाठः । † परा ह्रीं कामबीजं क्लीं । वारुणं व इन्द्रः ल[illegible] ए सबिन्दुः तेन ब्लें । ‡ माया ह्रीं रमा श्रीं बालायास्तृतीयं सौः । § शि[illegible] हकारसकारौ वह्नीति रकारारूढौ वाग्भवं ऐं तेन हसरैं । कामराजशक्तिबीजयोः[illegible] वर्णसंयोजनया बीजान्तरे बोध्ये केवलमन्त्यकूटे विसर्गस्थाने बिन्दुः स्थाप्यः [illegible] हसकलरीं । हसरौं इति । * वदन्येति संपत्प्रदाभैरवीविद्या सा यथा हसैं ह[illegible] हस्रौः इति । ‡‡ वह्निः र वरुणो व शक्रं ल षष्ठस्वरः नादादियुक्तः ऊं तेन रव[illegible] वशिनीवाग्देवताविद्या इति ।

वाग्देवता चतुर्थ्यन्ता नमः स्वरैः प्रविन्यसेत् ॥ १७ ॥
†मादनं शक्रमारूढं महामाया ततः परम् ।
इयं कामेश्वरी ज्ञेया कवर्गेण ललाटके ॥ १८ ॥
§धान्तं वरुणमिन्द्रं च चतुर्थस्वरबिन्दुकम् ।
एषैव मोदिनी देवी भ्रुवोर्मध्ये चवर्गके ॥ १६ ॥
‡वायुं पुरन्दरं देवि षष्ठस्वरविभूषितम् ।
नादबिन्दुकलायुक्तं विमलेयं समीरिता ॥ २० ॥
न्यस्तव्या कण्ठदेशे तु टवर्गेणैव पार्वति ।
*छान्तं भान्तं च ज्वलनं तुरीयस्वरबिन्दुकम् ॥ २१ ॥
अरुणेयं तु वाग्देवी तवर्गेण हृदि स्मृता ।
जयिनी च ततो देवि ℘नकुलिः सोमशक्रकम् ॥ २२ ॥
¶वारुणं वायुबीजं च षष्ठस्वरविभूषितम् ।
नाभिदेशे समाख्याता पवर्गेण वरानने ॥ २३ ॥
§जान्तं भान्तं ततो रेफं वायुबीजसमन्वितम् ।
षष्ठस्वरसमायुक्तं नादबिन्दुकलायुतम् ॥ २४ ॥
सर्वेश्वरी(ष?य)वर्गेण स्वाधिष्ठानाख्यपङ्कजे ।
‖संवर्तकं महेशानि कालबीजोपरिस्थितम् ॥ २५ ॥
वह्निबीजं ततो माया नादबिन्दुकलान्विता ।

† मादनं क शक्रेति लकारारूढं महामाया ह्रीं इति कामेश्वरी । § धान्तं न
णं व इन्द्रं ल चतुर्थस्वरः ई तेन नव्लीं । ‡ वायुः य पुरन्दर ल तेन य्लूँ ।
छान्तं ज भान्तं म ज्वलनः र तुरीयेति चतुर्थस्वरः ई तेन ज्म्रीं । ℘ नकुलिः ह
मशक्रेति सकारलकारौ । ¶ वारुणं व वायुः य तथा षष्ठस्वरः तेन हसलवयूं इति ।
जान्तं झ भान्तं म रेफः र वायुः य तथा षष्ठः स्वरः तेन झमरयूं इति । ‖ संव-
: क्ष कालो म वह्निः र माया ईं तेन क्ष्म्रीं इति ।

मूलाधारे शवर्गेण कौलिनी परिकीर्तिता ॥ २६ ॥
एता वाग्देवता देवि वशिनीवत् प्रविन्यसेत् ।
मूलविद्याद्विरावृत्त्या सर्वाङ्गुलितलेषु च ॥ २७ ॥
ङेन्तेषु परमेशानि न्यसेदङ्गानि षट् क्रमात् ।
नमः स्वाहा वषड् वौषड् हुं फडिति षडङ्गकम् ॥ २
करयोरथ विन्यस्य षडङ्गेषु तथा न्यसेत् ।
नमोऽन्तं हृदयं ङेन्तं स्वाहान्तं च तथा शिरः ॥
शि[खरे?खा व]षट् चतुर्थ्यन्ता हुं ङेन्तं कवचं तत
नेत्रत्रयं च वौषट् च अस्त्रं फडन्तमीश्वरि ॥ ३० ॥
*हृदयं मध्यमानामातर्जनीभिः स्मृतं शिरः[२] ।
मध्यमातर्जनीभ्यां स्यादङ्गुष्ठेन शिखा प्रिये ॥ ३
दशभिः कवचं प्रोक्तं तिसृभिर्नेत्रमीरितम् ।
तथैवोक्ताङ्गुलीभ्यां च सशब्दमस्त्रमीरितम् ॥ ३२
पूजा तपोऽर्चनं होमः सिद्धमन्त्रकृता अपि ।
अङ्गविन्यासविधुरा न दास्यन्ति फलान्यमी ॥ ३३
वशिनीप्रमुखान् देवि विन्यसेत्तदनन्तरम् ।
मूलकूटत्रयेणैवं स्थानेष्वेषु क्रमान्न्यसेत् ॥ ३४ ॥
§कर्णयोश्चिबुके चैव शङ्खयोर्वदने पुनः ।
नेत्रयोर्नसि विन्यस्य अंसयो[३]र्जठरे ततः ॥ ३५ ॥
पुनः कुर्परयोः कुक्षौ जानुनोर्लिङ्गमूर्धनि ।

१ 'ये' क. पाठः । २ 'तः शिवः' क. पाठः । ३ 'अंश' क. पाठः

* हृदयमित्यादिना षडङ्गन्यासमुद्रा निर्दिशति । § नवयोनिन्यासम[न्त्र]योरिति । मूलबीजत्रयेणैवायं कार्यः ।

पादयोर्गुह्यदेशे च पार्श्वयोर्हृदयाम्बुजे ॥ ६३ ॥
स्तनयोः कण्ठदेशे च न्यसेदेवं विधानतः ।
चतुर्व्यूहं ततो देवि न्यसेत् पीठसमन्वितम् ॥ ३७ ॥
*मूलवाग्भवमुच्चार्य अग्निचक्रेपदं ततः ।
कामगिर्यालये पश्चान्मित्रेशपदमुद्धरेत् ॥ ३८ ॥
नाथात्मकेपदं पश्चात् कामेश्वरी पदं ततः ।
रुद्रात्मशक्तिशब्दाच्छ्रीपादुकायै नमो न्यसेत् ॥ ३९ ॥
आधारे परमेशानि हृदये च ततः परम् ।
मूलद्वि[त?ती] यमुच्चार्य सूर्यचक्रेपदं ततः ॥ ४० ॥
जालन्धरपदात् पीठे शष्ठीशनाथशब्दतः ।
आत्मकेपदमाभाष्य वज्रेश्वरीपदं ततः ॥ ४१ ॥
विष्णात्मशक्तिशब्दान्ते पूर्ववच्च तदीरितम् ।
शक्तिकूटं समुच्चार्य सोमचक्रेपदं ततः ॥ ४२ ॥
पूर्णागिरिपदान्ते च पीठेपदमतः परम् ।
उड्डीशपरतो देवि नाथात्मकेपदं ततः ॥ ४३ ॥
तदन्ते योजयेद्देवि भगपूर्वा च मालिनी ।
ब्रह्मात्मशक्तिशब्दान्ते पूर्ववद् द्विदले न्यसेत् ॥ ४४ ॥
तुर्यबीजमथोच्चार्य ब्रह्मचक्रेपदात् ततः ।
तथैवोड्यानपीठे तु [व?च]र्यानाथात्मकेपदम् ॥ ४५ ॥
तदन्ते परमेशानि महात्रिपुरसुन्दरी ।

---

१ 'त्री' क. पाठः । २ 'मी' क. पाठः ।

* स्पष्टं यथा-ऐं अग्निचक्रे कामगिर्यालये मित्रेशनाथात्मके कामेश्वरीरुद्रात्मशक्ति-श्रीपादुकायै नमः आधारे । एवमग्रेऽपि बोध्यम् ।

मूलाधारे शवर्गेण कौलिनी परिकीर्तिता ॥ २६ ॥
एता वाग्देवता देवि वशिनीवत् प्रविन्यसेत् ।
मूलविद्याद्विरावृत्त्या सर्वाङ्गुलितलेषु च ॥ २७ ॥
ङेन्तेषु परमेशानि न्यसेदङ्गानि षट् क्रमात् ।
नमः स्वाहा वषड् वौषड् हुं फडिति षडङ्गकम् ॥ २
करयोरथ विन्यस्य षडङ्गेषु तथा न्यसेत् ।
नमोऽन्तं हृदयं ङेन्तं स्वाहान्तं च तथा शिरः ।
शि[खरे?खा व]षट् चतुर्थ्यन्ता हुं ङेन्तं कवचं त
नेत्रत्रयं च वौषट् च अस्त्रं फडन्तमीश्वरि ॥ ३०
*हृदयं मध्यमानामातर्जनीभिः स्मृतं शिरः[१] ।
मध्यमातर्जनीभ्यां स्यादङ्गुष्ठेन शिखा प्रिये ॥ ३
दशभिः कवचं प्रोक्तं तिसृभिर्नेत्रमीरितम् ।
तथैवोक्ताङ्गुलीभ्यां च सशब्दमस्त्रमीरितम् ॥ ३
पूजा तपोऽर्चनं होमः सिद्धमन्त्रकृता अपि ।
अङ्गविन्यासविधुरा न दास्यन्ति फलान्यमी ॥ ३३
वशिनीप्रमुखान् देवि विन्यसेत्तदनन्तरम् ।
मूलकूटत्रयेणैवं स्थानेष्वेषु क्रमान्न्यसेत् ॥ ३४ ॥
§कर्णयोश्चिबुके चैव शङ्खयोर्वदने पुनः ।
नेत्रयोर्नसि विन्यस्य अंसयोर्[३]जठरे ततः ॥ ३५ ॥
पुनः कुर्परयोः कुचौ जानुनोर्लिङ्गमूर्धनि ।

---

१ 'ये' क. पाठः । २ 'तः शिवः' क. पाठः । ३ 'अंश' क. पाठः

* हृदयमित्यादिना षडङ्गन्यासमुद्रा निर्दिशति । § नवयोनिन्यास... र्योरिति । मूलबीजत्रयेणैवायं कार्यः ।

पादयोर्गुह्यदेशे च पार्श्वयोर्हृदयाम्बुजे ॥ ३६ ॥
स्तनयोः कण्ठदेशे च न्यसेदेवं विधानतः ।
चतुर्व्यूहं ततो देवि न्यसेत् पीठसमन्वितम् ॥ ३७ ॥
*मूलवाग्भवमुच्चार्य अग्निचक्रेपदं ततः ।
कामगिर्यालये पश्चान्मित्रेशपदमुद्धरेत् ॥ ३८ ॥
नाथात्मकेपदं पश्चात् कामेश्वरी[2] पदं ततः ।
रुद्रात्मशक्तिशब्दाच्छ्रीपादुकायै नमो न्यसेत् ॥ ३९ ॥
आधारे परमेशानि हृदये च ततः परम् ।
मूलद्वि[त?ती] यमुच्चार्य सूर्यचक्रेपदं ततः ॥ ४० ॥
जालन्धरपदात् पीठे षष्ठीशनाथशब्दतः ।
आत्मकेपदमाभाष्य वज्रेश्वरीपदं ततः ॥ ४१ ॥
विष्ण्वात्मशक्तिशब्दान्ते पूर्ववच्च तदीरितम् ।
शक्तिकूटं समुच्चार्य सोमचक्रेपदं ततः ॥ ४२ ॥
पूर्णगिरिपदान्ते च पीठेपदमतः परम् ।
उड्डीशपरतो देवि नाथात्मकेपदं ततः ॥ ४३ ॥
तदन्ते योजयेद्देवि भगपूर्वा च मालिनी ।
ब्रह्मात्मशक्तिशब्दान्ते पूर्ववद् द्विदले न्यसेत् ॥ ४४ ॥
तुर्यबीजमथोच्चार्य ब्रह्मचक्रेपदात् ततः ।
तथैवोड्यानपीठे तु [व?च]र्यानाथात्मकेपदम् ॥ ४५ ॥
तदन्ते परमेशानि महात्रिपुरसुन्दरी ।

---

१ 'त्री' क. पाठः । २ 'मी' क. पाठः ।

* स्पष्टं यथा-ऐं अग्निचक्रे कामगिर्यालये मित्रेशनाथात्मके कामेश्वरीरुद्रात्मशक्ति-
[श्र]ीपादुकायै नमः आधारे । एवमग्रेऽपि बोध्यम् ।

परं[1]ब्रह्मात्मशक्त्यन्ते पूर्ववद् ब्रह्मरन्ध्रके ॥ ४६ ॥
विन्यस्यैवं महेशानि तत्त्वन्यासं समाचरेत् ।
मूलादिब्रह्मरन्ध्रान्तं मूलान्तं पुनरेव हि ॥ ४७ ॥
मूलवाग्भवमुच्चार्य आत्मतत्त्वपदं ततः ।
[स्वा?व्या]पिकायै चतुर्थ्यन्ता महात्रिपुरसुन्दरी ॥
नम इति प्रविन्यस्य कामराजमतः परम् ।
विद्यातत्त्वपदात् पूर्वं पूर्ववद् हृदयावधि ॥ ४८
न्यसे(त्वात्मी?त्तार्ती)यबीजान्ते शिवतत्त्वस्वरूपिणी
मूलादिब्रह्मरन्ध्रान्तं तदादिभ्रूलतावधि ॥ ५० ॥
ततो न्यसेन्महादेवि विद्याकूटत्रयं पृथक् ।
करयोर्मूलमध्याग्रमूलहृद्भ्रूयुगान्तरे ॥ ५१ ॥
मूलविद्यात्रयावृत्त्या स्थानेष्वेषु क्रमान्न्यसेत् ।
ब्रह्मरन्ध्रे तुरीयं च तेनैव व्यापकं न्यसेत् ॥ ५२ ॥
ब्रह्मरन्ध्रे तथाधारे हृदि नेत्रत्रये तथा ।
कर्णयोर्मुखवृत्ते च भुजयोः पृष्ठदेशके ॥ ५३ ॥
जानुद्वये तथा नाभौ मूलवर्णान् प्रविन्यसेत् ।
स्वयं मन्त्रतनुर्भूत्वा देवीं मन्त्रमयीं यजेत् ॥ ५४
त्रैलोक्यमरुणं ध्यायन् श्रीविद्यां मनसि स्मरेत् ।
योनिमुद्रां महेशानि ब्रह्मरन्ध्रे प्रविन्यसेत् ॥ ५५
ललाटे च प्रविन्यस्य भ्रुवोर्मध्ये च विन्य[2]सेत् ।
मुखे कण्ठप्रदेशे तु हृदये तामनुक्रमात् ॥ ५६

१ 'रं' क. पाठः । २ 'न्य' क. पाठः ।

न्यासः संमोहनाख्योऽयं त्रैलोक्यमोहनक्षमः ।

श्रीदेव्युवाच

अन्तर्यागविधिं ब्रूहि बहिर्यागविधिं तथा ॥ ५७ ॥

ईश्वर उवाच

शृणु देवि प्रवक्ष्यामि यजनं चान्तरं महत् ।

मनोजीवात्म(नः?नोः)शुद्धिः प्राणायामेन जायते ॥५८॥

अन्तर्गतं यच्च मलं तच्च शुद्धं प्रजायते ।

प्राणायामैर्विना देवि कृतं कर्म निरर्थकम् ॥ ५९ ॥

प्राणायामात्परं तत्त्वं प्राणायामात् परं तपः ।

प्राणायामात् परं ज्ञानं प्राणायामात् परं पदम् ॥ ६० ॥

प्राणायामात्परं योगं प्राणायामात्परं धनम् ।

नास्ति नास्ति पुनर्नास्ति कथितं तव सुव्रते ॥ ६१ ॥

वत्सराभ्यासयोगेन ब्रह्म साक्षाद्भवेद् ध्रुवम् ।

चैतन्यावरणं यद्वत् क्षीयते नात्र संशयः ॥ ६२ ॥

प्राणायामं विना मुक्तिमार्गो नास्ति मयोदितम् ।

प्राणायामेन मुनयः सिद्धिमापुर्न[1]चान्यथा ॥ ६३ ॥

प्राणायामपरो योगी न योगी शिव एव सः ।

गमनागमनं वायोः प्राणस्य धारणं तथा ॥ ६४ ॥

प्राणायाम इति प्रोक्तो योगशास्त्रविशारदैः ।

प्राणो वायुरिति ख्यात आयामस्तन्निरोधनम् ॥ ६५ ॥

प्राणायाम इति प्रोक्तो योगिनां योगसाधनम् ।

बाह्यादापूरणं वायोरुदरे पूरको भवेत् ॥ ६६ ॥

---

१ 'र्तुः' क. पाठः ।

संपूर्णकुम्भवद्वाय्वोर्धारणं कुम्भको भवेत् ।
बहिर्यद्रेचनं वायोरुदराद्रेचको भवेत् ॥ ६७ ॥
पूरकं च यथाशक्त्या कुम्भकं तच्चतुर्गुणम् ।
कुम्भकार्धं भवेद्रेचः प्राणायामोऽयमीरितः ॥ ६८ ॥
*कनिष्ठानामिकाङ्गुष्ठैर्यन्नासापुटधारणम् ।
प्राणायामः[1] स विज्ञेयस्तर्जनीमध्यमे विना ॥ ६९ ॥
वामया पूरयेद्वायुं शनैः शनैस्तु मध्यया ।
धारयेद्दत्तया[2] मुञ्चेदपरं तत् क्रमोत्क्रमात् ॥ ७० ॥
यावच्छक्यं नियम्यासून् मनसैव स्मरन् पराम् ।
मन्त्रस्य मुखबीजं वा समस्तं वा जपन् प्रिये ॥
मूलाधारे त्रिकोणाख्ये कोटिसूर्यसमप्रभे ।
ध्यायेत् कुण्डलिनीं नित्यं कालानलशिखोपमाम् ॥
रक्तां सूक्ष्मां च विश्वस्य सृष्टिस्थितिलयात्मिकाम् ।
विश्वातीतां ज्ञानरूपां चिन्तयेदूर्ध्ववाहिनीम् ॥ ७३ ॥
हूंकारोच्चारणेनैव समुत्था(थ?प्य)परां शिवे ।
षट्चक्रं च विनिर्भिद्य प्रापयित्वा परं शिवम् ॥ ७४ ॥
परानन्देन[4] संयोज्य परमानन्दरूपिणीम् ।
तदभेदसमापन्नामनाकुलमनाः स्मरेत् ॥ ७५ ॥
[श्रा?स्रा]वयित्वा सु[रा?धा]धारां प्रापयेच्छक्तिमण्डलम् ।
तेनैव चक्रभेदेन मूलाधारं समानयेत् ॥ ७६ ॥

---

१ 'कं' क. पाठः । २ 'मं' क. पाठः । ३ 'वामया' क. पाठः ।
४ 'कामानन्द' क. पाठः । ५ 'रमा' क. पाठः ।
* प्राणायाममुद्रां निर्दिशति कनिष्ठेत्यादिना ।

मूलादिब्रह्मरन्ध्रान्तं बिसतन्तुस्वरूपिणीम् ।
उद्यत्सूर्यसहस्राभां ध्यायेन्मन्त्रात्मदेवताम् ॥ ७७ ॥
कुण्डलीं त्रिविधां तत्र तथा बीजत्रयं त्रिधा ।
तुरीयां कुण्डलीं मूर्ध्नि महात्रिपुरसुन्दरीम् ॥ ७८ ॥
वाग्भवं मूलदेशे च द्रवत्स्वर्णनिभं स्मरेत् ।
मूलादिहृदयं यावद् वह्निकुण्डलिनीं तथा ॥ ७९ ॥
हृदये कामराजं च सूर्यकोटिसमप्रभम् ।
सूर्यकुण्डलिनीं तत्र सूर्यकोटिसमप्रभाम् ॥ ८० ॥
हृदयाद्दलपर्यन्तं ध्यायेदनाकुलः शिवे ।
भ्रूमध्ये शक्तिबीजं तु चन्द्रकोटिसमप्रभम् ॥ ८१ ॥
भ्रूमध्याद् ब्रह्मरन्ध्रान्तं चन्द्रकुण्डलिनीं शिवे ।
चन्द्रकोटिसमप्रख्यां(श्र?स्र)वदमृतविग्रहाम् ॥ ८२ ॥
बीजत्रयमयीं बिन्दौ तुर्यां[1] बिन्दुत्रयात्मिकाम् ।
देशकालानवच्छिन्नां सर्वतेजोमयीं स्मरेत् ॥ ८३ ॥
तुर्यकुण्डलिनीं तद्वत्केवलं ज्ञानविग्रहाम् ।
एवं ध्यात्वा पुनर्विद्यां संपूर्णां मनसा स्मरेत् ॥ ८४ ॥
चिदानन्दमयीं स्वच्छामेकात्मकतया प्रिये ।
सुधावृष्ट्याभिपतन्त्या तर्पयेत् परदेवताम् ॥ ८५ ॥
ध्यात्वा ध्यात्वा पुनर्ध्यात्वा सहजानन्दविग्रहाम् ।
बिन्दु(श्रु?स्रु)तसुधाभिस्तु[2] तर्पयेच्च पुनः पुनः ॥ ८६ ॥
अन्तर्याग इति प्रोक्तो जीवतो मुक्तिदायकः ।

---

१ 'रीयां' क. पाठः । २ 'द्भिस्तु' ख. पाठः ।

मुनीनां च मुमुक्षूणामधिकारोऽत्र केवलम् ॥ ८७ ॥
प्रातः सायं चरेन्नित्यं षोडश प्राणसंयमान् ।
नाशयेत् सर्वपापानि तृणराशिमिवानलः ॥ ८८ ॥
सर्वेषामेव पापानां प्रायश्चित्तमिदं स्मृतम् ।
स्वदेहस्थं यथा सर्पश्चर्मोत्सृज्य निरामयः ॥ ८९ ॥
प्राणायामात्तथा मुञ्चेदविद्याकामकर्मकम् ।
परोपपापजं पापं परद्रव्यापहारजम् ॥ ९० ॥
परस्त्रीमैथुनोत्पन्नं प्राणायामशतं दहेत् ।
महापातकजातानि ब्रह्महत्यादिकानि च ॥ ९१ ॥
सर्वाण्येतानि दह्यन्ते प्राणायामचतुःशतैः ।
(नमः?मनः)शक्तिः समाख्याता पञ्चास्यां[2] पञ्च देहगाः ॥
एकरूपं शिवं कृत्वा तदङ्के तां निवेशयेत् ।
शून्यरूपे परे स्थाप्य तावुभौ सममास्थितौ ॥ ९३ ॥
चिन्तयेत् साधको नत्वा नादरूपं तयोः क्रमात् ।
तदन्तर्मनसात्मानं ज्योतीरूपं सनातनम् ॥
समाधिना समागत्य त्यजेत् संसारबन्धनम् ॥ ९४ ॥

---

इति श्रीगन्धर्वतन्त्रे पार्वतीश्वरसंवादे नित्यन्यासान्तर्यागविधिनिरूपण-मेकादशः पटलः ॥ ११ ॥

---

१ 'मम्' क. पाठः । २ 'स्या पञ्च गे' क. पाठः ।

# द्वादशः पटलः ।

ईश्वर उवाच

अथवा परमेशानीं लीलाकलितविग्रहाम् ।
हृत्पुण्डरीकमध्यस्थां निगृह्येन्द्रियमान(सः?सम्) ॥ १ ॥
तन्मनाः साधकवरो मनसा पूजयेच्छिवाम् ।
वामकरस्य तर्जन्यां दक्षिणस्य कनिष्ठया ॥ २ ॥
तथा दक्षिणतर्जन्यां[1] वामाङ्गुष्ठेन योजयेत् ।
उन्नतं दक्षिणाङ्गुष्ठं वामस्य मध्यमादिकाः ॥ ३ ॥
अङ्गुलीर्योजयेत् पृष्ठे दक्षिणस्य करस्य च ।
वामस्य[2] पितृतीर्थेन मध्यमानामिके तथा ॥ ४ ॥
अधोमुखे तु ते कुर्याद्दक्षिणस्य करस्य च ।
रक्तपुष्पं गृहीत्वैवं विधाय पाणिकच्छपम् ॥ ५ ॥
कुर्यात्तद् हृदयासन्नं निमील्य[3] नयनद्वयम् ।
समकायशिरोग्रीवं कृतासनपरिग्रहः ॥ ६ ॥
पश्यन्निव ततो देवीमेकाग्रमनसा ततः ।
प्रत्यक्षीकृ[त?त्य,!हृदये मानसैरुपचारकैः ॥ ७ ॥
षोडशानां प्रकारैस्तु हृदिस्थां पूजयेच्छिवाम् ।
आसनं प्रथमं दद्याद्रत्नसिंहासनं शुभम् ॥ ८ ॥
पाद्यं चरणयोर्दद्याच्छिरस्यर्घ्यं निवेदयेत् ।
परमामृतपानीयं भावपुष्पैः सुवासितम् ॥ ९ ॥

---

१ 'न्या' क. पाठः । २ 'स्या' क. पाठः । ३ 'लि' क. पाठः ।

स्वर्णपात्रे जलं कृत्वा दद्यादाचमनं मुखे ।
मधुपर्कं ततो दद्यात् पुनराचमनं ततः ॥ १० ॥
स्ववामे मण्डलं कृत्वा पर्यङ्कं परिभावयेत् ।
श्रीरत्नपादुके दत्त्वा नीत्वा तां स्नानमन्दिरे ॥ ११ ॥
भद्रासनोपविष्टाया उद्वर्तनं समाचरेत् ।
घृतेनोद्वर्तनं कृत्वा मनसा परिभावयेत् ॥ १२ ॥
कर्पूरागुरुकस्तूर्या[1] तथा मृगमदेन च ।
रोचनाकुङ्कुमैर्मिश्रैर्नानागन्धसमन्वितैः ॥ १३ ॥
सुगन्धिदिव्यतैलैश्च स्नापयेत् परमेश्वरीम् ।
देवकन्यासहस्रैस्तु स्वर्णकुम्भसहस्रकैः ॥ १४ ॥
नदीभिर्नदराजैश्च अप्सरोगणपन्नगैः ।
सिञ्चता वारिणा स्नातां चिन्तयेत् परदेवताम् ॥ १५ ॥
दुकूलैर्मार्जितं गात्रं दुकूले परि(धेतथा?धाप्य च) ।
कंकतीकेशसंस्कारो विधिवद्बन्धनं तथा ॥ १६ ॥
सूत्रावल्लीं[2] केशपाशे सिन्दूरं केशमध्यमे ।
ललाटे तिलकं दद्यादलक्तं रदनच्छदे ॥ १७ ॥
नेत्रेषु ह्यञ्जनं[3] कृत्वा गन्धैर्गात्रानुलेपनम् ।
काञ्चनाञ्चितकञ्चूलीशोभनं हृदयोपरि ॥ १८ ॥
विभूषणं ततो दद्यात् सुवर्णरजतादिना ।
शिरःकर्णग्रीवादोषसूज्ज्वला[4]भरणानि च ॥ १९ ॥
नूपुरौ च ततो दद्यान्मुक्तहारं[5] समुज्ज्वलम् ।

---

१ 'स्तर्या' क. पाठः । २ ली॰' क. पाठः । ३ 'रञ्जनं' क. पाठः । ४ 'दीतिउज्ज्व
क. पाठः । ५ 'नूपुरौ ततो दद्यादानन्दहारं' क. पाठः ।

अन्यदाभरणं चैव यत्र येन विराजते ॥ २० ॥
श्रीरत्नपादुके[1] दत्त्वा चक्रमध्ये समानयेत् ।
गन्धं पुष्पं च धूपं च दीपं नैवेद्यमेव च ॥ २१ ॥
हेमपात्रगतं दिव्यं परमान्नं सुसंस्कृतम् ।
कपिलाघृतसंयुक्तं नानाव्यञ्जनसंयुतम् ॥ २२ ॥
भक्ष्यं[2] भोज्यं तथा लेह्यं पेयं चोष्यं तथैव च ।
क्षीरपानीयसंयुक्तं दधिमधुसमन्वितम् ॥ २३ ॥
सकर्पूरं च ताम्बूलं मानसं परिकल्पयेत् ।
मनसापि महादेव्यै नैवेद्यं दीयते यदि ॥ २४ ॥
यो नरो भक्तिसंयुक्तः स दीर्घायुः सुखी भवेत् ।
माल्यं पद्मसहस्रस्य मनसा यः प्रयच्छति ॥ २५ ॥
कल्पकोटिसहस्राणि कल्पकोटिशतानि च ।
स्थित्वा तव पुरे श्रीमान् सार्वभौमो भवेत् क्षितौ ॥ २६ ॥
मनसा तु महादेव्यै यः कुर्याच्च प्रदक्षिणम् ।
स दक्षिणं यमगृहं नरकान्नैव[3] पश्यति ॥ २७ ॥
नमनं मानसं देव्या यो भक्त्या कुरुते नरः ।
सोऽपि लोकान्विजित्यैव नरलोके महीयते ॥ २८ ॥
महामायां महादेवीं समर्चयामि शक्तितः ।
नानाविधैस्तु नैवेद्यैरिति चिन्ताकुलस्तु यः ॥ २९ ॥
नैवेद्यं देहि नितरामिति यो भाषते मुहुः ।
सोऽपि लोकान् विभिद्यैव देवीलोके महीयते ॥ ३० ॥

---

१ 'पुनःश्रीर' क. पाठः । २ 'दय' क. पाठः । ३ 'नि न' क. पाठः ।

बहिर्वच्चक्रपूजां च मनसैव समाचरेत् ।
नवावरणशक्तीनां पूजनं मनसैव हि ॥ ३१ ॥
इत्थमन्तः समाराध्य मनसैव जपेन्मनुम् ।
तदा भवति सिद्धीशो देववद्विहरेत् क्षितौ ॥ ३२ ॥
एवमेव महेशानि पूजयामि महेश्वरीम् ।
योगिनो मुनयश्चैव पूजयन्ति सदा प्रिये ॥ ३३ ॥
केवलं मानसेनैव नैव सिद्धो भवेद्गृही ।
सबाह्येन तु तेनैव गृहस्थो मुनिपुङ्गवः ॥ ३४ ॥

पार्वत्युवाच

ध्यानयोगं महादेव श्रोतुमिच्छामि हे प्रभो ।
संपूर्णं कथयेशान येन सिद्धो भवेत् परः[1] ॥ ३५ ॥

ईश्वर उवाच

विना न्यासैर्विना पूजां विना जप्यपुरस्क्रियाम्[2] ।
ध्यानयोगाद्भवेत् सिद्धो नान्यथा खलु पार्वति ॥ ३६ ॥
ध्यानयोगादहं सिद्धो विष्णुश्चापि पितामहः ।
ध्यानयोगात् परं सिद्धा[3] मानवा अपि पापिनः ॥ ३७ ॥
सर्वतन्त्रेषु यद्गुह्यं सर्वसिद्धिप्रदायकम् ।
विना येन न सिध्यन्ति वर्षकोटिशतैरपि ॥ ३८ ॥
ध्यानयोगं प्रवक्ष्यामि सर्वतत्त्वप्रदायकम् ।
एकान्ते विजने रम्ये कृतासनपरिग्रहः ॥ ३९ ॥
निवृत्ताखिलचिद्वृत्तिर्मुद्रामुद्रितविग्रहः ।
कारणानन्दसंदोहैर्बहिरन्तःप्रपूरितः ॥ ४० ॥

---

१ 'नरः' क. पाठः । २ 'र्घ्येः' क. पाठः । ३ 'द्धो' क. पाठः ।

गुरून् नत्वा विधानेन सोऽहमित्युपरोधतः ।
ऐक्यं संभावयेद्धीमाञ्जीवस्य ब्रह्मणोऽपि च ॥ ४१ ॥
कारणे सर्वभूतानां तत्त्वान्यपि च चिन्तयेत् ।
बीजभावेन लीनानि व्युत्क्रमात् परमात्मनि ॥ ४२ ॥
एवं विचिन्त्य देवेशि पार्थिवांशं जले गतम् ।
जलं तेजसि लीनं च तेजो वायौ विचिन्तयेत्[2] ॥ ४३ ॥
आकाशे संहृतं वायुं खं च मनसि लीयते ।
मनोऽहंकारवशगं तथाऽहं महति स्थितम् ॥ ४४ ॥
महान्तं प्रकृतौ लीनं चिन्तयेत् परमेश्वरि ।
मुमुक्षुश्चिन्तयेल्लीनां प्रकृतिं परमात्मनि ॥ ४५ ॥
नाहो न रात्रिर्न संध्या न सूर्यो नैव चन्द्रमाः ।
इदं तमोमयं सर्वमासीद्भुवनवर्जितम् ॥ ४६ ॥
अप्रज्ञातमलक्ष्यं च प्रसुप्तमिव सर्वतः ।
चिन्तयित्वा महेशानि न किंचिदपि भावयेत् ॥ ४७ ॥
एकमासीत् परं ब्रह्म नित्यं सूक्ष्ममतीन्द्रियम् ।
नित्यानन्दमयं धाम तेजोरूपं सनातनम् ॥ ४८ ॥
तदेव प्रकृतिः सा तु तेजोरूपा सनातनी ।
नित्यानन्दवपुर्देवी तद्रूपा तत्प्रकाशिनी ॥ ४९ ॥
तयोर्योगादभूद्वृष्टिः परमामृतरूपिणी ।
परिपूर्णमिदं देवि समस्तं प्लावयेत् तथा ॥ ५० ॥

---

१ 'तिप' क. पाठः। २ 'जलं च तेजसो रूपं तेजोरूपं विचिन्तयेत् ।
निर्वाणवायुना वह्निं वायुनात्र विचिन्तयेत् ॥' इति क. पाठः ।

३ 'तथा वै मनसि' क. पाठः ।

तत्राम्भसि स्वमात्मानं चिन्तयेत् साधकोत्तमः ।
बुद्बुदं चिन्तयेत्तत्र प्रकृतिं चिन्तयेत् पराम् ॥ ५१ ॥
प्रकृतिर्हि महान्तं वै अहं च महतस्तथा ।
अहङ्कारान्मनश्चैव मनसः खं समुत्थितम् ॥ ५२ ॥
आकाशाद्वायुमुत्कृष्य वायोस्तेजः समुत्थितम् ।
तेजसो जलमासाद्य जलाच्च पृथिवीं स्मरेत् ॥ ५३ ॥
बहिष्कृत्य यथास्थानं निवेश्य विधिना ततः ।
हैमं ब्रह्माण्डमेभिः स्याद् भूबीजेन दृढं स्मरेत् ॥ ५४
प्रणवेन द्विधा कृत्वा जलौघैः परिपूरयेत् ।
ब्रह्माण्डाभ्यन्तरे तोयं तदधो ऽकमठ्ययम् ॥ ५५ ॥
तस्य पृष्ठे महादेवि कालाग्निरुद्ररूपकम् ।
आधारशक्तिं तत्रैव मूलप्रकृतिरूपिणीम् ॥ ५६ ॥
ब्रह्मशिलासमारूढां कूर्माकारां शशिप्रभाम् ।
पद्मद्वयधरां देवीं मूर्धनि कूर्मधारिणीम्[२] ॥ ५७ ॥
नीलाभं चिन्तयेत् कूर्ममनन्तं कुन्दसंनिभम् ।
तस्य मूर्ध्नि स्थितं देवि श्वेतं वाराहरूपकम् ॥ ५८ ॥
तमालश्यामलां दन्ते धारयन्तं वसुन्धराम् ।
तां च संचिन्तयेत्तत्र नीलेन्दीवरधारिणीम् ॥ ५९ ॥
चिन्तयेत् सलिलैः पूर्णां चतुःसागरमेखलाम् ।
तन्मध्ये चिन्तयेद्देवि सुधासागरमद्भुतम् ॥ ६० ॥
रक्ताभममृतं तत्र शुद्धलाक्षारसोपमम् ।

---

१ 'माकृ ख. पाठः । २ 'कूर्मं च मूर्ध्नि धारिणीम्' क. पाठः ।

तन्मध्ये चिन्तयेद्देवि द्वीपं विद्रुमसंनिभम् ॥ ६१ ॥
गिरिराजशताकीर्णं परितेच्छुवनं महत् ।
गिरौ स्वर्णगिरिं चैव कल्पोद्यानं गिरेस्तटे ॥ ६२ ॥
चम्पकाशोकपुन्नागपाटलैः कुटजैस्तथा ।
लवङ्गमाधवीबिल्व-देवदारुनमेरुभिः ॥ ६३ ॥
मन्दारपारिजाताद्यैः कल्पवृक्षैः सुपुष्पितैः ।
सर्वतोऽलंकृतं दिव्यैर्नित्यपुष्पफलद्रुमैः ॥ ६४ ॥
चन्दनैः कर्णिकारैश्च मातुलुङ्गैः करञ्जकैः ।
द्राक्षेक्षुरम्भाजम्बूभिर्मधुकैराम्रकैरपि ॥ ६५ ॥
दाडिमीचूतपनसैः पूगैः कर्पूरकैरपि ।
कदलीकुन्दखर्जूरनारिकेलैरलंकृतम् ॥ ६६ ॥
कदम्बैः करवीरैश्च तगरैर्नागकेसरैः ।
[2]यावन्तीस्वर्णयू[3]थीभिर्वज्रैर्दमनकैरपि ॥ ६७ ॥
मालतीमल्लिकाजातीकेतकीशतपत्रकैः ।
अन्यैः सुगन्धिपुष्पाद्यैः शोभितं यूथिकादिभिः ॥ ६८ ॥
अन्योन्यासक्तवल्लीभिर्वृक्षषण्डैश्च मण्डितम् ।
सर्वर्तुकुसुमोपेतैर्नमद्भिरुपशोभितम् ॥ ६९ ॥
मन्दमारुतसंभिन्नकुसुमामोददिङ्मुखम् ।
उत्फुल्लकुसुमामोदप्रहृष्यद्भृङ्गसंकुलम् ॥ ७० ॥
कूजत्कोकिलसंघैर्नै वाचालितदिगन्तरम् ।
कालमेघसमालोकनृत्यद्बर्हिकदम्बकम् ॥ ७१ ॥

---

१ 'ऐशः पाठः । २ 'पा' ख. पाठः । ३ 'थि' क. पाठः । ४ 'ह्रेन' क. पाठः ।

शारिकाशुकबहुलैः कूजत्कलरवैर्युतम् ।
द्वन्द्वभावं प्रकुर्वद्भिर्मृगैर्नानाविधैरपि ॥ ७२ ॥
सरित्सरोभिर्[1]च्छोदैः शोभितं कुमुदोत्पलैः ।
तेषु सरःसु विपुलं महारसरसामृतम् ॥ ७३ ॥
सर्वतोऽलंकृतं दिव्यं लसत्काञ्चनपङ्कजम् ।
मत्तषट्पदनि(र्य्य?र्जु)ष्टं शकुन्तैश्च कलस्वनैः ॥ ७४ ॥
हंसकारण्डवाकीर्णं चक्राह्वैः सारसैरपि ।
तन्महासरःपुलिने रत्नसोपानमण्डिते ॥ ७५ ॥
महारसरसान्दोलवीचिविक्षेपशीतले ।
सर्वकामदुघं दिव्यं सर्वरत्नसमन्वितम् ॥ ७६ ॥
मौक्तिकैः कुसुमैः स्रग्भिर्दुकूलैः स्वर्णतोरणैः ।
स्मरेत् कल्पतरुं तत्र तदधो रत्नभूमिकाम् ॥ ७७ ॥
विस्तीर्णां सुमनोऽव्याप्तां[2] तन्मध्ये रत्नमण्डपम् ।
परितः पारिजाताढ्यं भास्वरं शशिशीतलम् ॥ ७८ ॥
उद्यदादित्यसंकाशं रत्नसोपानमण्डितम् ।
शतयोजनविस्तीर्णं चतुर्द्वारसमन्वितम् । ७९ ॥
द्वारेषु विद्रुमदेहल्याभातं वज्रकवाटकम् ।
रत्नसंक्लृप्तसंशोभिकवाटाष्टकसंयुतम् ॥ ८० ॥
नानारत्नविशोभाढ्यै[3]रत्नप्राकारमण्डितम् ।
नवरत्नसमाक्लृप्ततुङ्गप्राकारतोरणम् ॥ ८१ ॥
तत्रतत्र विनिःक्षिप्तनानारत्नोपशोभितम् ।

---

१ 'रा' क. पाठः । २ 'महद्व्या' क. पाठः । ३ 'ढ्यं' क. पाठः ।

महामरकतस्थल्या जुष्टं[1] विद्रुमवेदिभिः ॥ ८२ ॥
शिखरेष्विन्द्रनीलेषु हेमकुम्भैरलंकृतम् ।
चतुष्मत्पद्मरागाद्यैर्वज्रभित्तिषु निर्गतैः ॥ ८३ ॥
जुष्टं[2] विचित्रवैतानैर्महा[र्घ्यै?र्घै]र्हेमतोरणैः ।
सर्वर्द्ध्युपचयैरर्कमणिस्तम्भैर्विराजितम् ॥ ८४ ॥
हेमदण्डशिखालम्बिध्वजावलिपरिष्कृतम्[3] ।
स्वस्वस्थान(स्थि?कृ)तावस्थैर्लोकपालैरधिष्ठितम् ॥ ८५ ॥
सिद्धचारणगन्धर्वैर्विद्याधरमहोरगैः ।
किन्नरैरप्सरोभिश्च क्रीडद्भि[र्दु?र्जु)ष्टदिङ्मुखम् ॥ ८६ ॥
नृत्यसंगीतनिरतैरमरस्त्रीगणैर्युतम् ।
नवरत्नसमाबद्धस्तम्भराजिविराजितम् ॥ ८७ ॥
तप्तहाटकसंक्लृप्तवातायनमनोहरम् ।
नानारत्नांशुकोद्बद्धसुवर्णशतकोटिभिः ॥ ८८ ॥
किंकि(नी?णी)मणिसंनद्धपताकाभिरलंकृतम् ।
महामाणिक्यवैदूर्यरत्नचामरभूषितम् ॥ ८९ ॥
जातरूपमयै रत्नैश्चित्रितैरतिविस्तृतैः ।
माणिक्यरत्नवैदूर्यस्वर्णमालावलीयुतैः ॥ ९० ॥
अन्तरान्तरसंबद्धरत्नैर्दृष्टिमनोहरैः ।
विचित्रितैश्चित्रवर्णैर्वितानैरुपशोभितम् ॥ ९१ ॥
स्थूलमुक्ताफलोद्दामलम्बमानैरलंकृतम् ।
उपर्युपरि विन्यस्तनिलयेषु पृथक् पृथक् ॥ ९२ ॥

---

१ 'युष्टं' क. पाठः । २ 'यु' क. पाठः । ३ 'स्कृतम्' क पाठः ।

क्लृप्तैः कशि(म्बु?पु)भिः कान्तं पर्यङ्कव्यजनासनैः ।
दिव्योपकरणोपेतं सर्वकालसुखावहम् ॥ ९३ ॥
दुकूलक्षौमकौ(षे?शे)यैर्नानावर्णैर्विराजितम् ।
स्रग्भिर्विचित्रपुष्पाभिर्मञ्जुशिञ्जत्षडङ्घ्रिभिः ॥ ९४ ॥
चन्दनागुरुकर्पूरमृगनाभिविलेपितम् ।
चन्दनागुरुकर्पूरधूपितं[2] सुमनोहरम् ॥ ९५ ॥
नानाकुसुमसौरभ्यवाहिगन्धवहान्वितम् ।
नन्दनोद्यानमध्यस्थमधः कल्पतरोरपि ॥ ९६ ॥
एवं संचिन्त्य मनसा मण्डपं सुमनोहरम् ।
तन्मध्ये स्फुरितं ध्यायेन्महामाणिक्यमण्डपम् ॥ ९७ ॥
शरच्चन्द्रनिभच्छत्रं मुक्तामाणिक्यमण्डितम् ।
हेमदण्डशिखालम्बिश्वेतचामरभूषिताम् ॥ ९८ ॥
तदधःस्थां स्मरेद्रक्तां महामाणिक्यवेदिकाम् ।
उद्यदर्केन्दुकिरणां चतुरस्रोपशोभितम् ॥ ९९ ॥
वेदिकां वेदिकास्थाने सिंहासनं ततोपरि[3] ।
तस्याग्नेयादिकोणेषु धर्मादिकांस्तु संस्मरेत् ॥ १०० ॥
दिक्ष्वधर्मादिकांस्तत्र चिन्तयेद्गात्ररूपिणः ।
रक्तश्यामहरिद्रेन्द्रनीलाभान् पादरूपिणः ॥ १०१ ॥
वृषके(शविभृ?सरिभू) तेभरूपान् धर्मादिकान् स्मरेत् ।
प्रसूनतूलिकां तत्र सिंहासनस्य मध्यमे ॥ १०२ ॥
तन्मध्ये परमं ध्यायेत् सर्वतत्त्वात्मकाम्बुजम् ।

---

१ 'जप' क. पाठः । २ 'प्रधूपितम' क. पाठः । ३ ऐश: पाठः ।

आनन्दकन्दमेवात्र संविन्नालं तथैव च ॥ १०३ ॥
प्रकृतिविकाररूपद्वात्रिंशत्पत्रकेसरम् ।
पञ्चाशद्वर्णबीजाढ्यकर्णिकापरिमण्डितम् ॥ १०४ ॥
कर्णिकायां स्मरेत् सूर्यं तन्मध्ये सोममण्डलम् ।
[सोममण्डलमध्ये तु संस्मरेद्वह्निमण्डलम्] ॥ १०५ ॥
वह्निमण्डलमध्ये तु सत्त्वं च परिचिन्तयेत् ।
रजश्च तत्र संचिन्त्य तमोऽपि च तन्मध्यतः ॥ १०६ ॥
ज्ञानतत्त्वात्मनश्चैव मायातत्त्वात्मनस्तथा ।
विद्यातत्त्वात्मनो देवि कलातत्त्वात्मनो यजेत् ॥ १०७ ॥
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ।
एते पञ्च महाप्रेताश्चतुर्दिङ्मध्यसंस्थिताः ॥ १०८ ॥
सदाशिवोपरिगतं त्रिशृङ्गज्योतिरव्ययम् ।
तस्य मध्ये महापद्मं पीयूषपरिपूरितम् ॥ १०९ ॥
सुधार्णवासने तत्र त्रिपुरां प्रकटेश्वरीम् ।
पोताम्बुजासने तद्वच्चिन्तयेत् त्रिपुरेश्वरीम् ॥ ११० ॥
चिन्तयेत् साधको भक्त्या गुप्तयोगिन्यधीश्वरीम् ।
आत्मासनगतां तत्र स्मरेत् त्रिपुरसुन्दरीम् ॥ १११ ॥
गुप्ततरेश्वरीं देवीं, चक्रासने विचिन्तयेत् ।
त्रिपुरवासिनीं देवीं संप्रदायगणेश्वरीम् ॥ ११२ ॥
सर्वमन्त्रासने देवि चिन्तयेत् त्रिपुराश्रियम्[1] ।
कुलकौलेश्वरीं देवीं, साध्यासनगतां ततः ॥ ११३ ॥

---

१ 'राश्रि' ख. पाठः ।

त्रिपुरमालिनीं प्राज्ञे निगर्भयोगिनीश्वरीम् ।
सिद्धासने ततः पश्चात् सिद्धां त्रिपुरपूर्विकाम् ॥ ११४॥
पर्यङ्कशक्तिपीठे तु त्रिपुराम्बां विचिन्तयेत् ।
कामेश्वराङ्कपर्यङ्कसमासीनां परां कलाम् ॥ ११५॥
रक्तपद्मनिभां देवीं बालार्ककिरणारुणाम् ।
जपाकुसुमसंकाशां दाडिमीकुसुमप्रभाम्[1] ॥ ११६ ॥
पद्मरागप्रतीकाशां कुङ्कुमोदकसंनिभाम् ।
स्फुरन्मुकुटमाणिक्यकिङ्किणीजालमण्डिताम् ॥ ११७ ॥
कालालिकुलसंकाशकुटिलालकपल्लवाम् ।
प्रत्यग्रारुणसंकाशवदनाम्भोजमण्डलाम् ॥ ११८ ॥
किंचिदर्धेन्दुकुटिलललाटमृदुपट्टिकाम् ।
पिनाकधनुराकारसुभ्रुवं[2] परमेश्वरीम् ॥ ११९ ॥
आनन्दमुदितोल्लोललीलान्दोलित[3]लोचनाम् ।
स्फुरन्मयूखसंघातविलसद्धेमकुण्डलाम् ॥ १२० ॥
सु[4]गण्डमण्डलाभोगजितेन्द्वमृतमण्डलाम्[5] ।
विश्वकर्मविनि[6]र्माणसूत्रसुँ[7]स्पष्टनासिकाम् ॥ १२१ ॥
ताम्र[8]विद्रुमबिम्बाभरक्तोष्ठी[9]ममृतोपमाम् ।
दाडिमीबीजवज्राभदन्तपङ्क्तिविराजिताम्[10] ॥ १२२ ॥
रत्नद्वीपसमुद्भासिजिह्वां मधुरभाषिणीम्[11]

---

१ 'मोपमाम्' क पाठः । २ 'भ्रूलतां' क. पाठः । ३ 'लालित' ख.पाठः । ४ 'ललित' क. पाठः । ५ 'न्दुसुतलोचनाम्' क. पाठः । ६ 'दिनि' क. पाठः । ७ 'वि' ख. पाठः ८ 'रक्त' ख. पाठः । ९ 'न्तार्विम्बोष्ठी' क. पाठः । १० 'सुशोभिताम्' क. पाठः । ११ 'स्फुरद्धापजिह्वामूलविराजिताम्' ख. पाठः । इदं पद्यार्धं क. पाठे नास्ति ।

स्मितमाधुर्यविजितमाधुर्यरससागराम् ॥ १२३ ॥
अनौपम्यगुणोपेतचिबुकोद्देशशोभिताम् ।
कम्बुग्रीवां महादेवीं मृणाललतितैर्भुजैः ॥ १२४ ॥
मणिकङ्कणकेयूरभारखिन्नैः प्रशोभिताम्[1] ।
रक्तोत्पलदलाकारसुकुमारकराम्बुजाम् ॥ १२५ ॥
कराम्बुजनखज्योत्स्ना[2]विराजितनभःस्थलाम्[3] ।
मुक्ताहारलतोपेतपीनोन्नत[4]पयोधराम् * ।
त्रिवलीवलनायुक्तमध्यदेशसुशोभिताम् ॥ १२६ ॥
लावण्यसरिदावर्त्ताकारनाभिविभूषिताम्[5] ।
अनर्घ[6]रत्नघटितकाञ्चीयुक्तनितम्बिनीम् ॥ १२७ ॥
नितम्बबिम्बद्विरदरोमराजीवराङ्कुशाम् ।
कदलीललितस्तम्भसुकुमारोरुमीश्वरीम् ॥ १२८ ॥
लावण्यकन्दलीतुल्यजङ्घायुगलमण्डिताम् ।
गूढगुल्फपदद्वन्द्वप्रपदाजितकच्छपाम् ॥ १२९ ॥
नूपुरैर्विलसत्पादपङ्कजातिमनोहराम् ।
ब्रह्मविष्णुशिरोरत्ननिर्घृष्टचरणाम्बुजाम् ॥ १३० ॥
तनुदीर्घाङ्गुलीभास्वन्नखचन्द्रविराजिताम् ।
शीतांशुशतसंकाशकान्तिसंतानहासिनीम् ॥ १३१ ॥
लौहित्यजितसिन्दूरजपादाडिमरागिणीम् ।
रक्तवस्त्रपरीधानां रक्ताभरणभूषिताम् १३२

---

१ 'भूषणैः परिशोभिताम्' क. पाठः । २ 'तिर्वि' ख. पाठः । ३ 'लीम्' क. पाठः ।
'समुन्न' क. पाठः । ५ 'सुशोभिताम्' क. पाठः । ६ 'र्घ्य' क. पाठः ।
'कदली' ख. पाठः ।

* पीनवृत्तोन्नतकुचां तनुमध्येन शोभितामित्यधिकः पाठः ख. ।

इच्छाशक्तिमयं पाशमङ्कुशं ज्ञानरूपिणम् ।
क्रियाशक्तिमये बाणधनुषी दधतीं पराम् ॥ १३३ ॥
कर्पूरशकलोन्मिश्रताम्बूलपूरिताननाम् ।
महामृगमदोद्दामकुङ्कुमारुणविग्रहाम् ॥ १३४ ॥
सर्वशृङ्गारवेशाढ्यां सर्वालंकारभूषिताम् ।
जगदाह्लादजननीं जगद्रञ्जनकारिणीम् ॥ १३५ ॥
जगदाकर्षणकरीं जगत्कारण[1]रूपिणीम् ।
सर्वदेव[2]मयीं देवीं सर्वमन्त्रमयीं पराम्[3] ॥ १३६ ॥
सर्वलक्ष्मीमयीं साक्षा[4]त्परमानन्दरूपिणीम्[5] ।
निर्लेपं निर्गुणं शुद्धमात्मानं त्रिपुरामयम् ॥ १३७ ॥
आत्माभेदेन संचिन्त्य याति तन्मयतां नरः ।
[6]साहमित्यस्य सततं चिन्तनात्तन्मयो भवेत् ॥ १३८ ॥
तामेव चिन्तयेद्देवि नान्यत् किंचित्तया विना ।
तत्तेजोभिरिदं सर्वं परिपूर्णं विभावयेत् ॥ १३९ ॥
एवं भावनयाविष्टो[7] देववद्विहरेत् क्षितौ ।
ध्यानयोगपरस्यास्य पूज्यो नास्तीह कश्चन ॥ १४० ॥
स एव सुकृती लोके स पूज्यो नतु पूजकः ।
योगात्मा योगविज्ज्ञानी स देवो नतु मानुषः ॥ १४१ ॥
संन्यासी स च विन्यासी युक्तात्मा स मुनिर्मतः ।
नासाध्यं वर्तते तस्य स सिद्धो योगिपुङ्गवः ॥ १४२ ॥
इन्द्रियप्रीणनैर्द्रव्यैस्तोषयेद् भूषयेत् सदा ।

---

१ 'स्थापन' ख. पाठः । २ 'मन्त्र' क. पाठः । ३ 'सौभाग्यसुन्दरीम्' ख. पाठः ।
४ 'नित्यां' ख. पाठः । ५ 'सुन्दरीम्' ख. पाठः । ६ 'सो' ख. पाठः । ७ 'हृष्टो' ख. पाठः ।

आत्मानमेव सततं पूजयेद् देवताधिया ॥ १४३ ॥
देववद्विहरेन्नित्यं काल[1]योगपरायणः ।
यत् पश्यति यच्छृणोति गीतनृत्यादिकं च यत् ॥ १४४ ॥
परिदधाति यत्किंचित् स्वयं यदनुलिम्पति ।
हस्त्यश्वरथखट्वादि यदारोहति साधकः ॥ १४५ ॥
यत् करोति यदश्नाति तत् सर्वं देवताधिया ।
विषयान् विषयी भुङ्क्ते यानेव स्वमनोरथान् ॥ १४६ ॥
तत्तत् समग्रमासाद्य तत्सर्वं देवताधिया ।
जाग्रदादि सुषुप्त्यन्तं सर्वं तद्देवताधिया ॥ १४७ ॥
दिव्य एव भवेत्तत्र न चैवान्यः कदाचन ।
तस्माद् दिव्यपरो यस्तु देवीमानन्दरूपिणीम् ॥ १४८ ॥
पूजयेत् सततं भक्त्या महात्रिपुरसुन्दरीम् ।
मोक्षार्थी लभते मोक्षं ध्यानयोगपरायणः ॥ १४९ ॥
तां तु यश्चिन्तयेद्रात्रौ भोगी ध्यानपरायणः ।
कामेश्वराङ्कपर्यङ्कसमासीनां परां कलाम् ॥ १५० ॥
सर्वाङ्गसुन्दरीं हृद्यां प्रसादसुमुखेक्षणाम् ।
सकारे[2]णामभिध्यायेत् सर्वाङ्गेषु मनो दधत् ॥ १५१ ॥
चतुर्वर्गं करे तस्य जीवन्मुक्तः स एव हि ।

---

इति श्रीगन्धर्वतन्त्रे पार्वतीश्वरसंवादे ध्यानयोगनिरूपणं
द्वादशः पटलः ॥ १२ ॥

---

१ 'ध्यान' क. पाठः ।     २ 'करुणा' ख. पाठः ।

# त्रयोदशः पटलः ।

---o---

श्रीपार्वत्युवाच

बहिर्यागविधिं ब्रूहि साङ्गेन परमेश्वर ।
विशेषार्घस्य[1] संस्थानं नित्या(ज?य)जनमेव च ॥ १ ॥

ईश्वर उवाच

तादृशीमम्बिकां ध्यत्वा त्रिधात्मानं च तन्मयम् ।
तेनैव मूलमन्त्रेण शिरोदेशे तदेव हि ॥ २ ॥
स्वकीये कुसुमं दद्यादङ्गन्यासं पुनस्तथा ।
चैतन्यं सर्वभूतानां यद् ब्रह्म[2] सोऽहमीश्वरः ॥ ३ ॥
सोऽहमित्यस्य सततं चिन्तनाद् देवरूपता ।
आत्मनो जायते सम्यग्भावनान्नात्र संशयः ॥ ४ ॥
पूजोपकरणस्यापि देवत्वमिह जायते ।
सर्वेषां देवतादृष्ट्या जायते शुद्धतापि च ॥ ५ ॥
अहं देवोऽथ नैवेद्यं पुष्पगन्धादिकं च यत् ।
देवाधारो ह्यहं देवो न देवो मत्परः क्वचित् ॥ ६ ॥
देवमेव यजे चाहं देवदेवोऽहमेव च ।
यदि बाह्यार्चने[3]द्रव्यसंपत्तिरपि विद्यते ॥ ७ ॥
विशेषार्घ्यादिकं देवि तदा कुर्यादतन्द्रितः ।
पूजार्घ्यपात्रं नैवेद्याद्याधारपानपात्रकम् ॥ ८ ॥
सर्वं ताम्रमयं कुर्याद्यत्किंचिदिह पूजने ।
ताम्रे देवाः प्रमोदन्ते ताम्रे देवाः स्थिताः सदा ॥ ९ ॥

---

१ 'र्घस्य' क. पाठः । २ 'ह्मा' क. पाठः । ३ 'ना' क. पाठः ।

देवीप्रीतिकरं ताम्रं तस्मात् ताम्रं प्रयोजयेत् ।
शङ्खशुक्तिरजतस्वर्णौर्दिव्यानां पात्रमिष्यते ॥ १० ॥
महाशङ्खैस्तु वीराणां फलजं वनवासिनाम् ।
अष्टाङ्गुलस्य न न्यूनं नाधिकं सार्धपाणितः ॥ ११ ॥
सर्वेषामेव पात्राणां मानमेवं विधीयते ।
पञ्चरत्नैर्महादेव्याः पञ्च पात्राणि कारयेत् ॥ १२ ॥
सामान्यं च विशेषं च पाद्यमाचमनीयकम् ।
कुम्भं चापि प्रयत्नेन रत्नैः कुर्याद्विभूतये ॥ १३ ॥
रत्नं गगनसंज्ञं च स्वर्गरत्नं तथैव च ।
मर्त्यपातालरत्ने च नागरत्नं तथैव च ॥ १४ ॥
गारुडं चैव माणिक्यं वज्रं वैदूर्यमेव च ।
नीलं च क्रमतो विद्यात् पञ्च रत्नानि योजयेत् ॥ १५ ॥
बीजपञ्चकमेतेषां क्रमाद्वक्ष्ये सुदुर्लभम् ।
गसौ च (स?प)मनाः पश्चादिन्द्रस्थाः *क्रमतः प्रिये ॥१६॥
नादबिन्दुकलायुक्ता वामकर्णविभूषिताः ।
तर्पणार्थं विशेषेण चक्रपूजानिवेदने ॥ १७ ॥
श्रीपात्रं साधयेद्धीमान् विधिना साधकोत्तमः ।
योनिमुद्रां विधायादौ कुर्यादर्घ्यस्य साधनम् ॥ १८ ॥
आत्मश्रीचक्रयोर्मध्ये चतुरस्रं तु कारयेत् ।
तन्मध्ये चैव षट्कोणं तन्मध्ये वृत्तमुत्तमम् ॥ १९ ॥
त्रिकोणं तत्र संलिख्य चन्दनेन वरानने ।

---

१ 'जतस्थ' क. पाठः ।

* इन्द्रस्था इति लकारस्थाः तेन ग्लूँ स्लूँ प्लूँ म्लूँ न्लूँ इति ।

मण्डलं तं समभ्यर्च्य साधयेदासनं ततः ॥ २० ॥
बालाबीजत्रयं देवि ततस्त्रिपुरसुन्दरी ।
अर्घ्यपात्रासनं चैव साधयामीति साधयेत् ॥ २१ ॥
तथैवास्त्रेण तु तथा सामान्यार्घ्योदकेन तु ।
प्रक्षाल्य परमेशानि मण्डले स्थापयेत्ततः ॥ २२ ॥
वह्निमण्डलरूपं तं कलाभिः सह पूजयेत् ।
पूर्ववत् परमेशानि पात्रं प्रक्षाल्य साधकः ॥ २३ ॥
विशेषार्घ्यपदात् पात्रं प्रतिशब्दादनन्तरम् ।
स्थापयामीति मनुना संस्थाप्य तदनन्तरम् ॥ २४ ॥
सूर्यमण्डलरूपं तं कलाभिः सह पूजयेत् ।
पूजयेत्तं विधानेन बिन्दु[श्रु?स्रु]तसुधामयैः ॥ २५ ॥
मातृकां [२]प्रतिलोमेन मूलाभिमन्त्रितामृतैः ।
आदिमैः पूरयेद्वापि तथा पुष्पासवैरपि ॥ २६ ॥
कपिलायास्तथा क्षीरैर्नारिकेलामृतैरपि ।
इक्षुरसैः सुगन्धैश्च मधुरत्रितयेन वा ॥ २७ ॥
पूरयेत् तन्महापात्रं नानाद्रव्यैः कदाचन ।
अधिकारिप्रभेदेन द्रव्यभेदा भवन्ति हि ॥ २८ ॥
स्वयंभूकुसुमं तत्र कर्पूरागुरुचन्दनैः ।
रोचनाकुङ्कुमैर्मिश्रं कस्तूरीपरिभावितम् ॥ २९ ॥
निक्षिपेत् परमेशानि शर्करां मधुसंयुताम् ।
पूर्वोक्तमण्डलं तत्र संचिन्त्य साधकोत्तमः ॥ ३० ॥

१ 'युतया' इति क. पाठः । २ 'काप्रति' क. पाठः ।

अङ्कुशमुद्रया पश्चात् तीर्थं वै प्रार्थयेत् ततः ।
ऋजुमध्यामध्यपर्वाक्रान्ता तर्जन्यधोमुखी ॥ ३१ ॥
विज्ञेयाङ्कुशमुद्रेयं कुञ्चिता मध्यपर्वतः ।
सौरमण्डलतः पश्चात् तीर्थमावाहयेत् तथा ॥ ३२ ॥
गङ्गावतारमन्त्रेण सर्वैस्तीर्थगणैः सह ।
गङ्गापि यमुनायाति पूजापात्रजलं प्रति ॥ ३३ ॥
मीनमुद्रां विधायाथ हस्ताभ्यां पात्रमुत्तमम् ।
आच्छाद्य परमेशानि चिन्मयं तीर्थमागतम् ॥ ३४ ॥
अधोमुखावुभौ हस्तौ स्वस्वोपरि च संस्थितौ ।
पार्श्वद्वयगताङ्गुष्ठौ मीनमुद्रेयमीरिता ॥ ३५ ॥
माणिक्यं मौक्तिकं देवि विद्रुमं गारुडं तथा ।
पुष्परागं तथा वज्रं नीलं गोमेदकं शुभम् ॥ ३६ ॥
वैदूर्यं नवरत्नानि तत्राम्भसि नियोजयेत् ।
रत्नेशीं पूजयेत्तत्र सर्वपापप्रणाशिनीम् ॥ ३७ ॥
श्रीबीजं च पराबीजं तथैव बीजपञ्चकम् ।
पूर्वबीजे विलोमेन तत्पश्चाद्विनियोजयेत् ॥ ३८ ॥
द्रव्यदोषहरा देवी रत्नेशीयं नवाक्षरी ।
षडङ्गानि च षट्कोणे पूर्वोक्तानि प्रपूजयेत् ॥ ३९ ॥
तन्मध्ये च परेशानि वृत्तं पूर्णेन्दुसंनिभम् ।
चन्द्रमण्डलरूपं तममृतं परिचिन्तयेत् ॥ ४० ॥
कलाभिस्तं प्रपूज्याथ चिन्तयेन्मध्यमण्डलम् ।

१ 'तु' ख. पाठः । २ 'परमेशानि' ख. पाठः ।

अकथादित्रिरेखाढ्यं हंत्ताभ्यन्तरमध्यगम् ॥ ४१ ॥
तदग्रे कामरूपं च जालन्धरं च वामतः ।
दक्षे पूर्णागिरिं चैव मध्ये चैवोड्डियानकम ॥ ४२ ॥
तत्र तत्र यजेद् देवीं चतुर्व्यूहस्वरूपिणीम् ।
सूर्यकोटिप्रतीकाशं चन्द्रकोट्ययुतप्रभम ॥ ४३ ॥
तथा दशभुजं देवं पञ्चवक्त्रं त्रिलोचनम् ।
खड्गखट्वाङ्ग[1]पट्टीशमुद्गरं शूलकुन्तकम्[2] ॥ ४४ ॥
बिभ्रतं खेटकं शक्तिं वरदाभयपाणि(न?क)म् ।
तस्योत्सङ्गे (स्वधां?सुरां)देवीं चन्द्रकोट्ययुतप्रभाम् ।४५।
हिमकुन्देन्दुधवलां पूर्वायुधकरोद्यताम् ।
प्रहसन्तीं विशालाक्षीं देवदेवस्य संमुखीम्[4] ॥ ४६ ॥
एवं ध्यात्वा समावाह्य कुलाकुलमयीं विभुः ।
अमृतीकरणं कुर्यान्मुद्रया धेनुसंज्ञया ॥ ४७ ॥
अवगुण्ठ्य ततो मन्त्री नीरजायतलोचने ।
सकलीकरणं कुर्यात् षडङ्गेन च पूर्ववत् ॥ ४८ ॥
परमीकरणं कुर्यान्महामुद्रिकया ततः ।
मु(ष?स)लमुद्रिकां योनिं गालिनीं च प्रदर्शयेत् ॥ ४९ ॥
वाममुष्ट्यन्तरेऽङ्गुष्ठे दक्षिणे स(वशा?रला)ङ्गुलीः ।
वामाङ्गुष्ठं स्पृशेदग्रे योजिता दक्षिणादधः (?) ॥ ५० ॥
मुष्टी कृत्वा तु हस्ताभ्यां वामस्योपरि दक्षिणम ।
कुर्यान्मु(ष?स)लमुद्रेयं सर्वविघ्नविनाशिनी ॥ ५१ ॥

---

१ 'ङ्गा' क. पाठः । २ 'खेटक' क. पाठः । ३ 'दन्तकम्' क. पाठः ।
४ 'खे' क. पाठः ।

कनिष्ठाङ्गुष्ठकौ भुग्नौ करयोरितरेतरम् ।
तर्जनीमध्यमानामाः संहता भुग्नवर्जिताः ॥ ५२ ॥
मुद्रेयं गालिनी प्रोक्ता परमामृतदायिनी ।
*शिवचन्द्रौ मातृकान्तं कालशक्रा(ग्रु?म्बु)वह्नयः ॥ ५३ ॥
वायुश्च वामकर्णेन योजिता बिन्दुनादिनः ।
बीजमेतत् समुच्चार्य तथा चानन्दभैरवम् ॥ ५४ ॥
ङेन्तं शिखामन्त्रयुतं पुनर्बीजानि संलिखेत् ।
§चन्द्रं हित्वादि (न?तः)कुर्यात्कर्णे वामाक्षि योजयेत् ॥५५॥
(स्वधा?सुरा)देव्यै ततो वौषट् इयमानन्दभैरवी ।
अनेन तौ तु संयोज्य परमानन्दनन्दितौ ॥ ५६ ॥
तदामृते तयोर्योगादमृतं च्चरतेऽचिरम् ।
तयोः पञ्चोपचारेषु स्रुचः पञ्च नियोजयेत् ॥ ५७ ॥
प्रथमं[3] प्रकृतेर्हंसः प्र तद्विष्णुरनन्तरम् ।
त्र्यैम्बकस्तृतीयः स्याच्चतुर्थस्तत्पदादिकः ॥ ५८ ॥
विष्णुर्योनिं-पदादिस्तु पञ्चमः परिकीर्तितः ।
दशधा प्रजपेद्विद्यां संस्पृश्यामृतमद्रिजे ॥ ५९ ॥
वागूभवं कामबीजं च सर्गवान् मनुयुग् भृगुः ।
तथामृतेपदं ब्रूयात् पश्चादमृतोद्भवे तथा ॥ ६० ॥

---

१ 'शक्रौ' क. पाठः । २ 'दिन' ख. पाठः । ३ 'मं' क. पाठः ।

* शिवचन्द्रौ हसौ मातृकान्तं च कालो म शक्रो ल अम्बु व वह्निः र वायुः य वामकर्णं ऊ तेन हसक्षमलवरयूं आनन्दभैरवाय वौषट् । इति

§ वक्तमन्त्रस्यादौ सकारं हित्वा वामकर्णस्थाने वामाक्षि ईमिति योज्यम् । तेन सहक्षमलवरयीं सुरादेव्यै वौषट् इति । वस्तुतस्तु हित्वेति स्थाने कृत्वेति स्पष्टः पाठो गुरुसंप्रदायादनुमन्तव्यः तेन सकारमादितः कृत्वेति ज्ञेयं ततः सहक्षमेत्यादिमन्त्रः ।

अमृतेश्वरि तथेत्युक्त्वा पश्चादमृतवर्षिणि ।
अमृतं(श्रा?स्रा)वययुगं वह्निजायावधिर्मनुः* ॥ ६१ ॥
वाग्भवं वदयुग्मं च वाग्वादिनि च[1] वाग्भवम् ।†
कामबीजं क्लिन्ने[2] चोक्त्वा क्लेदिनि क्लेदयेति च ॥ ६२ ॥
महाक्षोभं कुरुयुगं कामबीजमतः परम् ।
तार्तीयं मोक्षमित्युक्त्वा कुरुयुग्मं वदेत्ततः ६३
शक्तिबीजं पुनश्चान्ते संदीपनमनुः प्रिये ।
संदीपनादिकं कृत्वा बोधिन्या बोधयेत् ततः ॥ ६४ ॥
कृताञ्जलिपुटो भूत्वा स्मरेन्मन्त्रं§ वरानने ।
एवं पात्रचतुष्कं च वटुकादेः पुनर्भवेत् ॥ ६५ ॥
गुरूणां च त्रयं चैकमेकमेवात्मनो भवेत् ।
एवं भवन्ति पात्राणि नवैव ह्युत्तमानि च ॥ ६६ ॥
पञ्चपात्रं भवेन्मध्ये मध्यमं त्वेकपात्रकम् ।
गुरवे गुरु(पा?पु)त्राय तत्पत्न्यै तत् समर्पयेत् ॥ ६७ ॥
(व?वी)रशक्त्यै (वरं?वीर) पात्रं निवेद्यात्मनि योजयेत् ।
एवमेवार्चनाद् देवि भवेदमृतमुत्तमम् ॥ ६८ ॥
कुशाग्रेण समादाय अमृतं सर्वपावनम् ।

---

१ 'तु' ख. पाठः । २ 'क्लीन्नेत्यु' क. पाठः ।

* स्पष्टं यथा ऐंक्लींसौः अमृते अमृतोद्भवे अमृतेश्वरि अमृतवर्षिणि अमृतं स्रवय २ स्वाहा ।

† ऐं वदवद वाग्वादिनि ऐंक्लीं क्लेन्ने क्लेदिनि क्लेदय महाक्षोभं कुरु२ क्लींसौः मोक्षं कुरु२ सौः इति संदीपिनीविद्या ।

§ 'पूर्वलिखितं ब्रह्माण्डखण्डसंभूतमित्यादि मयि चित्स्फुरणां कुरु इत्यन्तम्' इति पर्यायरूपेणाधिकः पाठो दृश्यते ।

गुरुत्रयं च संतर्प्य वटुकादीन् प्रतर्प्य च ॥ ६९ ॥
प्रलयानलसंकाशे चिदग्नौ जुहुयात् ततः‡ ।
आत्मनः कुण्डलिन्याश्च हुत्वा वै ब्रह्मरन्ध्रके ॥ ७० ॥
बीजत्रयेण त्रिः प्राश्य मुद्रया तत्त्वसंज्ञया ।
विशुद्धान्तर्मनाः पूतो योग्यः स्याद्यागकर्मणि ॥ ७१ ॥
अमृतत्वं कवित्वं च प्राश्यामृतं लभेन्नरः ।
भ्रंशनादस्य पात्रस्य भूमौ बिन्दुनिपातनात् ॥ ७२ ॥
अशुभं स्यात् तदा तस्य होमाच्छान्तिर्नचान्यतः ।
प्रोक्षयेत् तेन चात्मानं मूलेन वारुणेन वा ॥ ७३ ॥
पूजोपकरणं चापि त्रिरभ्युक्ष्य तथैव हि ।
अमृतैः प्रोक्षितं यत्तु सर्वं ब्रह्ममयं भवेत् ॥ ७४ ॥
यदन्यद् दीयते द्रव्यमलंकारादिकं च यत् ।
वरुणस्यैव बीजेन तेषां प्रोक्षणमाचरेत् ॥ ७५ ॥
सर्वेषां देवमुच्चार्य मूलमुच्चार्य पूर्वतः ।
अर्घ्यपात्रस्थतोयेन प्रतिनाम्ना निवेदयेत् ॥ ७६ ॥
अन्यतोयैस्तु संस्पृष्टमर्घ्यपात्रस्थितेतरैः ।
तन्न गृह्णातीष्टदेवी दत्तं विधिशतैरपि ॥ ७७ ॥

---

इति श्रीगन्धर्वतन्त्रे पार्वतीश्वरसंवादे बहिर्यागविधौ विशेषार्घ्यपात्रादिसाधनक्रमनिरूपणं त्रयोदशः पटलः ॥१३॥

---

‡ अयमत्र मन्त्रः—आर्द्रं ज्वलति ज्योतिरेवाहं ब्रह्माहमस्मि सोऽहमस्मि ब्रह्मैवाहं मां जुहोमि स्वाहा ॥

# चतुर्दशः पटलः ।

ईश्वर उवाच

आधारशक्तिमारभ्य कामेश्वरान्तमद्रिजे ।
पूजयेत् साधको भक्त्या पीठं मन्त्रमयं पुरः ॥ १ ॥
ओंकारबिन्दुमध्यस्थं नामधेयाद्यमक्षरम् ।
देवतानां स्वबीजं तत्पूजायामृद्धिसिद्धिदम् ॥ २ ॥
कामपीठं ततो ध्यात्वा पूजयेत् साधकस्तथा ।
देवं कामेश्वरं तत्र ह्येकवक्त्रं चतुर्भुजम् ॥ ३ ॥
भस्मा(श्रु?श्वि)तं मध्यहृदि रक्तारक्तं च कुङ्कुमैः ।
त्रिशूलं च पिनाकं च वामहस्तद्वये धृतम् ॥ ४ ॥
उत्पलं बीजपूरं च दक्षिणद्वितये तथा ।
श्वेतपद्मोपरिस्थं च ध्यात्वा मध्ये प्रपूजयेत् ॥ ५ ॥
शक्त्या युक्तो यदा देवि साधकः परिचिन्तयेत् ।
आयुधा[नाम?नां स्व]रूपं च मूलदेव्यां समं निशि ॥ ६ ॥
शांभवेन[2] यजेद् देवं पूर्वोक्तेन च साधकः ।
सप्तम्या मूलमुच्चार्य महात्रिपुरसुन्दरी ॥ ७ ॥
अमृतपदमुच्चार्य चैतन्यमूर्तिमादितः ।
कल्पयामीति मनुना मूर्तिं संचिन्तयेत् तथा ॥ ८ ॥
देवीं कामेश्वराङ्कस्थां परमानन्दनन्दिताम् ।
साधकाय प्रयच्छन्तीं पुरुषार्थचतुष्टयम् ॥ ९ ॥
आनन्दालसया दृष्ट्या वीक्षन्तीं करुणार्द्रया ।

---

१ 'व्याः' क. पाठः । २ 'वाम्येन' क. पाठः ।

नाराचमुद्रया पश्चाद्रक्षां मन्त्रेण कारयेत् ॥ १० ॥
अवगुण्ठ्य ततो मन्त्री कुर्याद् दिग्बन्धनं ततः ।
प्राणायामं ततः कृत्वा गृह्णीयात् कुसुमाञ्जलिम् ॥ ११ ॥
पुष्पाञ्जलिं विना देवीं नावाहयेत् कदाचन ।
ततो ध्यायेन्महादेवीं यथोक्तां परमेश्वरीम् ॥ १२ ॥
प्रत्यक्षीकृत्य हृदये जितप्राणोऽथ साधकः ।
ऐक्यं संचिन्तयेद् देव्या बाह्यान्तर्मूर्तियुग्मयोः ॥ १३ ॥
ततस्तु वायुबीजेन वहन्नासापुटेन तु ।
तच्चैतन्यं विनिःसार्य पुष्पाञ्जलौ निवेशयेत् ॥ १४ ॥
नासिकावायुनिःसारात् पुष्पस्था देवता भवेत् ।
यावत् संस्थापयेद् देवीं स्वहस्तं न वियोजयेत् ॥ १५ ॥
कृते वियोगे हस्तस्य पुष्पात् तस्मान्महेश्वरि ।
गन्धर्वैः पूज्यते देवी पूजकैर्नाप्यते फलम् ॥ १६ ॥
त्रिखण्डामुद्रया तस्मात् तामावाहनविद्यया ।
निर्गमय्यातिदीप्ताभां श्रीपीठान्तर्निधारयेत् ॥ १७ ॥
पाणिद्वयं समं सम्यक् परिवर्तनयोगतः ।
योजयित्वा तर्जनीभ्यामनामे धारयेत् ततः ॥ १८ ॥
मध्यमे योजयेन्मध्ये कनिष्ठे तदधस्ततः ।
अङ्गुष्ठावपि संयोज्यौ त्रिधा युग्मक्रमेण तु ॥ १९ ॥
त्रिखण्डेयं महामुद्रा त्रिपुराह्वानकर्मणि ।
हैसबीजसमारूढा बाला चाग्न्यासनस्थिता ॥ २० ॥

१ 'हंस' क. पाठः ।

अनया*मूलमुच्चार्य मुद्रया च त्रिखण्डया ।
महापद्मवनान्तःस्थे कारणानन्दविग्रहे ॥ २१ ॥
सर्वभूतहिते मातरेह्येहि परमेश्वरि ।
देवेशि भक्तिसुलभे परिवारसमन्विते ॥ २२ ॥
अस्यां(मूर्तौ)समागच्छ स्थितिं मत्कृपया कुरु ।
एहि देवि प्रभावात् ते शुभदे भयनाशिनि ॥ २३ ॥
यावत् त्वां पूजयिष्यामि तावत् त्वं सुस्थिरा भव ।
कामेशि त्वमिहागच्छ सर्वैः परिकरैः सह ॥ २४ ॥
पूजाकर्मणि सांनिध्यमिह कल्पय कामिनि ।
कामेश्वरि समागच्छ कामेशाङ्कनिषेदुषि ॥ २५ ॥
अव्युच्छिन्नां मतिं शुद्धां वाचं कण्ठस्य देहि मे ।
एवं कृते महादेवि स्थितिस्तस्याः प्रजायते ॥ २६ ॥
सम्यक् संपूरितः पुष्पैः कराभ्यां कल्पितोऽञ्जलिः ।
आवाहनी समाख्याता मुद्रा सर्वार्थसाधिका ॥ २७ ॥
अधोमुखीकृता सैव तदा वै स्थापनी भवेत् ।
मिलितं मुष्टियुगलं संनिधापनरूपिणी ॥ २८ ॥
अन्तरङ्गुष्ठमुष्ट्या तु संनिरोधनरूपिणी ।
एतस्या एव मुद्रायास्तर्जन्यौ (सवने?प्रसृते) यदा ॥ २९ ॥
अवगुण्ठनमुद्रेयं सर्वरक्षाकरी मता ।
अमृतीकरणं कुर्यात् साधको धेनुमुद्रया ॥ ३० ॥
परिवर्त्य करौ पश्चात् तर्जनीमध्यमे युगे ।

* हस्रैं हसकलरीं हस्रौः इति त्रिखण्डाविद्या ।

कनिष्ठानामिकायुग्मं परस्परयुतं कुरु ॥ ३१ ॥
धेनुमुद्रेयमाख्याता अमृतीकरणे प्रिये ।
अङ्गमन्त्रान् न्यसेत् देवि देव्यङ्गे साधकोत्तमः ॥ ३२ ॥
सकलीकरणं नाम मुद्रेयं व्याप्तिरूपिणी ।
अन्योन्यग्रथिताङ्गुष्ठा प्रसारितपराङ्गुलिः ॥ ३३ ॥
महामुद्रेयमाख्याता परमीकरणे शिवे ।
ततोऽवगुण्ठयेद् देवीमवगुण्ठनमुद्रया ॥ ३४ ॥
आवाहनं भवेद् देवि दूराद्राह्वानमेव च ।
संस्थापनं भवेद् देवि निश्चलत्वोपपादकम् ॥ ३५ ॥
नैकव्यावस्थितित्वं च संनिधानमितीरितम् ।
अनन्यचित्तत्वया(च्छा?च्चा)संनिरोधनमुच्यते ॥ ३६ ॥
संपूर्णावस्थितेर्या(च्छ?च्चा)सकलीकरणं प्रिये ।
अयोग्यदृष्ट्यविषयपा(दो?द)नमवगुण्ठनम् ॥ ३७ ॥
आनन्दपूर्णाव(स्थिति?स्थ)त्वममृतीकरणं शिवे ।
सर्वापराधजातानां सहिष्णुत्वप्रकाशकम् ॥ ३८ ॥
परमीकरणं नाम संप्रार्थनमिहोच्यते ।
संमुखमुद्रया देवीं संमुखं प्रार्थयेत् ततः ॥ ३९ ॥
मुष्टिद्वयस्थिताङ्गुष्ठौ संमुखौ च परस्परम् ।
संश्लिष्टावुच्छ्रितौ कुर्या[च्छ्रेयः?त्सेयं]संमुखमुद्रिका ॥४०॥
मूलविद्यां समुच्चार्य महात्रिपुरसुन्दरी ।
श्रीपादुकां ततः पश्चात् पूजयामीति भक्तितः ॥ ४१ ॥

---

१ 'यता पा' क. पाठः ।

देवीपादाम्बुजद्वन्द्वे पुष्पाञ्जलित्रयं दिशेत् ।
तथैव तर्पयाम्यन्ते मुद्रया तर्पयेत् त्रिधा ॥ ४२ ॥
प्रार्थनमुद्रया पश्चादभ्यर्थयेदनेन तु ।
प्रसादसंमुखे देवि प्रसन्ना भव सुन्दरि ॥ ४३ ॥
पूजाभागं गृहाणेमं मामकं भक्तवत्सले ।
अहं यद्यपि देवेशि दुर्बलोऽप्यल्पसाधनः ॥ ४४ ॥
भक्त्या करोमि पूजां ते कृपयानुगृहाण माम् ।
प्रसृताङ्गुलिकौ हस्तौ मिथःश्लिष्टौ च संमुखौ ॥ ४५ ॥
कार्यौ च हृदये सेयं मुद्रा प्रार्थनसंज्ञिका ।
संदर्शयेत् स्वस्वबीजपूर्वं मु(द्रां त?द्रास्त)तो नव ॥ ४६ ॥
संक्षोभद्रावणाकर्षवश्योन्मादमहाङ्कुशाः ।
खेचरीबीजयोन्याख्या नव मुद्रास्ततः क्रमात् ॥ ४७ ॥
एता मुद्रा महेशानि ब[न्ध?न्धू]ककुङ्कुमप्रभाः ।
स्वस्वमुद्राकराः सर्वाः श्रीविद्यासंमुखी(ः)स्मरेत् ॥ ४८ ॥
अथैवं परमेशान्या उपचारान् निवेदयेत् ।
भक्त्यैवैते कृता देवि साधकं देवसंनिधिम् ॥ ४९ ॥
चारयन्ति यतस्तस्मादुच्यन्ते चोपचारकाः ।
समीपे चारणाद्वापि[कला?बालि]कान्ते तथोदिताः ॥ ५० ॥
नमोन्तमासनं दद्यात् स्वागतं दर्शनं भवेत् ।
नमोन्तं पादयोः पाद्यमर्घ्यं [शिवो?नमो]न्तमेव च ॥ ५१ ॥
स्वधेत्याचमनं [प्राज्ञि?प्रोक्तं] मधुपर्कस्तथैव च ।

---

१ 'द्राः' क. पाठः ।

तेनैव मनुनाचामं नमोन्तं स्नानमेव च ॥ ५२ ॥
नमोन्ते वाससी प्रोक्ते तथाङ्गाभरणानि च ।
नमोन्तमर्पयेत्(कुन्दं?गन्धं)पुष्पं च[1] वौषडन्तकम् ॥ ५३ ॥
पुष्पं समर्पयेद् देव्यै मुद्रया ज्ञानसंज्ञया ।
अङ्गुष्ठतर्जनीयोगाज् ज्ञानमुद्रेयमीरिता ॥ ५४ ॥
नमोन्तं च तथा धूपं दीपं[2] मालां तथैव च ।
नैवेद्यं च ततो दद्याद्यथोक्तं वै चतुर्विधम् ॥ ५५ ॥
पानार्थं मधुरं वारि दद्यादाचमनं पुनः ।
कर्पूरसहितं देव्यै ताम्बूलं च निवेदयेत् ॥ ५६ ॥
तर्पणानि पुनर्दद्यात् त्रिपुरातत्त्वमुद्रया ।
अङ्गुष्ठानामिकायोगात्[3] तत्त्वमुद्रेयमीरिता ॥ ५७ ॥
अङ्गुष्ठं शिवमित्याहुरनामा शक्तिरुच्यते ।
तर्पणं तु तयोर्योगादमृतैर्वामपाणिना ॥ ५८ ॥
योनिमुद्रां प्रदर्श्याथ मुद्राः संदर्शयेत् क्रमात् ।
स्तुत्वा प्रणम्य विधिवज्जपेद्विद्यामनन्यधीः ॥ ५९ ॥
जपान्ते जुहुयादग्निं होमान्ते बलिमुत्सृजेत् ।
बलिदानावसाने तु निवेद्यानि निवेदयेत् ॥ ६० ॥
दशाङ्गाद्यैस्ततो धूपैः पुनर्देवीं प्रधूपयेत् ।
दीपमालाः प्रदर्श्याथ पादाल्ललाटकावधि ॥ ६१ ॥
वीरेश्वराय वौषट् च[4] सिन्दूरं दापयेदथ ।
अङ्गरागेषु सिन्दूरं पानेषु मदिरां तथा ॥ ६२ ॥

---

१ 'च नास्ति' क. पाठः । २ 'पमा' क. पाठः । ३ 'गं' क. पाठः ।
४ 'पडिति' क. पाठः ।

वस्त्रेषु रक्तकौशेयं[1] त्रिपुराप्रीतिदायकम् ।
नेत्राञ्जनं निवेद्याथ दर्शयेद् दर्पणं तथा ॥ ६३ ॥
मूर्ध्नि च्छत्रं निधायाथ वीजयेद्रक्तचामरैः ।
सितैर्वा परमेशानीं नतु कृष्णैः कदाचन ॥ ६४ ॥
वादयेच्छङ्ख[2]घण्टे च पुनःपुनः प्रधूपयेत् ।
ततः संतोषयेद् देवीं गीतवादित्रनिःस्वनैः ॥ ६५ ॥
वाद्यैर्नानाविधैर्देवि क्रीडाकौतुकमङ्गलैः ।
नटनर्तकसंघैश्च[3] वेश्याभिरपि पार्वति ॥
आत्मना सर्वभावेन निवेद्य तन्मयो भवेत् ॥ ६६ ॥

---

इति श्रीगन्धर्वतन्त्रे पार्वतीश्वरसंवादे बहिर्यागविधिनिरूपणं
चतुर्दशः पटलः ॥ १४ ॥

---

१ 'पेयं' क. पाठः । २ 'यन्छ' क. पाठः । ३ 'है' क. पाठः ।

# पञ्चदशः पटलः ।

—————0—————

श्रीदेव्युवाच

उपचारान् कथं देव फलं तेषां च कीदृशम् ।
यच्च प्रियतमं देव्यास्तत् सर्वं वद शंकर ॥ १ ॥

ईश्वर उवाच

उपचारान् प्रवक्ष्यामि शृणु षोडश पार्वति ।
यैः साक्षात्[1] तुष्यते देवी विधानैर्वि[2]हितैर्वि[दुःमुः] ॥ २ ॥
सौवर्णं राजतं ताम्रं तथा रत्नविनिर्मितम् ।
आसनं प्रथमं दद्यात् पौष्पं दारवमेव वा ॥ ३ ॥
न पत्रमासनं दद्यात् कदाचिदिह पूजने ।
यथोक्तविधिना देव्यै रक्तकम्बलमेव वा ॥ ४ ॥
[3]सुमेरुपादपीठान्ते पद्मकल्पित आस[4]ने ।
भोगमोक्षप्रदे मातस्तिष्ठस्व परमेश्वरि ॥ ५ ॥
अनेनैवासनं देव्यै यो दद्याद्विहितं शिवे ।
भुक्तिमुक्ती करे तस्य सर्वत्र स्थानवान् भवेत् ॥ ६ ॥
पा(द्या?दा)र्थमुदकं पाद्यं चन्दनागुरुसंयुतम् ।
सुशीतलं❀मया देवि सुखाय तव पादयोः ॥ ७ ॥
तत्तैजसेन पात्रेण शङ्खेनाथ प्रदापयेत् ।
धर्मार्थकाममोक्षाणां संस्थानं पा[5]द्यमिष्यते ॥ ८ ॥

१ 'स्यात्' ख. पाठ' । २ 'रिडितैः' क. पाठः । ३ 'स्व' क. पाटः । ४ 'तमासनम्' ख. पाठ. । ५ 'द' क. पाठः । ❀ निवेदितमितिशेषः ।

पाद्यमन्त्रो मया प्रोक्त(म?स्त्व)नेनैव निवेदयेत् ।
अर्घ्येण लभते कामानर्घ्येण लभते धनम् ॥ ९ ॥
पुत्रायुःसुखमोक्षा(णि?दि) दानाद(र्घं?र्घ्य)स्य वै लभेत् ।
पूर्वसंस्थापितेनैव शङ्खेन विधिना स्वयम् ॥ १० ॥
श्वेतसर्षपमुद्राभ्यां तिलक्षीरैस्तथा यवैः ।
रक्तचन्दनपु(ष्पे च ?ष्पैश्च) त्रिपुरायै महेश्वरि ॥ ११ ॥
निधाय पुरतो दद्यादर्घ्यमन्त्रेण साधकः ।
अर्घ्यमर्घ्यमिदं देवि मया भक्त्या निवेदितम् ॥ १२ ॥
सजलं शङ्खपात्रस्थं गृहीत्वा मूर्ध्नि योजय ।
उदकं दीयते य[स्तु?त्तु]सगन्धं फेनवर्जितम् ॥ १३ ॥
आचमना(र्थं?र्थं)देवाय तदाचमनमुच्यते ।
कर्पूरवासितैर्वापि कालागुरुप्रधूपितैः ॥ १४ ॥
यथा तथा सगन्धैर्वा प्रसन्नैः [क?फे]नवर्जितैः ।
दद्यादाचमनीयं तु सगन्धसलिलैः शुभैः ॥ १५ ॥
तैजसेन तु पात्रेण शङ्खनाप्यथवा प्रिये ।
आयुर्बलयशोवृद्धिं प्रदायाचमनीयकम् ॥ १६ ॥
लभते साधको नित्यं[स?का]मांश्चैव यथेप्सितान्[1] ।
सगन्धाचमनं देवि मया भक्त्या निवेदितम् ॥ १७ ॥
आयुर्बलयशोवृद्ध्यै तदिदं प्रतिगृह्यताम् ।
दधि सर्पिर्जलं क्षौद्रं सिताभिश्चापि[पञ्चभिः?सेक्तुभिः] ।१८
प्रोच्यते मधुपर्कस्तु[2] देवीप्रीतिप्रदायक ।

१ 'तम्' क. पाठः । २ 'कं तु' क. पाठः

तं च नारिकेलोत्थं सिता दधि घृतं समम् ॥ १६ ॥
षामधिकं चौद्रं मधुपर्के प्रयोजयेत् ।
दद्यात् कांस्यपात्रेण रोप्यपात्रेण वा पुनः ॥ २० ॥
तिष्टोमाश्वमेधाद्यौ यत् पुण्यं लभते नरः ।
तत् परमेशानि मधुपर्के प्रतिष्ठितम् ॥ २१ ॥
ज्यं दधि मधून्मिश्रं जलं चापि सशर्करम् ।
पर्कं रोप्यपात्रे गृहीत्वा भुङ्च्व सुन्दरि ॥ २२ ॥
पर्कं विना पूजा साधकच्चयकारिणी ।
पर्कमदृष्ट्वैव साधकं भक्षयेत् परा ॥ २३ ॥
रागुरुकस्तूरीरोचनाकुङ्कुमं तथा ।
रिकेलजलं चौद्रं तथेक्षुरसमुत्तमम् ॥ २४ ॥
तां[2] च पञ्चगव्यं च सर्वौषधिगणं तथा ।
ते तोयमिति प्रोक्तं स्नानीयं त्रिपुराप्रियम् ॥ २५ ॥
रेणाथवा शङ्खैस्त्रिपुरायै निवेदयेत् ।
कः स्नानदानात्तु हयमेधफलं लभेत् ॥ २६ ॥
युः कामभोगी च महापातकहा भवेत् ।
कं सर्ववस्तूनां सहस्रपलमानतः ॥ २७ ॥
स्नानं भवेद्देवि मध्यं पलशतेन तु ।
ष्टं वै भवेत् स्नानं प(स्नानां ?स्नैः) दशभिरीरितम् ॥ २८ ॥
कीकृतैस्तु सर्वेषां स्नानमानं न विद्यते ।
येत् प्रथमं देवीं त्रिपादिति ऋचा पुनः ॥ २९ ॥

म' क. पाठः । २ 'तां' क. पाठः । ३ 'ऋा' क. पाठः ।

मूलेनापि ततः पश्चादमुना च निवेदयेत् ।
त्वमापः पृथिवी[1] चैव ज्योति(स्तं? स्त्वं)र्वायुरेव च ॥ ३
केवलं भक्तिभावेन देवि त्वां स्नपयाम्यहम् ।
[2]स्नपयित्वा महादेवीं वस्त्रं यदि न दापयेत् ॥ ३१
स निर्लज्जः परः पापः प्रपते(द ?द्वृ)जिनार्णवे ।
वस्त्राभावे ततो दद्याद्रक्तपद्मं तथा ज(वाः ? पाः) ॥ ३
स्नपयित्वा महादेवीं वस्त्रयुग्मं प्रदापयेत् ।
वस्त्रेण ह्रियते लज्जा वस्त्रेण ह्रियते त्वघम् ॥ ३३
सर्वभूषणवर्गेषु वस्त्रमुत्तममुच्यते ।
देवीप्रीतिकरं वस्त्रं चतुर्वर्गप्रदं शुभम् ॥ ३४ ॥
निर्दशं मलिनं जीर्णं छिन्नं गात्रावलिङ्गितम् ।
परकीयं ह्या(थु ? खु)दष्टं सूचीविद्धं तथोषितम् ॥ ३
सत्पताका(रि ? वि)तानादौ सूचीविद्धं प्रयोजयेत् ।
केशान्वितमधौतं च श्लेष्ममूत्रादिदूषितम् ॥ ३६ ॥
वह्निदग्धं कुचैलं च महादेव्यै न दापयेत् ।
चित्रवस्त्रं दुकूलं च देवीप्रीतिकरं परम् ॥ ३७ ॥
सर्वसिद्धिप्रदं वस्त्रं वह्निष्टोमफलप्रदम् ।
विद्यातन्तुसमायुक्ते मन्त्रवर्णसमन्विते ॥ ३८ ॥
विद्याविद्ये ज(वा ? पा)शोणवाससी तव सुन्दरि ।
उद्यदादित्यसंकाशं वासोयुग्मं सुनिर्मलम् ॥ ३९ ॥
नूतनं गात्रसुखदं परिधत्स्व सुरेश्वरि ।

१ 'वीं' क. पाठः । २ 'स्ना' क. पाठः ।

किरीटं च शिरोरत्नं कुण्डलं च ललाटिका ॥ ४० ॥
तालपत्रं च हार[1]श्च ग्रैवेयकमथोर्मिका ।
सूत्रावली केशपाशे ता(ड?ट)ङ्कवलया(न्ददौ?ङ्गदाः) ॥४१॥
पादाङ्गु(री?ली)यकं सूत्रं नूपुरं क्षुद्रघण्टिकाः ।
अलंकाराः समाख्याता अलंकारेषु षोडश ॥ ४२ ॥
चतुर्वर्गप्रदं नित्यं भूषणं सर्वसौख्यदम् ।
तुष्टिपुष्टिकरं दे[2]व्यै यथाशक्त्या निवेदयेत् ॥ ४३ ॥
नवरत्नसमायुक्ता द्रुतहाटककल्पिताः ।
गात्राणि शोभयन्त्वेते अलंकारास्तु सुन्दरि ॥ ४४ ॥
कामेशि कामरूपे त्वं सर्वकामफलप्रदे ।
भूषणं गृह्ण चार्वङ्गि मया भक्त्या निवेदितम् ॥ ४५ ॥
चूर्णीकृतो वा घृष्टो वा दाहाकर्षित एव वा ।
रसः संमर्द[3]जो वापि प्राण्यङ्गोद्भव एव वा ॥ ४६ ॥
गन्धः पञ्चविधः प्रोक्तो देवीप्रीतिप्रदायकः ।
प्रशस्तगन्धयु[क्ता?क्त्या]तु गन्धचूर्णानि यानि च ॥ ४७॥
तानि गन्धाह्वयानि स्युः स गन्धः प्रथमः स्मृतः ।
घृष्टो मलयजो गन्धः [स?श]वलश्च नमेरुणा ॥ ४८ ॥
अगुरुप्र[भू?भृ]तिश्चापि यस्य पङ्कः प्रदीयते ।
अगु[4]रुर्देवदार्वादि यो दग्ध्वा गृह्यते रसः ॥ ४९ ॥
स दाहाकर्षितो गन्धस्तृतीयः परिकीर्तितः ।
सगन्धगन्धिनीबिल्वातिलकं शतपत्रिकाम् ॥ ५० ॥

---

१ 'रं' क. पाठः । २ 'नित्यं' क. पाठः । ३ 'समर्दजः' क. पाठः । ४ 'रुर्दे' क. पाठः ।

निष्पीड्य गृह्यते योऽसौ संमर्दजः स उच्यते ।
मृगनाभिसमुद्भूतस्तत्कोशोद्भव एव वा ॥ ५१ ॥
गन्धः प्राण्यङ्गजः प्रोक्तः पञ्चमस्तु स उच्यते ।
गन्धस्य विस्तरो भेदो दिङ्मात्रं समुदाहृतम् ॥ ५२ ॥
सर्वेषु गन्धजातेषु प्रशस्तो मलयोद्भवः ।
तस्मात् सर्वप्रयत्नेन दद्यान्मलयजं सदा ॥ ५३ ॥
कुङ्कुमागुरुकस्तूरीकर्पूरमलयोद्भवैः[१] ।
समीकृतैस्तु यो गन्धस्त्रिपुराप्रीतिदायकः ॥ ५४ ॥
कुचन्दनं [शि ? सि]तं चैव कालीयकसमन्वितम् ।
अनुलेपनमुख्यं तु देव्याः प्रीतिकरं परम् ॥ ५५ ॥
अलक्तं नखरागेषु देवीप्रीतिकरं तथा ।
गन्धेन लभते कामान् गन्धो धर्मप्रदः सदा ॥ ५६ ॥
अ[म्वा ? ङ्गा]नां साधको गन्धो मोक्षे चापि प्रतिष्ठितः ।
शरीरं ते न जानामि चेष्टां[चै ? श्चै]व महेश्वरि ॥ ५७ ॥
मया निवेदितान् गन्धान् प्रतिगृह्य विलिप्यताम् ।
गन्धैः सुतोषिता देवी चतुर्वर्गप्रदा भवेत् ॥ ५८ ॥
अनेनैव महेशानि गन्धान् देव्यै निवेदयेत् ।
घृततैलादियोगेन स्वर्णादौ दीपवह्निना ॥ ५९ ॥
यदञ्जनं प्रजायेत कृत्वा कर्पूरमिश्रितम् ।
धर्मार्थकाममोक्षाय त्रिपुरायै निवेदयेत् ॥ ६० ॥
विधवा ना(चञ्ज ? ञ्ज)नं कुर्यान्महामायार्थमद्रिजे ।

---

१ 'पोद्भवं' क. पाठः ।

न मृत्पात्रे गतं कुर्यात् साधको नेत्ररञ्जनम् ॥ ६१ ॥
न पूजाफलमाप्नोति मृत्पात्रे विहिताञ्ज(लैः? नैः) ।
परकीयांस्तथा घ्रातान् स्तेयं कृ(त्या?त्वा)भिमर्दितान् ॥ ६२॥
पुष्पं धूपं च गन्धं च नोपच[रान्? रेत्] तथापरान् ।
घ्रातान् निवेद्य देवेशि नरो नरकमाप्नुयात् ॥ ६३ ॥
नैव पर्युषितैः पुष्पैः पत्रैश्चापि महेश्वरीम् ।
पूजयेत् परमेशानि महात्रिपुरसुन्दरीम् ॥ ६४ ॥
सर्वं पर्युषितं वर्ज्यं पत्रं पुष्पं फलं तथा ।
पद्मानि सितरक्तानि कुमुदान्युत्पलानि च ॥ ६५ ॥
एषां पर्युषिताशङ्का कार्या पञ्चदिनोर्ध्वतः[1] ।
अन्येषां कुसुमानां च यावद्गन्धविपर्ययः ॥ ६६ ॥
बिल्वपत्रे महेशानि नास्ति पर्युषितात्मता ।
बकुलं केसरं वज्रं माल्यं[2] कुन्दं च शाल्मलम् ॥ ६७ ॥
करवीरं चार्कपुष्पं बन्धूककमले तथा ।
मालती मल्लिका जाती यूथिका माधवी तथा ॥ ६८ ॥
तगरः कर्णिकारश्च द्रोणश्चोत्पलचम्पकौ ।
अशोकः कुमुदश्चैव शेफालिकाकदम्बकौ ॥ ६९ ॥
केतकी वनमाला च कुसुम्भकिंशुकौ तथा ।
कह्लारबकुले चैव लवङ्गनागकेसरौ ॥ ७० ॥
सर्वेषु पुष्पजातेषु त्रिपुरायाः सदैव हि ।
एतान्येव प्रियाणि स्युर्न पत्रैरर्चयेच्छिवाम् ॥ ७१ ॥
पत्रेषु बिल्वपत्रं च तथा मदनपल्लवम् ।

---

१ 'र्ध्वतः' क. पाठः । २ 'लां' ख. पाठः ।

दूर्वाङ्कुरं तथा प्रो(क्ता?क्तं) नान्यत् पत्रं प्रयोजयेत् ॥ ७२ ॥
मल्लिका मालती कुन्दो द्रोणश्चाथ सिताम्बुजम् ।
शुक्लपक्षे महादेवि त्रिपुरायै निवेदयेत् ॥ ७३ ॥
सर्वेषां पुष्पजातीनां रक्तपद्मं तथा ज(वा?पा) ।
देवीप्रीतिकरं प्राज्ञे सर्वकामफलप्रदम् ॥ ७४ ॥
रत्नपुष्पं च देवेशि तथा स्वर्णादिनिर्मितम् ।
रक्तपद्मेन वज्रेण तुलां नायाति कर्हिचित् ॥ ७५ ॥
एतेषां पुष्पजातानां येन केन विनिर्मिताम् ।
मालां कृत्वा महादेव्यै यत् फलं लभते नरः ॥ ७६ ॥
अपि वक्त्रसहस्रैस्तद्वक्तुं नालं ततः प्रभुः ।
पुष्पमूले वसेद् ब्रह्मा पुष्पमध्ये तु केशवः ॥ ७७ ॥
पुष्पाग्रेऽहं स्थितो नित्यं सर्वे देवाः स्थिता दले ।
चराचराश्च सकलाः सदा पुष्पवसाः स्मृताः ॥ ७८ ॥
परं ज्योतिः पुष्पगतं पुष्पेणैव प्रसीदति ।
भोगमोक्षप्रदं पुष्पं तुष्टिश्रीपुष्टिमोददम् ॥ ७९ ॥
पुष्पैर्देवी प्रसन्ना स्याद् धर्मकामार्थदायिनी ।
तस्मात् पुष्पैर्यजेद् देवीं नित्यं भक्तियुतो नरः ॥ ८० ॥
ब्रह्मविष्णुशिवादीनां पुष्पमेव सदा प्रियम् ।
तत्ते मातः प्रयच्छामि पवित्रं प्रतिगृह्यताम् ॥ ८१ ॥
उग्रगन्धमगन्धं च कृमिकेशादिदूषितम् ।
अशुद्धपात्रपाणिस्थं वासोभिः कुत्सितात्मभिः ॥ ८२ ॥
आनीतं नार्पयेद् देव्यै प्रमादादपि दोषकृत् ।

१ 'स्तु' ख. पाठः ।

स्ना(त्वा?ता)नीतैः पर्युषितैर्याचितैः कृष्णवर्णकैः ॥ ८३ ॥
स्वयं विका(शि?सि)तैर्मुक्तैः स्वयं च पातितैर्भुवि ।
नार्चयेत् कलिकाभिश्च विना चम्पकपङ्कजैः ॥ ८४ ॥
पुष्पं वा यदिवा पत्रं फलं नेष्टमधोमुखम् ।
दुःखदं तत् समाख्यातं यथोत्पन्नतथार्पणम् ॥ ८५ ॥
चित्रपूजासु सर्वासु न विरुद्धं न दूषणम् ।
अधोमुखार्पणं नेष्टं पुष्पाञ्जलिविधिं विना ॥ ८६ ॥
किंचातिबहुनोक्तेन सामान्येनेदमुच्यते ।
उक्ता(न्मु?नु)क्तैस्तथा पुष्पैर्जलजैः स्थलजैरपि ॥ ८७ ॥
पत्रैः सर्वैर्यथालाभं भक्तिमान् सततं यजेत् ।
पुष्पाभावे यजेत् पत्रैः पत्रालाभे च तत्फलैः ॥ ८८ ॥
अक्षतैर्वा जलैर्वापि न पूजां व्यतिलङ्घयेत् ।
एतेषामप्यलाभे तु मानसीं भक्तिमाश्रयेत् ॥ ८९ ॥
दह्यमानस्य काष्ठादेर्निस्तापो यस्य जायते ।
नासादिरन्ध्रसुखदः सगन्धोऽतिमनोहरः ॥ ९० ॥
स धूप इति विज्ञेयो देवीप्रीतिप्रदायकः ।
पत्रं[1] मुस्तं नखं कुष्ठं जटा मांसी च शैलजम ॥ ९१ ॥
सरलं देवकाष्ठं च जतु सर्जसचन्दनम् ।
कपिलाघृत–कर्पूर–शर्करागरुमिश्रितम् ॥ ९२ ॥
षोडशाङ्गो महाधूपः षोडशीप्रीतिदायकः ।
न भूमौ वितरेद् धूपं नासने कलशे नतु ॥ ९३ ॥
यथा तथाधारगतं कृत्वा तं तु निवेदयेत् ।

---

१ 'पुत्रं' क. पाठः ।

वनस्पतिरसोत्पन्नो गन्धाढ्यो गन्ध उत्तमः ॥ ९४ ॥
आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ।
अथ दीपं प्रवक्ष्यामि ज्योतिष्टोमफलप्रदम् ॥ ९५ ॥
घृतदीपस्तु[1] प्रथमस्तिलतैलोद्भवस्ततः ।
सार्षपश्चाधमः प्रोक्तस्तदन्यो निन्दितः स्मृतः ॥ ९६ ॥
पद्मसूत्रभवा चाद्या कार्पाससंभवा परा ।
दर्भगर्भभवा चापि वर्तिका परिकीर्तिता ॥ ९७ ॥
को[ष?श]जं रोमजं वास्त्रं तूलं[2] पर्युषितं तथा ।
वर्तिकार्थं न चादद्यात् साधको भूतिमिच्छुकः ॥ ९८ ॥
तैजसं पार्थिवं लौहं दीपपात्रं प्रशस्यते ।
दीपवृक्षाश्च कर्तव्यास्तैजसाद्याः पृथक् पृथक् ॥ ९९ ॥
वृक्षे दीपः प्रदातव्यो नतु भूमौ कदाचन ।
कुर्वन्तं पृथिवीतापं यो दीपमुत्सृजेन्नरः ॥ १०० ॥
तामिस्रं नरकं घोरमाप्नोत्येव न संशयः ।
नेत्राह्लादकरः स्वर्चिर्दूरतापविवर्जितः ॥ १०१ ॥
सशिखः शब्दरहितो निर्धूमो नातिह्रस्वकः ।
दीपवृक्षस्थिते पात्रे शुद्धस्नेहप्रपूरिते ॥ १०२ ॥
दक्षिणावर्तवर्त्यां वै चारुदीप्तः प्रदीपकः ।
उत्तमः प्रोच्यते सोऽत्र त्रिपुराप्रीतिदायकः ॥ १०३ ॥
वृक्षेण वर्जितो दीपो मध्यमः परिकीर्तितः ।
विहीनः पात्रतैलाभ्याम[ध्य?ध]मः परिकीर्तितः ॥ १०४ ॥
दीपमाला प्रकर्तव्या नैकदीपः कदाचन ।

१ 'तं' क पाठः। २ 'मलिनं' क पाठः।

त्रयो दीपाः प्रदातव्याः पञ्च वा परमेश्वरि ॥ १०५ ॥
इतो न्यूनं न दातव्यं त्रिपुरायै कदाचन ।
नैव दीपः प्रदातव्यो विधूतः श्रीविवृद्धये ॥ १०६ ॥
न मिश्रीकृत्य दद्यात् तु दीपस्नेहान् घृतादिकान् ।
कृत्वा मिश्रीकृतस्नेहं रौरवं नरकं व्रजेत् ॥ १०७ ॥
नैव निर्वापयेद् दीपं देवार्थमपि कल्पितम् ।
दीपहर्ता भवे[द्ध?द]न्धः का[नो?णो]निर्वापको भवेत् ।१०८।
न तेन व्यवहारोऽपि कर्तव्यः साधकोत्तमैः ।
सूर्याचन्द्रमसोर्ज्योतिर्विद्यु[द?तोऽ]ग्नेस्तथैव च ॥ १०९ ॥
त्वमेव ज्योतिषां ज्योतिर्दीपोऽयं प्रतिगृह्यताम् ।
दीपं दक्षिणतो देव्याः पुरतो नतु वामतः ॥ ११० ॥
वामतस्तु तथा धूपमग्रे वा नतु दक्षिणे ।
निवेदयेत् पुरोभागे गन्धं पुष्पं च भूषणम् ॥ १११ ॥
नैवेद्यं दक्षिणे वामे पुरतो वा न पृष्ठतः ।
गात्रे दातुं च यद्योग्यं यन्त्रेष्वेव निवेदयेत् ॥ ११२ ॥
दद्यादयोग्यं पुरतो नैवेद्यं भोजनादिकम् ।
मदिरां पृष्ठतो दद्यादन्यपानं तु वामतः ॥ ११३ ॥
या विद्या चेह देवेशि श्रीविद्यायामनासवा ।
फलहीना समाख्याता साभिचाराय कल्पते ॥ ११४ ॥

इति श्रीगन्धर्वतन्त्रे पार्वतीश्वरसंवादे पूजोपचारतत्फलवर्णनं पञ्चदशः पटलः संपूर्णः ॥ १५ ॥

---

१ 'वी' क. पाठः ।

## षोडशः पटलः

ईश्वर उवाच

इक्षुरसं समादाय पर्युषितं सुसंस्कृतम् ।
सहकाररसं तत्र निक्षिपेन्मधुना सह ॥ १ ॥
बादरं जाम्बवं चैव रसं खार्जूरमेव च ।
नारिकेलोद्भवं तत्र द्राक्षारसमनुत्तमम् ॥ २ ॥
मोहिनीफलजं चूर्णं जातीकोषरजस्तथा ।
कनकबीजचूर्णं च जातीफलसमुद्भवम् ॥ ३ ॥
त्रिजातं त्रिसुगन्धि च त्रिकटुं त्रिफलान्वितम् ।
तथान्येषां च द्रव्याणां सुगन्धीनां रजः शिवे ॥ ४ ॥
किंचित् किंचिच्च निक्षिप्य कर्पूरैरधिवासयेत् ।
स्वर्णे वा राजते पात्रे का(ट?च)पुटेऽथवा प्रिये ॥ ५ ॥
स्थापयित्वा सितां तत्र निक्षिपेत् परमेश्वरि ।
निक्षिप्य लोहितैर्देवि वस्त्रैराच्छाद्य यत्नतः ॥ ६ ॥
सप्तरात्रोषितं तत्तु जायते ह्यमृतोपमम् ।
चन्दनागुरुकर्पूरैर्धूपयित्वा निवेदयेत् ॥ ७ ॥
एषा सर्वोत्तमा प्रोक्ता देवीप्रियतमा सदा ।
मदिरेति समाख्याता परमानन्ददायिनी ॥ ८ ॥
एनां निवेद्य सुन्दर्यै सर्वसिद्धिमुपालभेत् ।
देवीलोके चिरं स्थित्वा ततो राजा क्षितौ भवेत् ॥ ६ ॥

१ 'श्चा' ख. पाठः ।

तत्रापि चानयाराध्यं[1] कैवल्यं मुक्तिमाप्नुयात् ।
सविकल्पस्य देवेशि विहितैषा न चान्यथा ॥ १० ॥
निर्विकल्पस्य देवेशि सुरै(र?व)विहितागमे ।
अमृतं च तदेव स्यान्म(दां?द्यं)चापि तदेव हि ॥ ११ ॥
नापद्यपि द्विजो मद्यं दद्याद् देव्यै कदाचन ।
मोहाद्यदि ददेन्मद्यं ब्राह्मण्यादेव हीयते ॥ १२ ॥
ब्रह्मघाती स एव स्यात्तस्मान्मद्यं विवर्जयेत् ।
मद्यमेव पुरासेव्यमासीत् कमललोचने ॥ १३ ॥
पीत्वा मद्यं पुरा शुक्र आत्मानं चापि(विस्मृतः?व्यस्मरत्)।
पीत्वा मत्तो निशानाथः पत्नीं तां जगृहे गुरोः ॥ १४ ॥
अतस्तेनापि मुनिना शापो दत्तः सुदारुणः ।
ब्रह्मा च मुनिभिः सार्धमिदमेव पुरा जगौ ॥ १५ ॥
महादेव्यै द्विजो मद्यं यो दद्याज्ज्ञानविह्वलः ।
पशुभावे स्थितो यश्च स महापातकी भवेत् ॥ १६ ॥
शेषयोर्विहितं मद्यं निर्विकल्पकयोः पुनः ।
नाद्यस्य विहितं तेन ब्रह्मघाती भवेच्च सः ॥ १७ ॥
तेनेदं पृथिवीक्षेत्रे वर्ज्यमासीत् सुलोचने ।
ज्ञानिनां सिद्धिदा चेयममृतत्वप्रदायिनी ॥ १८ ॥
ज्ञानेन संस्कृता चेयं महापातकनाशिनी ।
ब्रह्महत्या-सुरापान-स्वर्णस्तेयादिपातकान् ॥ १९ ॥
नाशयेत् पूजना(द्धेरि?द्देवि)निर्विकल्पो भवेद्यदि ।

---

१ 'ध्या' क. पाठः ।

निर्विकल्पो यदा मद्यं महादेव्यै निवेदयेत् ॥ २० ॥
अश्वमेधसहस्रस्य अग्निष्टोमशतस्य च ।
राजसूयशतस्यापि फलमाप्नोत्यसंशयम् ॥ २१ ॥
अणिमाद्यष्टसिद्धीनां नायको जायतेऽचिरात् ।
सविकल्पो यदा देवि पापभाङ् नात्र संशयः ॥ २२ ॥
सुरे चानघधामासि स्वा(धा?हा)त्वं च दिवौकसाम् ।
स्वधा त्वं पितृमुख्यानां मनुष्याणां च सिद्धिदा ॥ २३ ॥
क्षीरा(ब्धि)मथने पूर्वमुद्भूता देवसंसदि ।
आनन्दभैरवी सार्धमानन्दभैरवेण तु ॥ २४ ॥
त्वयि प्र[सन्न?सादं]याताया सिद्धिरेव न संशयः ।
विमुखी चेत्तदा तस्य कुलज्ञानविनाशिनी ॥ २५ ॥
प्रसन्ना खलु देवानां गन्धर्वाणां तथैव च ।
विमुखी त्वं च दैत्यानामसकृत् सर्वनाशिनी ॥ २६ ॥
त्वां(म?द)द्यां व[द?र]दे देव्यै मयि चित्स्फुरणं कुरु ।
एवं स्तुत्वा सुरां देव्यै पूर्वोक्तेन च संस्कृताम् ॥ २७ ॥
त्रिपुरायै निवेद्यैव निग्रहानुग्रहक्षमः ।
चर्व्यं चोष्यं तथा लेह्यं पेयं चेति चतुर्विधम् ॥ २८ ॥
सर्वयज्ञमयं नित्यं नैवेद्यं सर्वतुष्टिदम् ।
ज्ञानदं कामदं पुण्यं बलारोग्यमयं तथा ॥ २९ ॥
नैवेद्येन लभेत् स्वर्गं नैवेद्येनामृतं भवेत् ।
धर्मार्थकाममोक्षाश्च नैवेद्येषु प्रतिष्ठिताः ॥ ३० ॥

१ 'वह्निष्टो' क.पाठः । २ 'खने' क. पाठः । ३ 'रादव्यै' क.पाठः । ४ 'तश्च' क.पाठः । ५ 'ताः' क.पाठः

तस्मात् सर्वप्रयत्नेन नैवेद्यं खलु दापयेत् ।
मनसापि महादेव्यै नैवेद्यं दीयते यदि ॥ ३१ ॥
यो नरो भक्तिसंयुक्तो दीर्घायुः स सुखी भवेत् ।
हविः सुसंस्कृतं दिव्यमाज्ययुक्तं सशर्करम् ॥ ३२ ॥
शुद्धस्फटिकसंकाशं चन्द्रबिम्बसमप्रभम् ।
लसत्त(न्तु?ण्डु)लजं देवि चारुगन्धसहं मृदु ॥ ३३ ॥
सुगन्धिशा(द्वि?लि)जं चा(त्वं?रु) मधुमांससमन्वितम् ।
अपूपपायसं क्षीरमन्नं देव्याः प्रशस्यते ॥ ३४ ॥
बलिदानेषु विहिता य एव मृगपक्षिणः ।
तेषां मांसानि मत्स्यानि देयानि विविधानि च ॥ ३५ ॥
सर्वं सुरभिगन्धाढ्यं व्यञ्जनं सुमनोहरम् ।
यथा यथा भवेद्धव्यं यत्नं[1](द्रव्यं?देयं)तथा तथा ॥ ३६ ॥
संस्कृत्य वेशवाराद्यैर्महादेव्यै निवेदयेत् ।
यत्पूतिगन्धसंयुक्तं दग्[2]धं भोगबहिष्कृतम् ॥ ३७ ॥
तदुक्तमपि(यो?न)दद्यात् त्रिपुरायै कदाचन ।
कालशाकं कलायं च पालकं चापि पोतिकाम् ॥ ३८ ॥
सार्षपं मूलकं चापि वास्तूकं च कलम्बिकाम् ।
शाकानेतान् महादेव्यै यो दद्याद्भक्तिसंयुतः ॥ ३९ ॥
सोऽतुलां श्रियमाप्नोति देवीलोके महीयते ।
माषमु(ग्द?द्ग)मसूराद्यैर्व्यञ्जनं लवणान्वितम् ॥ ४० ॥
हिङ्गुजीरमरीचाद्यैरार्द्रकैश्चापि संस्कृतम् ।

---

१ 'यत्नात्' क पाठः । २ 'दुग्ध' क. पाठः ।

तिन्तिडीखण्डसंयुक्तं भक्तियुक्तो निवेद्य च ॥ ४१ ॥
ज्योतिष्टोमफलं लब्ध्वा देवीलोकमवाप्नुयात् ।
नानाविधानि पेयानि व्यञ्जनानि बहून्यपि ॥ ४२ ॥
क्षीरादीन्यथ गव्यानि माहिषाणि च सर्वशः
आमिक्षां परमेशान्यै दधि चापि सशर्करम् ॥ ४३ ॥
पायसं शर्करापूपं कपिलाघृतसंयुतम् ।
पक्वान्नमतिमिष्टं च सिताकर्पूरसाधितम् ॥ ४४ ॥
शर्करालोलितान् कृत्वा वटकान् कुङ्कुमारुणान् ।
सशर्करं पक्वदुग्धं कदल्यादिफलान्वितम् ॥ ४५ ॥
सितोपदंशं मद्यं च स्वर्णपात्रे निवेदयेत् ।
अथवा रौप्यपात्रे च ताम्रपात्रेऽथवा पुनः ॥ ४६ ॥
अभावात् पद्मपत्रे वा अन्यथा नरकं व्रजेत् ।
आममन्नं महादेव्यै नैव दद्यात् कदाचन ॥ ४७ ॥
मन्त्रकालाविशुद्धानि नैवेद्यानि कदाचन
देवेभ्यो नोपयुञ्जीत[गुरोर्वाभे?पुरो वा स्व]हितेरतः ॥ ४८ ॥
सितासंमिश्रितां दत्त्वा सुरां मधुसमन्विताम् ।
देवीलोके चिरं स्थित्वा कैवल्यं मुक्तिमाप्नुयात् ॥ ४९ ॥
आमिक्षया समं दत्त्वा सलिलं नारिकेलजम् ।
क्षीरा[द्य?ज्य]मधुकर्पूरसितादधिसमन्वितम् ॥ ५० ॥
त्रिजातत्रिकटूनां च लवङ्गेन द्वयोरपि ।
तथान्येषां च वस्तूनां चूर्णैर्गन्धवतीं शिवे ॥ ५१ ॥
साधयित्वा प्रकारेण वासि(त?तां) गन्धरेणुभिः ।

यस्तैजसेन पात्रेण पेयं देव्यै निवेदयेत् ॥ ५२॥
भक्तिप्रवण[1]चित्तेन तस्य पुण्यफलं शृणु ।
कल्पकोटिसहस्राणि कल्पकोटिशतानि च ॥ ५३ ॥
स्थित्वा देवीपुरे श्रीमान् सार्वभौमो भवेत् क्षितौ ।
ततः परं तु कैवल्यमाप्नोति च यथेच्छया ॥ ५४॥
केवलं नारिकेलाम्बु दत्त्वा देव्यै महेश्वरि ।
[2]अग्निष्टोमफलं लब्ध्वा नरलोके महीयते ॥ ५५॥
ग्राम्यारण्यैः फलैर्देवीं सकलैः परिपूजयेत् ।
बलिप्रियं च नैवेद्यं कशेरुकविषादिकम् ॥ ५६ ॥
ऋते श्लेष्मातकं बिल्वं शौनकं च विशेषतः ।
फलान्ययत्नपक्वानि निसर्गमधुराणि च ॥ ५७॥
सुपक्वानि सुगन्धीनि मनोहराणि यानि च ।
एवमेतानि शस्तानि नान्यानि शुभदानि च ॥ ५८॥
सौवर्णे राजते वापि ताम्रे वा प्रस्तरेऽपि च ।
पद्मपत्रेऽथवा दद्यान्नैवेद्यं त्रिपुराप्रियम् ॥ ५९॥
निराच्छादं समालोक्य भक्तिश्रद्धासमन्वितः ।
वायुबीजेन संशोष्य संदहेद्वह्निना तथा ॥ ६० ॥
वारुणेन [स्व?सु]धावृ[त्या?ष्ट्या]प्लावयेद्धेनुमुद्रया ।
अस्त्रमन्त्रेण संरक्ष्य मूलेनैवाभिषिच्य तु ॥ ६१ ॥
मूलदेव्याः स्वनामान्ते नैवेद्यमिति चोच्चरेत् ।
गृहाण वह्निजायान्तो नैवेद्यमनुरीरितः ॥ ६२ ॥

---

१ 'पत्र' क. पाठः । २ 'वह्नि' क. पाठः ।

अन्नं चतुर्विधं देवि रसैः षड्भिः समन्वितम् ।
मया निवेदितं भक्त्या तदिदं प्रतिगृह्यताम् ॥ ६३ ॥
लेह्यचोष्यानुपानादिभक्ष्य[तोह्या?भोज्या]नि यानि च ।
मयाहृतानि यत्नेन [रू?कृ]पया देवि भुज्यताम् ॥ ६४ ॥
जातीलवङ्गकक्कोलवासितं स्वर्धुनीजलम् ।
मुखवासकरं पुण्यं गृहीत्वाचाम सुन्दरि ॥ ६५ ॥
मूलमन्त्रेण देवेशि हुनेत् पञ्चाहुतीः क्रमात् ।
प्राणापानौ तथा व्यानमुदानं च समानकम् ॥ ६६ ॥
एतत्स्वरूपं जानीयादाहुतीनां च पञ्चकम्
पञ्चाङ्गुलीभिरेव स्यात् क्रमात् पञ्चाहुतीः प्रिये ॥ ६७ ॥
पुनराचमनं दत्वा मुखवासं निवेदयेत् ।
ताम्बूलं गन्धसंयुक्तं कर्पूरादिसुवासितम् ॥ ६८ ॥
संस्कृत्य विविधैर्द्रव्यैर्गन्धवद्भिर्निवेदयेत् ।
स्तुवन् नानाविधैः स्तोत्रैर्भक्तिभावसमन्वितः ॥ ६९ ॥
प्रणमेत् परमेशानीं विधिना साधकोत्तमः ।
देवमानुषगन्धर्वा यक्षराक्षसपन्नगाः ॥ ७० ॥
नमस्कारेण तुष्यन्ति महात्मानः समन्ततः ।
नमस्कारेण लभते चतुर्वर्गं महोदयम् ॥ ७१ ॥
सर्वत्र सर्वसिद्ध्यर्थं नतिरेवं[2] प्रशस्यते ।
नत्वा विजयते लोकान् नत्वा धर्मः प्रवर्तते ॥ ७२ ॥
नमस्कारेण दीर्घायुरच्छिन्ना लभते प्रजाः ।

---

१ 'नि' क. पाठः । २ 'तिरेका प्रवर्तते' ख. पाठः ।

चतुर्वर्गं लभेद्भक्तो न चिराद्देव साधकः ॥ ७३ ॥
नमस्कारो महायज्ञः प्रीतिदः सर्वतः सदा ।
नमस्कुरु महादेवीं प्रदक्षिणां च भक्तितः ॥ ७४ ॥
मनसापि महादेव्या यो भक्त्या कुरुते नतिम् ।
सोऽपि लोकान् विनिर्जित्य देवीलोके महीयते ॥ ७५ ॥
कायिको वाग्भवश्चैव मानसस्त्रिविधः स्मृतः ।
नमस्काराश्च विज्ञेया उत्तमाधममध्यमाः ॥ ७६ ॥
कायिकैस्तु नमस्कारैर्देवास्तुष्यन्ति सर्वतः[1] ।
नमस्कारेषु सर्वेषु कायिकः प्रथमः स्मृतः ॥ ७७ ॥
जानुभ्यामवनीं गत्वा संस्पृश्य शिरसा क्षि[त?ति]म् ।
क्रियते यो नमस्कारः स एव कायिकः स्मृतः[2] ॥ ७८ ॥
पुटीकृत्य करौ शीर्षे नमस्कारः प्रदीयते ।
अस्पृष्ट्वा जानुशीर्षाभ्यां क्षितिं सोऽधम उच्यते ॥ ७९ ॥
जानुभ्यां क्षितिमस्पृष्ट्वा शिरसास्पृश्य मेदिनीम् ।
क्रियते यो नमस्कारो मध्यमः कायिकस्तु सः ॥ ८० ॥
पौराणिकैस्तान्त्रिकैर्वा मूलमन्त्रेण वा पुनः ।
प्रदक्षिणं प्रणामं च कुर्याद्धर्मार्थसाधनम् ॥ ८१ ॥
प्रसार्य दक्षिणं हस्तं स्वयं नम्रशिराः पुनः ।
दक्षिणं दर्शयन् पार्श्वं भक्तिश्रद्धासमन्वितः ॥ ८२ ॥
सकृत् प्रदक्षिणं कृत्वा वर्तुलाकृति साधकः ।
स च प्रदक्षिणो ज्ञेयः सर्वदेवौघ[3]तुष्टिदः ॥ ८३ ॥

---

१ 'सर्वदा' ख. पाठः । २ 'प्रोच्यते कायिकस्तु सः' ख. पाठः । ३ 'क' ख. पाठः ।

अष्टोत्तरशतं यस्तु देव्याः कुर्यात् प्रदक्षिणाम् ।
स सर्वकामांनासाद्य पश्चान्मोक्षमवाप्नुयात् ॥ ८४॥
त्रिकोणमथ षट्कोणमर्धचन्द्रं प्रदक्षिणम् ।
दण्डमष्टाङ्गमुग्रं च सप्तधा नतिलक्षणम् ॥ ८५॥
दक्षिणाद्वायवीं गत्वा दिशं तस्माच्च शांभवीम् ।
ततोऽपि दक्षिणां [द?ग]त्वा नमस्कारस्त्रिकोणवत् ॥ ८६॥
त्रिकोणाख्यो नमस्कारस्त्रिपुराप्रीतिदायकः ।
दक्षिणाद्वायवीं गत्वा वायव्याः शांभवीं तथा ॥ ८७॥
ततोऽपि दक्षिणां गत्वा तां त्यक्त्वाग्नौ प्रविश्य च ।
अग्नितो राक्षसीं गत्वा कौबेरीं च ततो विशेत् ॥ ८८॥
आग्नेयीं च ततो गत्वा नमस्कारः प्रकीर्तितः ।
षट्कोणाख्यो नमस्कारो दुर्गायाः प्रीतिदायकः ॥ ८९॥
दक्षिणाद्वायवीं गत्वा तस्माच्चावृत्य दक्षिणम् ।
गत्वा योऽसौ नमस्कारः सोऽर्धचन्द्रो मम प्रियः ॥ ९०॥
नमस्कारेषु जानीयादासां प्राक्तमद्विजे ।
त्यक्त्वा स्वमासनस्थानं पश्चाद्गत्वा नमस्कृतः ॥ ९१॥
निपत्य दण्डवद् भूमौ निपत्य हृदयेन च ।
तथैव दण्डवद् भूमौ दण्ड इत्युच्यते बुधैः ॥ ९२॥
चिबुकेन मुखेनाथ नासया हनुकेन च ।
चक्षुषा वाथ कर्णाभ्यां ब्रह्मरन्ध्रेण चैव हि ॥ ९३॥
तदष्टाङ्गमिति प्रोक्तं यद्भूमिं स्पृशते क्रमात् ।

१ 'ममा' ख. पाठः ।

ब्रह्मरन्ध्रेण संस्पर्शः क्षितेर्यस्या नमस्कृतेः ॥ ६४ ॥
स उग्र इति विज्ञेयो विष्णोस्तुष्टिप्रदायकः ।
तत्[1] स्वयं गद्यपद्याभ्यां [ग?घ]टिताभ्यां नमस्कृतिः ॥ ६५ ॥
क्रियते भक्तियुक्तेन वाचिकस्तूत्तमः स्मृतः ।
पौराणिकैर्वैदिकैर्वा तान्त्रिकैः क्रियते नतिः ॥ ६६ ॥
स मध्यमो नमस्कारो भवेद्वाचनिकैः[2] सदा ।
परेषां गद्यपद्याभ्यां नमस्कारो यदा भवेत् ॥ ६७ ॥
स वाचिकोऽधमो ज्ञेयो नमस्कारेषु सर्वतः ।
इष्ट[धामा?मध्या]निष्टगतैर्मनोभिस्त्रिविधं भवेत् ॥ ६८ ॥
नमनं मानसं प्रोक्तमुत्तमाधममध्यमम् ।
त्रिविधे च नमस्कारे कायिकश्चोत्तमः स्मृतः ॥ ६९ ॥

इति श्रीगन्धर्वतन्त्रे पार्वतीश्वरसंवादे उपचारफलविधिनिरूपणं
षोडशः पटलः ॥ १६ ॥

---

१ 'यास्व' ख पाठः । २ 'दाचारतः' ख. पाठः ।

## सप्तदशः पटलः ।

श्रीदेव्युवाच

प्रकटाद्याः कथं देव पूज्यन्ते परमेश्वर ।
तत् सर्वं कथयेशान मुद्राविरचनं तथा ॥ १॥

ईश्वर उवाच

तास्तु प्रपूजयेद्भक्त्या सृष्टिस्थितिलयक्रमैः ।
मोहनं क्षोभणं चक्रं दक्षावर्तक्रमाद्यजेत् ॥ २॥
वामावर्तक्रमेणैव शेषचक्राणि पूजयेत् ।
आरभ्य पश्चिमाद् देवि वायव्यन्तं समापयेत् ॥ ३॥
रश्मिवृन्दानि ते देवि पूजयामि विधानतः ।
आज्ञापय जगन्मातर्यत[स्त?स्त्व]मेव तानि[व?च] ॥ ४॥
कृताञ्जलिर्महेशानि देव्याज्ञां साधकोत्तमः ।
गृहीत्वा पूजयेत् तुष्टः प्रागुक्तक्रमयोगतः ॥ ५॥
पूजावरणशक्तीनां गन्धपुष्पाद्भिरक्षतैः ।
ज्ञानमुद्रान्वितैर्देवि तर्पणं तत्त्वमुद्रया ॥ ६ ॥
(१)महायोगीश्वरं देवं योगिनं करुणामयम् ।
वारुणं पूर्वमुद्धृत्य दक्षकर्णेन्दुभूषितम् ॥ ७॥
बुद्धाय नम इत्युक्त्वा पूजयेज्जगदीश्वरम् ।
पश्चिमादिचतुर्दिक्षु पूजयेद(नि?णि)मादिका ॥ ८॥
वायव्यादिषु कोणेषु वशित्वप्रमुखा[न्?खाः]यजेत् ।
प्राप्तिसिद्धिमधोभागे सर्वकामां[२] तथोद्र्ध्वके ॥ ९॥

---

१ 'ष्टो' क. पाठः । २ 'मा' क. पाठः ।

मायालक्ष्मीसमायोगं कृत्वा पूर्वं महेश्वरि ।
तथैव सिद्धिशब्दान्ते श्रीपादुकां ततो वदेत् ॥ १० ॥
पूजयामीति मनुना पूजयेदुक्तमार्गतः ।
तथा द्वितीयरेखायां ब्रह्माण्याद्याः प्रपूजयेत् ॥ ११ ॥
असिताङ्गं रुरुं चैव चण्डं क्रोधं तथैव च ।
उन्मत्तं च तथा देवि भैरवं च कपालिनम् ॥ १२ ॥
भीषणं चैव संहारं ताभिः सह प्रपूजयेत् ।
सर्वसंक्षोभिणीमुख्यास्तथा तृतीयरेखगाः ॥ १३ ॥
करशुद्धिकरीं पूर्वं[1] पूजयेच्चक्रनायिकाम् ।
दक्षिणे पूजयेद् देव्या मुद्रां संक्षोभकारिणीम् ॥ १४ ॥
अ[नि?णि]मां पूजयेद्वामे बुद्धं तस्याः पुरः पुनः ।
मध्यमे मध्यतः कृत्वा कनिष्ठेऽङ्गुष्ठ[बो?रो]धिते ॥ १५ ॥
तर्जन्यौ दण्डवत् कृत्वा मध्यमोपर्यनामिके ।
एषा तु प्रथमा मुद्रा सर्वसंक्षोभकारिणी ॥ १६ ॥
(खा?था)न्तं * वह्निसमारूढं द्वितीयस्वरभूषितम् ।
नादबिन्दुकलायुक्तं बीजं तस्याः प्रकीर्तितम् ॥ १७ ॥
आदाय दक्षहस्तेन विशेषार्घ्योदकं ततः ।
बीजद्वयं समाभाष्य तथैताः प्रकटास्ततः ॥ १८ ॥
योगिन्यश्च समुद्राश्च ससिद्धयश्च सायुधाः ।
तथा सपरिवाराश्च सर्वोपचारकैस्तथा ॥ १६ ॥
त्रैलोक्यमोहने चक्रे त्रिपुराधिष्ठिते तथा ।

---

१ 'रीपूर्वां' क. पाठः । * थान्तमित्यादिना द्राँ इति बीजोद्धारः कृतः ।

पूजितास्तर्पिताः सन्तु देव्या हस्ते निवेदयेत् ॥ २० ॥
एवमखिलचक्रस्थयोगिनीनां महौजसाम् ।
यथाव[दह?दुक्त]वाक्येन चक्रपूजां निवेदयेत् ॥ २१ ॥
(१) मायालक्ष्मीकलाभिस्ता नित्याः कलाः प्रपूजयेत् ।
ब्रह्मा कमण्डलुधरश्चतुर्वक्त्रश्चतुर्भुजः ॥ २२ ॥
राजहंससमासीनः प्रांशुस्तुङ्गांस[1] उन्नतः ।
सावित्री वामपार्श्वस्था दक्षिणे च सरस्वती ॥ २३ ॥
सर्व्वे देवाः स्थितास्त्वग्रे वेदाः सर्व्वेऽग्रतः स्थिताः ।
वर्णेन रक्तगौराङ्गो जपमा[न?ला]लसत्करः ॥ २४ ॥
वराभयप्रदो देवः सर्व्वलोकपितामहः ।
प्रणवं पूर्व्वमुद्धृत्य ब्रह्मणे नम आलिखेत् ॥ २५ ॥
अनेन मनुना देवि ब्रह्माणं परिपूजयेत् ।
बालया योजितां कृत्वा पूजयेच्चक्रनायिकाम् ॥ २६ ॥
दर्शयेद्(भा?द्रा)विणीं मुद्रां तत्तद्बीजपुरस्कृताम् ।
(खा?था)न्तं * वह्निसमारूढं तुर्य्यस्वरविभूषितम् ॥ २७ ॥
नादबिन्दुकलायुक्तं द्राविणीबीजमुत्तमम् ।
सर्व्वसंक्षोभमुद्राया मध्यमे स[त्र?र]ले यदा ॥ २८ ॥
क्रियेते परमेशानि सर्व्वविद्राविणी तदा ।
(३) शुद्धस्फटिकसंकाशं पञ्चवक्त्रं त्रिलोचनम् ॥ २९ ॥
व्याघ्रचर्म्मस्थिते पद्मे पद्मासनगतं सदा ।
संश्लिष्यन्तमुमां देवीं चामरोत्पलधारिणीम् ॥ ३० ॥

---

१ 'श' क. पाठः । * थान्तमित्यादिना द्रीं इति द्राविणीमुद्राया बीजोद्धारः ।

द्विभुजां स्वर्णगौराङ्गीं सौम्यातिसौम्यरूपिणीम् ।
लीलारबिन्दं[रा?वा]मे[ण?न]पाणिना बिभ्रतीं सदा ॥ ३१ ॥
शुक्लं तु चामरं [द?धृ]त्वा शिवस्याङ्केऽथ दक्षिणे ।
विन्यस्य दक्षिणं हस्तं तिष्ठन्तीं[1] परिचिन्तयेत् ॥ ३२ ॥
त्रैलोक्यजननीं देवीं त्रैलोक्यजनकं शिवम् ।
उमामहेश्वरं ध्यात्वा मोहयेज्जगतीमिमाम् ॥ ३३ ॥
कामं शक्रं तथाकाशं[2] तुरीयमनुभूषितम् ।
नादबिन्दुकलायुक्तं द्वयं बीजं तयोः क्रमात् ॥ ३४ ॥
उमा ङेन्ता तथा ङेन्तो महेश्वरो हृद[म्वि?न्वि]तः ।
मन्त्रराजः समाख्यातश्चतुर्वर्गफलप्रदः ॥ ३५ ॥
अनेन तौ समभ्यर्च्य सर्वसंक्षोभके ततः ।
अनङ्गकुसुमां पूर्वे कवर्गेणैव पूजयेत् ॥ ३६ ॥
चवर्गेण च देवेशि दक्षिणेऽनङ्गमेखलाम् ।
अनङ्गमदनां देवि टवर्गेण च पश्चिमे ॥ ३७ ॥
तवर्गेणोत्तरे भागे पूजयेन्मदनातुराम् ।
तथैवानङ्गरे[खासु?खां तु] पवर्गेण हुताशने ॥ ३८ ॥
यवर्गेण च देवेशि नैर्ऋतेऽनङ्गवेगिनी(म्) ।
शवर्गेण च वायव्येऽनङ्गाङ्कुशां च पूजयेत् ॥ ३९ ॥
ळक्षाभ्यां परमेशानि ईशे चानङ्गमालिनीम् ।
प्रोक्तस्थाने समावाह्य पूजयेच्चक्रनायिकाम् ॥ ४० ॥
कामबीजं पुरस्कृत्य मुद्रां संदर्शयेत् ततः ।

---

१ 'न्ती' क. पाठः । २ 'शतु' क. पाठः । ३ 'न्तोत' क. पाठः ।

मध्यमानामिकाभ्यां तु कनिष्ठानामिके समे ॥ ४१ ॥
अङ्कुशाकाररूपाभ्यां मध्यमे परमेश्वरि ।
इयमाकर्षिणी मुद्रा त्रैलोक्याकर्षकारिणी ॥ ४२ ॥
[४] सर्वसौभाग्यदे चक्रे भास्करं परिचिन्तयेत् ।
पद्मरागप्रतीकाशं किरीटाङ्गदभूषणम् ॥ ४३ ॥
पद्मासनसमासीनं स्वशक्त्यालिङ्गितं विभुम् ।
दधानं बाहुभिर्देवं रक्तपद्मे[१] वराभयौ ॥ ४४ ॥
प्रागुक्तेन तु मन्त्रेण भास्करं परिपूजयेत् ।
संप्रदायाः प्रपूज्यैव पूजयेच्चक्रनायिकाम् ॥ ४५ ॥
वारुणं[२] * चेन्द्रबीजस्थं [दत्त?वाम]कर्णविभूषितम् ।
नादबिन्दुकलायुक्तं बीजं वश्यकरं महत् ॥ ४६ ॥
पुटाकारौ करौ कृत्वा तर्जन्यङ्कुशरूपिणी ।
परिवर्तक्रमेणैव मध्यमे तदधोगते ॥ ४७ ॥
क्रमेण देवि तेनैव कनिष्ठानामिके अपि ।
संयोज्य निविडाः कार्याः सर्वा अङ्गुष्ठदेशतः ॥ ४८ ॥
मुद्रैषा परमेशानि सर्ववश्यकरी मता ।
(५) सर्वार्थसाधके चक्रे बाह्ये दशारके ततः ॥ ४९ ॥
मणिमयम(हद्?हा)रत्नपङ्कजेऽतिमनोहरे ।
पीठे तस्मिन्निविष्टस्य प्रद्योतनशतद्युतेः ॥ ५० ॥
तप्तकाञ्चनवर्णा[भावनतो?भवैनते]यस्य पार्वति ।
आसीनमुन्नतांसे च विष्णुं विद्रुमसंनिभम् ॥ ५१ ॥

---

१ 'म्रत्व' क. पाठः । २ 'वार' ख. पाठः । * वश्यमुद्राया बीजमुद्धरति वारुणमिति ग्रूँ इति ।

स्ववामोरुगतां पद्मां श्लिष्यन्तमरुणेक्षणाम् ।
पीतवस्त्रपरीधानं (च?स)स्मितं चारुभूषणम् ॥ ५२ ॥
शङ्खचक्रगदापद्मं दधानं बाहुभिः सदा ।
चिन्तयित्वा महेशानि पूजयेज्जगदीश्वरम्[1] ॥ ५३ ॥
मन्त्रम(स्याः?स्य)प्रवक्ष्यामि चतुर्वर्गप्रदायकम् ।
कामबीजं समुद्धृत्य हृषीकेशमतः परम् ॥ ५४ ॥
ङेन्तं च नतिसंयुक्तमनेन तं प्रपूजयेत् ।
कुलकौलाः प्रपूज्यैव पूजयेच्चक्रनायिकाम् ॥ ५५ ॥
सर्वोन्मादकरीं मुद्रां दर्शयेद्बीजपूर्विकाम् ।
ससर्गो* भृगुरेतस्या बीजमेतदुदाहृतम् ॥ ५६ ॥
संमुखौ तु करौ कृत्वा मध्यमामध्यगेऽन्त्यजे[2] ।
अनामिके तु सरले तद्बहिस्तर्जनीद्वयम् ॥ ५७ ॥
दण्डाकारौ ततोऽङ्गुष्ठौ मध्यमानखदेशगौ ।
मुद्रैषोन्मादिनी नाम्ना क्लेदिनी सर्वयोषिताम् ॥ ५८ ॥
[६]सर्वरक्षाकरे चक्रे तथान्तर्दशकोणके ।
त्रैलोक्यमोहनं विष्णुं ध्यायेद्बन्धूकसंनिभम् ॥ ५९ ॥
ज(वा?पा)कुसुमसंकाशं दाडिमीकुसुमप्रभम् ।
उद्यदादित्यसंकाशं रत्नसिंहासनेऽम्बुजे ॥ ६० ॥
पद्मासनसमासीनं भुजैश्चतुर्भिरायतैः ।
पाशाङ्कुशौ च दधतं पुष्पबाणेक्षुकार्मुकम् ॥ ६१ ॥

१ 'रीम्' क. पाठः । २ 'मे मध्यमे' यजेत्' क. पाठः ।

* भृगुः स ससर्गो विसर्गसहितः । इति सर्वोन्मादिनीबीजोद्धारः ।

अरुणायतलोलाक्षियुगलं मदघूर्णितम् ।
सर्वशृङ्गारवेशाढ्यं किरीटाङ्गदभूषितम् ॥ ६२ ॥
रक्तमालाम्बरधरं रक्तगन्धानुलेपिनम् ।
स्ववामोरुगतां शक्तिं श्लिष्यन्तीं दक्षपाणिना ॥ ६३ ॥
वामेन पाणिना पद्मं धारयन्तीं शुचिस्मिताम् ।
रुचिराङ्गदभूषाढ्यां शुद्धक्षौमविराजिताम् ॥ ६४ ॥
मदनोत्तप्तहृदयां क्लिद्यद्योनिं परेश्वरीम् ।
कलाकलितम(ा)धु(रां?र्यां)तरुणीं यौवनान्विताम् ॥ ६५ ॥
सकार्मुकभुजेनैव श्लिष्यन्तं सुदृढं तथा ।
त[र्ज?ज्ज]नितपरानन्दनन्दितं परमेश्वरम् ॥ ६६ ॥
नागगन्धर्वदेवानामङ्ग[ला?ना]भिः समावृतम् ।
मदनोल्ललिताङ्गाभिर्भूषिताभिर्विभूषणैः ॥ ६७ ॥
आत्म[ा]भेदेन यो ध्यायेद् देवदेवं जगद्गुरुम् ।
त्रैलोक्यमोहनं विष्णुं त्रैलोक्यमोहनो भवेत् ॥ ६८ ॥
बीजमस्य प्रवक्ष्यामि लक्ष्मीनारायणात्मकम् ।
*ब्रह्मा पुरन्दरः पश्चान्मायास्वरमतः परम् ॥ ६९ ॥
नादबिन्दुकलायुक्तं बीजं त्रैलोक्यपूजितम् ।

श्रुतिषु मथितसारं देवताकंराट[हारकं?कारिं]
त्रिभुवनव[शंकरी?शकारं]श्रीधनाद्यर्थका[रकं?रम्]
शमनभयविनाशं सर्वशङ्काप्रणाशं
भवजलधिविशोषं मानसा[न्ध?न्ध्य]प्रकाशम् §

---

* ब्रह्मा क पुरन्दरो ल मायास्वरं ई नादाद्युपेतं तेन क्लीं इति । § इदं पद्यं प्रक्षिप्तमिति प्रतिभाति।

अनेन तं समभ्यर्च्य निग(र्व?र्भ)योगि(नीं?नीः)यजेत् ॥७०॥
नायिकां तत्र संपूज्य मुद्रां संदर्शयेत् तथा ।
त[1][स्माद्?स्यास्त्व]नामिकायुग्ममधः कृत्वाङ्कुशाकृति ।७१।
तर्जन्यावपि तेनैव क्रमेन विनियोजयेत् ।
इयं महाङ्कुशा मुद्रा सर्वकार्यार्थसाधिका ॥ ७२ ॥
*कामदेवोऽग्निमारूढो बिन्दुनादकलान्वितः ।
त्रयोदशस्वरोपेतो मुद्राबीजमितीरितम् ॥ ७३ ॥
[७]अष्टकोणे महेशानि रहस्ययोगिनीर्यजेत् ।
वशिनीप्रमुखाः सर्वाः पूर्ववद्बीजसंयुताः ॥ ७४ ॥
पादुकां पूजयामीति न्यासादेव विशेषतः ।
चक्रेश्वरीं[2] यजेच्छक्तिं (भ?भु)क्तिसिद्धिं च वामतः ॥ ७५ ॥
त(दङ्क्?द्वत्)खेचरीमुद्रां तां च संदर्शयेत् ततः ।
सव्यं दक्षिणदेशे तु दक्षिणं वामदेशतः ॥ ७६ ॥
बाहुं कृत्वा महेशानि हस्तौ संपरिवर्त्य च ।
कनिष्ठानामिके देवि यु(क्ता?क्त्वा)तेन क्रमेण तु ॥ ७७ ॥
तर्जनीभ्यां समाक्रान्ते सर्वोर्ध्वमपि मध्यमे ।
अङ्गुष्ठौ च महेशानि कारयेत् सरलाविह ॥ ७८ ॥
इयं सा खेचरी मुद्रा नाम्ना सर्वोत्तमा प्रिये ।
रचितेयं महामुद्रा सर्वतेजोपहारिणी ॥ ७९ ॥
†शिवं चन्द्रं तथा कान्तं पान्तं वह्निसमन्वितम् ।

---

१ 'अस्या' क. पाठः । २ 'ज्ञानात्मिकां' क. पाठः । * रेफारूढः कामदेवः क । ...योदशः स्वरः तेन क्रीं इति । † शिवं ह चन्द्रं स कान्तं ख पान्तं फ वह्निः रेफः एकादशः स्वरः ए ...र्धांत् नादकलादियुतः तेन हसखफ्रें इति खेचरीविद्या ।

एकादशस्वरोपेतं बीजं तस्याः प्रकीर्तितम्[1] ॥ ८० ॥
(८)मध्यत्रिकोणचक्रे च अग्रदक्षोत्तरे शिवे ।
ता एव पूजयेद्देवि विन्यासोक्तविधानतः ॥ ८१ ॥
पादुकां पूजयामीति विशेषोऽत्र प्रकाशितः ।
त्रिपुरा[पां?म्बां]तु चक्रेशीमिच्छासिद्धिं च वामतः ॥ ८२ ॥
परिवर्त्य करौ स्पष्टावर्धचन्द्राकृती प्रिये ।
तर्जन्यङ्गुष्ठयुगलं युगपत् कारयेत् ततः ॥ ८३ ॥
अधः कनिष्ठावष्टब्धे मध्यमे विनियोजयेत् ।
तथैव कुटिले योज्ये सर्वाधस्तादनामिके ॥ ८४ ॥
बीजमुद्रेयमाख्याता परा त्रैलोक्यमातृका ।
सदाशिवस्य बीजाढ्या† दर्शयित्वा विधानतः ॥ ८५ ॥
[९]सर्वानन्दमये चक्रे ब्रह्मविष्ण्वीशरूपिणीम् ।
पूजयित्वा विधानेन चक्रेशीमपि भैरवीम् ॥ ८६ ॥
ज्ञानेच्छादिक्रियारूपां मोक्षसिद्धिं च वामतः ।
सिंहं च पुरतो देव्या जगदाधारमर्चितम् ॥ ८७ ॥
पूजयेत् सततं भक्त्या पश्यन्तमम्बिकामुखम् ।
वाग्बीजं पूर्वमुद्धृत्य योनिमुद्रां प्रदर्शयेत् ॥ ८८ ॥
अनामिकायुगं देवि परिवर्तनयोगतः ।
अङ्कुशाकाररूपाभ्यां तर्जनीभ्यां तु धारयेत् ॥ ८९ ॥
मध्यमे कुरु तन्मध्ये कनिष्ठिके तथाविधे ।
दण्डाकारौ ततोऽङ्गुष्ठौ कनिष्ठोपरिसंस्थितौ ॥ ९० ॥

१ 'तः' क. पाठः । † ह्सौंः इति सदाशिवबीजम् ।

योनिमुद्रेयमाख्याता परा त्रैलोक्यमातृका ।
अत्रपदं समाभाष्य सर्वानन्दमयात् ततः ॥ ६१ ॥
चक्रराजपदस्यान्ते ब्रह्मस्वरूपमालिखेत् ।
संवि(देत्य?न्मय)पदं ब्रूयाद्बिन्दुचक्रे ततः परम् ॥ ६२ ॥
एषा परापरशब्दाद्रहस्ययोगिनी ततः ।
ब्रह्मस्वरूपिणी पश्चान्महात्रिपुरसुन्दरी ॥ ६३ ॥
समुद्रा सायुधा चैव सवाहना तथैव च ।
तथा सपरिवारान्ते सर्वोपचारकैस्तथा ॥ ६४ ॥
पूजितास्तु तथा देवी तर्पितास्त्वि[1]ति पूर्ववत् ।
पुष्पाञ्जलिभिरभ्यर्च्य तर्पयेद्विधिना ततः ॥ ६५ ॥

इति श्रीगन्धर्वतन्त्रे पार्वतीश्वरसंवादे प्रकटाप्रकटादिदेवीपूजनक्रम-
निरूपणं सप्तदशः पटलः ॥ १७ ॥



---

१ 'त्वमीति 'ख. पाठः ।

# अष्टादशः पटलः ।

--=-:****:-=--

ईश्वर उवाच

प्रसादसुमुखीं देवीं भावयन् प्रजपेन्मनुम् ।
सर्वयज्ञेषु सर्वत्र जपयज्ञः प्रशस्यते ॥ १ ॥
जपात्तुष्यन्ति देवाश्च जपात् सिध्यन्ति साधकाः ।
तस्मात् सर्वप्रयत्नेन जपनिष्ठापरो भवेत् ॥ २ ॥
जपः स्यादक्षरावृत्तिरद्रुतं न विलम्बितम् ।
पूजा ध्यानं जपो होम इति धर्मचतुष्टयम् ॥ ३ ॥
प्रत्यहं साधकः कुर्यात् स्वयं चेत् सिद्धिमिच्छति ।
जपस्यान्ते शिवं ध्यायेद् ध्यानस्यान्ते पुनर्जपेत् ॥ ४ ॥
जपध्यानसमायुक्तः शीघ्रं सिध्यति मन्त्रवित् ।
जपरूपा शिवा शक्तिर्ध्यानरूपः सदाशिवः ॥ ५ ॥
तयोर्योगाद्भवेत् सिद्धिर्नान्यथा खलु पार्वति ।
संयुक्तं संयुतं कृत्वा यदयुक्तं न योजयेत् ॥ ६ ॥
यथा सिद्धिस्तथा माला मालाङ्गं जपकर्मणि ।
मालया जपतो नित्यं सिद्धिरेव न संशयः ॥ ७ ॥
आशुसिद्धिकरी[2] माला वर्णमयी समीरिता ।
अनुलोमविलोमाख्यैर्मातृकायाः सबिन्दुकैः ॥ ८ ॥
(सु?स)मेरुकैः सदा कार्या माला सर्वसमृद्धि[जाः?दा]
अष्टाधि(के?का)ष्टवर्गैस्तु पुनरेव समापयेत् ॥ ९ ॥

---

१ 'कः' क. पाठः । २ 'द्धिं' क. पाठः ।

वर्णेनान्तरितमन्त्रं कृत्वा ज(प्येत?पेत्तु)साधकः ।
मालाभावे ततः स्वासु अङ्गुलीषु जपेद्बुधः ॥ १० ॥
नित्यं जपं करे कुर्यान्नतु काम्यं कदाचन ।
आरभ्यानामिकामध्यात् प्रादक्षि(णो?ण्ये)न वै क्रमात् ॥११॥
तर्जनीमूलपर्यन्तं जपेन्नवसु पर्वसु ।
तर्जन्यग्रे तथा मध्ये यो जपेत् (तन्त्र?मति)मान्नरः ॥ १२ ॥
चत्वारि तस्य नश्यन्ति आयुर्विद्या यशो बलम् ।
अनामामध्यपर्वं तु मेरुं[1] कृत्वा न लङ्घयेत् ॥ १३ ॥
मेरुं प्रदक्षिणं कुर्वन्ननामामूलपर्वतः ।
अङ्गुलीपर्वभिर्मन्त्रं जपन् रेखां न संस्पृशेत् ॥ १४ ॥
अङ्गुलीर्नापयुञ्जीत किंचिदाकुञ्चिता(ः) तले ।
अङ्गुलीनां वियोगे तु छिद्रेण (श्र?स्र)वते जपः ॥ १५ ॥
स्फटिकादिभिरप्यत्र माला जपसमृद्धिदा ।
निधाय पुरतो मालां सव्यहस्तगतां च वा ॥ १६ ॥
जपादौ पूजयेन्मालां तोयैरभ्युक्ष्य यत्नतः ।
इष्टमन्त्रेण मालायाः प्रोक्षणं परिकीर्तितम् ॥ १७ ॥
ऐं मां माले महामाले सर्वशक्तिस्वरूपिणि ।
चतुर्वर्गस्त्वयि न्यस्तस्तस्मान्मे सिद्धिदा भव ॥ १८ ॥
चन्द्रचन्दनकस्तूरी–रोचनागुरुकुङ्कुमैः ।
पूजयित्वा ततो मालां गृह्णीयाद् दक्षपाणिना ॥ १९ ॥
बीजं गणपतेः पूर्वमुच्चार्य तदनन्तरम् ।

---

१ 'रुः' ख. पाठः ।

अविघ्नं कुरु माले त्वं गृह्णीयादित्यनेन तु ॥ २० ॥
यथा हस्तान्न च्यवते जपतः (अ?स्त्र)कू तथाचरेत् ।
हस्ताच्च्युतायां[1] विघ्नं स्याच्छिन्नायां मरणं भवेत् ॥ २१ ॥
यत्नात् संगोपयेदेनां भ्रमयेन्न वि(धा?धू)नयेत् ।
गुरुं प्रकाशयेन्नैव यन्त्रं मन्त्रं कदाचन ॥ २२ ॥
अक्षमालां च मुद्रां च गुरवेऽपि न दर्शयेत् ।
भूतराक्षसवेतालाः सिद्धगन्धर्वचारणाः ॥ २३ ॥
हरन्ति प्रकटं यस्मात् तस्माद्गुप्तं जपेत् सदा ।
मालां स्वहृदयासन्नां दक्षिणस्य करस्य च ॥ २४ ॥
मध्यमाया मध्यभागे वर्जयित्वा तु तर्जनीम् ।
अनामिकाकनिष्ठाभ्यां युताया नम्रभागतः ॥ २५ ॥
स्थापयित्वा तत्र मालामङ्गुष्ठाग्रेण तद्गतम् ।
प्रत्येकं बीजमादाय कुर्याद्वामेन न स्पृशेत् ॥ २६ ॥
प्रतिवारं पठेन्मन्त्रं शनैरोष्ठं न चालयेत् ।
तर्जन्या न स्पृशेन्मालां मुक्तितो गणनाक्रमः ॥ २७ ॥
अङ्गुष्ठपर्वमध्यस्थापरिवर्त्तं समाचरेत् ।
अङ्गुष्ठेन विना कर्म कृतं भवति निष्फलम् ॥ २७ ॥
अङ्गुष्ठं मोक्षदं देवि तर्जनी शत्रुनाशिनी ।
मध्यमा धनसिद्धौ स्याच्छान्तिकर्मण्यनामिका ॥ २९ ॥
कनिष्ठाकर्षणे ज्ञेया जपकर्मणि सिद्धिदा ।
मालाबीजं तु जप्तव्यं स्पृशेन्नहि परस्परम् ॥ ३० ॥

1 'स्तच्यु' ख. पाठः ।

पूर्वबीजं जपन् यस्तु परबीजं तु संस्पृशेत् ।
अङ्गुष्ठेन भवेत्त(स्य?त्र)निष्फलस्तस्य तज्जपः ॥ ३१ ॥
किटिशब्दान्विता माला च्छिन्नभिन्नापिवा भवेत् ।
वामोरौ दक्षपादं च विन्यस्य परमेश्वरि ॥ ३२ ॥
बद्धवीरासनो मन्त्री दिशश्चानवलोकयन् ।
गुरुदैवतमन्त्राणा[मेकं?मैक्यं]संभावयन् धिया ॥ ३३ ॥
अथवा चिन्तयेन्मूर्ध्नि गुरुं वर्णादिभेदतः ।
मन्त्रं च कण्ठतो ध्यात्वा चिन्तयन् हृदि देवताम् ॥ ३४ ॥
निगदेनोपांशुना वा[1] मानसेनाथवा प्रिये ।
जपारम्भं सुधीः कुर्याद् देवताभावतत्परः ॥ ३५ ॥
निःशङ्कः परमेशानि स्पष्टवाचा निगद्यते ।
अव्यक्तः प्रस्फुरद्वक्त्र उपांशुः परिकीर्तितः ॥ ३६ ॥
धिया यदक्षरश्रेणीं वर्णस्वरपदात्मिकाम् ।
उच्चरेदनुसंस्मृत्य स(भ?प्रो)क्तो मानसो जपः ॥ ३७ ॥
सौषुम्नाध्वन्युच्चरितं ध्वनिमात्रं विभावयेत् ।
मन्त्राक्षराणि चिच्छक्तौ प्रोतानि च विभावयन् ॥ ३८ ॥
तामेव परमे व्योम्नि परमामृतबृंहितः ।
दर्शयत्यात्मसद्भावं पूजाहोमादिभिर्विना ॥ ३९ ॥
मनः संहृत्य विषयान्म[द्र?न्त्रा]र्थगतमानसः ।
न द्रुतं न विलम्बं च जपेन्मौक्तिकपङ्क्तिवत् ॥ ४० ॥
निगदेन तु यज्जप्तं लक्षमात्रं वरानने ।

---

१ 'वापि' क. पाठः ।

उपांशूच्चारणैकेन तुल्यं भवति शैलजे ॥ ४१ ॥
उपांशुलक्षमात्रं तु यज्जप्तं कमलेक्षणे ।
मानसोच्चारणात्तुल्यमेकेन वरवर्णिनि ॥ ४२ ॥
विशेषात् त्रिपुरातन्त्रे प्रशस्तो मानसो जपः ।
मनसा च स्मरेत् स्तोत्रं वचसा वा जपेन्मनुम् ॥ ४३ ॥
उभयं निष्फलं तस्य भिन्नभाण्डोदकं यथा ।
उत्तमो दशसाहस्रः सहस्रो मध्यमः स्मृतः ॥ ४४ ॥
अधमस्तु विजानीयादष्टोत्तरशतं शिवे ।
इतो न्यूनं महेशानि न शस्तं जपकर्मणि ॥ ४५ ॥
यथाशक्ति जपं कुर्यात् संख्ययैव प्रयत्नतः ।
असंख्यातं च(स?य)ज्जप्तं तत्सर्वं निष्फलं भवेत् ॥ ४६ ॥
गृह्णन्ति राक्षसा (ये?ते)न गणयेत् सर्वथा बुधः ।
नैकवासा जपेन्मन्त्रं बहुवस्त्राकुलोऽपि वा ॥ ४७ ॥
अप्रावृतकरो वापि शिरसा प्रावृतोऽपिवा ।
चिन्ताव्याकुलचित्तो वा क्रुद्धो वापि त्वरान्वितः ॥४८॥
निर्बोधोऽप्रीतचित्तो न न रुग्णो न क्षुधान्वितः ।
तथा चान्यमना भूत्वा प्रलपन्न जपेन्मनुम् ॥ ४९ ॥
अनासीनः शयानो वा गच्छन् भुञ्जान एव च ।
यथाविधि जपं कृत्वा मन्त्रेणार्घ्योदकेन च ॥ ५० ॥
जपं तं च महादेव्या वामहस्ते समर्पयेत् ।
तेजोरूपं जपफलं शिवया स्वीकृतं स्मरेत् ॥ ५१ ॥
श्रीबीजेनैव पाणिभ्यामवता(रार्ण?र्य स्व)शीर्षतः ।

सारस्वतेन बीजेन हस्ताभ्यां स्थापयेत् ततः ॥ ५२ ॥
जपकर्मणि मालायाः प्रतिपत्तिरियं प्रिये ।
एवं यः कुरुते मालां जाप्यं च साधकः प्रिये ॥ ५३ ॥
स प्राप्नोतीप्सितं देवि हीनस्यायुर्विपर्ययः ।
निःसेतुं च यथा तोयं क्षणान्निम्नं प्रसर्पति ॥ ५४ ॥
मन्त्रस्तथैव निःसेतुः क्षणात् क्षरति (नं?म)न्त्रिणाम् ।
तस्मात् सर्वेषु मन्त्रेषु सर्वे वर्णा द्विजादयः ॥ ५५ ॥
पार्श्वयोः सेतुमाद(ध्यात्?ध्युः)जपकर्मणि साधकाः ।
अकारं चाप्युकारं च मकारं च प्रजापतिः ॥ ५६ ॥
वेदत्रयात् समुद्धृत्य प्रणवं निर्ममे पुरा ।
जपादौ जपकर्मान्ते प्रणवं सेतुरूपकम् ॥ ५७ ॥
नियोजयेन्महेशानि सर्वकार्यार्थसिद्धये ।
जपान्ते जुहुयादग्निं दशांशं जपमानतः ॥ ५८ ॥
तत्तु देव्याः पुरोभागे साधकः परमेश्वरीम ।
होमयेत् संस्कृते वह्नौ तत्र देवीं धिया स्मरन् ॥ ५९ ॥
इदं तस्यै समाभाष्य मूलमन्त्रेण सुन्दरि ।
स्वाहान्तेन च होतव्यं पायसैर्मधुराप्लुतैः ६०
व्यस्ताव्यस्तं ततो हुत्वा संभवे चान्यदेवताः
षडाहुतीः षडङ्गेन नित्यहोमोऽयमीरितः ॥ ६१ ॥
एकतः सर्वकर्माणि चैकतो जपहो(नधे?मकम्) ।
सर्वाधिकं होमकर्म होमात् किंवा न साध्यते ॥ ६२ ॥

---

१ 'कः' क. पाठः ।

अनया दीक्षितो मन्त्रो यदि होमविवर्जितः ।
त्रिविधं दुःखमाप्नोति नित्यहोमपरो भवेत् ॥ ६३ ॥
अकुर्वतामग्निहोत्रमग्निर्भूत्वा महेश्वरी[1] ।
धनानि शीघ्रं ग्रसति गृहक्षेत्रपशूनपि ॥ ६४ ॥
बहुदुःखेनार्जितानि संचितान्यचिरेण तु ।
आत्मप्राणाधिकान्याशु भू(ताग्नि?त्वाग्निः)ग्रसतीश्वरी । ६५ ।
अग्निहोत्रं सदा कुर्यात् [त?य]स्मादग्निमयीश्वरी ।
अग्निहोत्रविधानेन संपदां भाजनं भवेत् ॥ ६६ ॥
अग्निहोत्रपरस्येह वह्निर्भवति शीतलः ।
गृहक्षेत्रादिवित्तेषु वर्धते जाठरः परः ॥ ६७ ॥
अग्निरेव मुखं देव्यास्तस्मादग्नौ हुनेत् सदा ।
पक्षतो मासतो वापि वर्षतो वा यथाविधि ॥ ६८ ॥
होमाशक्तौ जपेद्विद्यां होमाद्विगुणसंख्यया ।
स्तुवन्नानाविधैः स्तोत्रैः प्रणमेत् सप्रदक्षिणम् ॥ ६९ ॥
एवं नानाविधैर्देवीं संतोष्य साधकोत्तमः ।
भक्तिप्रवण[2]चित्तेन निवेद्यानि निवेदयेत् ॥ ७० ॥
अनुलेपं च सिन्दूरं नेत्राञ्जनमनुत्तमम् ।
धूपामोदं प्रदीपांश्च दर्पणं व्यजनं तथा ॥ ७१ ॥
छत्रं च चामरं चैव घण्टानादमनुत्तमम् ।
वाद्यं गीतं तथा नृत्यं क्रीडाकौतुकमङ्गले ॥ ७२ ॥
निर्मञ्छनं च सिद्ध्यर्थै[3]र्दीपावलिभिरेव च ।

---

१ 'रीम्' क. पाठः । २ 'प्रणव' क. पाठः । ३ 'द्धार्थै' क. पाठः ।

दूर्वार्पणं शिरोदेशे साक्षतं च शनैः शनैः ॥ ७३ ॥
भक्तिप्रवणचित्तं च दास्यमात्मनिवेदनम्[1] ।
एवं निवेदयेद् देव्यै निवेद्यानि तथा बुधः ॥ ७४ ॥
स धन्यः सर्वलोकानां नान्यः पूज्यश्च भूतले ।
देवतानामृषीणां च दैत्यानामथ रक्षसाम् ॥ ७५ ॥
गन्धर्वाणामशेषाणां नागादीनां महात्मनाम् ।
अस्माकं चापि सर्वेषां माननीयः सुरासुरैः ॥ ७६ ॥
सार्वभौमपदं लब्ध्वा कैवल्यं लभते ततः ।
अनुलिप्य महादेवीं वासयेज्जगतीमिमाम् ॥ ७७ ॥
सिन्दूरैस्तिलकं देव्यै वश्याः सर्वाश्च योषितः ।
दिव्यज्ञानं भवेत्तस्य(देहा?दत्त्वा)ञ्जनमनुत्तमम् ॥ ७८ ॥
माल्यादीनां प्रदानेन महालक्ष्मीः स्थिरा गृहे ।
ताम्बूलस्य प्रदानेन पानीयस्यापि शोभने ॥ ७९ ॥
सदानन्दमयो भूयात्स[म?दा] दुःखविवर्जितः[2] ।
धूपैः प्रधूपिता देवी दीपैश्चापि निराजिता ॥ ८० ॥
ददाति वित्तं पुत्रांश्च धरां भूतिमरोगिताम् ।
धान्यं चाप्यखिलान्[3] कामान्मतिं धर्मे तथा शुभाम् ॥ ८१ ॥
दर्पणं दर्शयित्वैव सारूप्यं लभते विभोः ।
व्यजनैश्चामरैर्वापि व्यजयित्वा महेश्वरीम् ॥ ८२ ॥
तं व्यजयेन्महालक्ष्मीश्चामरद्वयधारिणी ।
निमेषार्धं महादेव्याश्छत्रं चोपरि धारयेत् ॥ ८३ ॥

---

१ 'त्तेन' ख. पाठः । २ 'स्यास्या' क. पाठः । ३ 'धन्यश्चा' ख. पाठः ।

तस्योपरि महच्छत्रं परिपूर्णेन्दुसोदरम् ।
लोकपालैः सहागत्य धारयेत् त्रिदशेश्वरः[१] ॥ ८४ ॥
घण्टाशङ्खनिदानेन तोषयेद्यो महेश्वरीम् ।
भेरीदुन्दुभिवाद्यैश्च मरुत्वांस्तमनुव्रजेत् ॥ ८५ ॥
(अपा?यो ऽपि)नो वादयेद् घण्टां शङ्खं वा स्वयमेव हि ।
स निर्लज्जः कथं ब्रूते पूजयामि महेश्वरीम् ॥ ८६ ॥
ब्रह्मा विष्णुर्हरश्चान्ये सर्वे शङ्खादिवादिनः ।
शङ्खघण्टादिकां[२]स्तस्माद् वादयेद्देवसंनिधौ ॥ ८७ ॥
वाद्यं यः कारयेद्देव्यै गीतं नृत्यं तथैव च ।
तुम्बरुर्नारदश्चैव हाहा हूहूस्तथैव च ॥ ८८ ॥
प्रसादयन्ति तं नित्यं विद्याध(रा?र्यो)ऽप्सरादयः ।
सुवासिन्यो मदप्रौढा वेशयित्वा यथाविधि ॥ ८९ ॥
वेश्यास्त्वलंकृताः सर्वाः क्रीडयेयुरलं यदि ।
देवीमुद्दिश्य पुरतस्तस्य पुण्यफलं शृणु ॥ ९० ॥
उर्वशीप्रमुखा[३]स्तं च क्रीडयेयुरलं मुदा ।
कौतुकं कारयेद्देव्यै हास्यानन्दाय यद्भवेत् ॥ ९१ ॥
तेन प्रमुदितो नित्यं देवीलोके महीयते ।
मङ्गलानि महादेव्यै कारयित्वा यथाविधि ॥ ९२ ॥
विमानवरमारुह्य ब्रह्मविष्णुपुरःसरम् ।
सर्वकामसुखं दिव्यं सर्वरत्नसमन्वितम्[४] ॥ ९३ ॥
अनुव्र[जं?जि]तमिन्द्राद्यैः सपत्नीकैः सवाहनैः ।

---

१ 'सर्वजित् त्रिदशाधिपतिः' क. पाठः । २ 'ण्टामयस्त' क. पाठः ।
३ 'खा वेश्यारतं' क. पाठः । ४ 'ता' क. पाठः ।

देवीलोके समायान्तं समागत्य सुराङ्गनाः ॥ ९४ ॥
अरुन्धत्यथ सावित्री तमहल्या शची तथा ।
अनुसूयादितिश्चैव मातरश्च[1] सहानुगाः ॥ ९५ ॥
निर्मञ्छ्य मौक्तिकैर्दिव्यै रत्नदीपैर्निवेद्य च ।
अक्षयं मङ्गलं शीर्षे तर्पयन्ति मुदान्विताः ॥ ९६ ॥
गोशृङ्गोपरि यत्कालं तिष्ठेत्सर्षपमर्पितम् ।
तावच्चित्ते महादेव्यै भक्तिं कृत्वा नरः प्रिये ॥ ९७ ॥
(पुनाति?पूयते)सर्व्वपापेभ्यः पापात्मा पापकृद्यदि ।
पितृमातृकुलैः सार्धं स्वर्गलोके महीयते ॥ ९८ ॥
ततः पुनरिहागत्य चिरेण भक्तिमान् प्रभुः ।
सार्वभौमपदं लब्ध्वा कैवल्यमाप्नुयात् ततः ॥ ९९ ॥
प्राचुर्यादथ भक्तेस्तु जगन्मा(तः?तुः) पदं प्रति ।
अनुमेयमनेनैव बहुना वचसा च किम् ॥ १०० ॥
भक्तिः[2] पुनर्महेशानि यदिहानन्यचित्तता ।
भजनं सर्व्वभावेन सेव्य[3]सेवककर्म्मना ॥ १०१ ॥
जगन्मातुर्महादेव्या दासोऽहमिति भाषते ।
सकृद्य[4]स्तस्य भृत्यास्ते पुरन्दरमुखाः सुराः ॥ १०२ ॥
पितृमातृमुखान् विप्रान् गाश्च भृत्याननेकशः ।
हत्वा निवेदयेद्यस्तु आत्मानं तत्पदाम्बुजे ॥ १०३ ॥
शुद्धा गुणमयं देहं परं ब्रह्माधिगच्छति ।
अहं पुनरिदं विश्वं ब्रह्माण्डं ब्रह्मणा सह ॥ १०४ ॥

---

१ 'मातश्चैव' क. पाठः । २ 'क्ति' क. पाठः । ३ 'व्या' क. पाठः । ४ 'द्यस्य त' क. पाठः ।

भित्त्वा छित्त्वा तथा लोकान् संतोष्य परमेश्वरीम् ।
तस्यै निवेद्य चात्मानं यास्यामि ब्रह्म शाश्वतम् ॥ १०५ ॥
तस्माद्यत् क्रियते कर्म ममेति च यदा भवेत् ।
आत्मानं तत्पदाम्भोजे महामन्त्रेण चार्पयेत् ॥ १०६ ॥
तर्पणानि पुनर्दत्त्वा नवमुद्राः प्रदर्शयेत् ।
मुदं रान्ति च ता यस्मात् तेन मुद्राः प्रकीर्त्तिताः ॥ १०७ ॥
कामं मोक्षं तथा धर्ममर्थं मुद्रान्विता स्वयम् ।
ददाति साधकायाशु देवी गन्तुं समुत्सुका ॥ १०८ ॥
संक्षोभद्राविणयाकर्षवश्योन्माद्महाङ्कुशाः ।
खेचरीबीजयोन्याख्या नव मुद्रा स्मृताः क्रमात् ॥ १०९ ॥
दर्शितास्वासु मुद्रासु भवेत् पूजासमापनम् ।
स्वस्वबीजेन मुद्राया बन्धनं परिकीर्त्तितम् ॥ ११० ॥
दर्शनं मूलमन्त्रेण त्यागः क्रोधोद्भवेन च ।
मुद्रानुष्ठानमज्ञात्वा यो मुद्रां धारयेद्बुधः ॥ १११ ॥
विफलं तस्य तत्सर्वं जीवहीनं वपुर्यथा ।
पूजादौ दर्शितास्वासु देव्यास्तु संनिधिर्भवेत् ॥ ११२ ॥
भक्तेः प्राचुर्यमत्रैव श्रद्धयाभ्यर्चनं तथा ।
निर्जनश्चात्मशुद्धिश्च दोषराहित्यता तथा ॥ ११३ ॥
पूजोपकरणस्येह बाहुल्यं च पवित्रता ।
सौरभेणातिसौरभ्याच्चमत्कारकृतिस्तथा ॥ ११४ ॥
संस्थानं पौरुषेणैव मनोहारित्वमात्मनः ।

---

१ 'क्षीक' ख. पाठः । २ 'नपौ' क. पाठः ।

सौ(मकस्य?मुख्यं च)सुवेशश्चं[1] यष्टुः काकूक्तिरेव च ।११५।
पूजाविधिषु[2] दाढ्यं च तथैवानन्यचित्तता ।
स्तुतिर्नतिर्जपश्चैव बलिः पेयं तथैव च ॥ ११६ ॥
हेतुरत्र समाख्यातो देवीसांनिध्यकारकः ।
मद्यं (श्रा?स्त्रा)व्यं तु सिन्दूरे[3] स्वांगरागेषु कुंकुमम् । ११७ ।
इति यो यत्र संप्रोक्तो विशेषस्त्रिपुरार्चने ।
एभिर्विशेषैः सहितं त्रिपुरातन्त्रगोचरम् ॥ ११८ ॥

इति पार्वतीश्वरसंवादे श्रीगन्धर्वतन्त्रे जपादिविधिनिरूपणं
अष्टादशः पटलः ॥ १८ ॥

———※———

१ 'शं च' क. पाठः । २ 'मुद्राढ्यं' ख. पाठः . ३ 'रं' ख. पाठः ।

# एकोनविंशः पटलः ।

———o———

ईश्वर उवाच

अथ वक्ष्ये महेशानि वटुकादिविधिं शृणु ।
येनानुष्ठितमात्रेण साधकः सिद्धिमाप्नुयात् ॥ १ ॥
बलिभिस्तर्पिता ह्येते पूजिता यस्य सुव्रते ।
सिद्धयः सकलास्तस्य करस्था नात्र संशयः ॥ २ ॥
अन्यथा रुषितैस्तैर्हि स विघ्नैः परिभूयते ।
तस्मात् तेभ्यः प्रयत्नेन बलिं कुर्वीत हेतुना ॥ ३ ॥
मांसेन साधितं भक्तं खण्डं दधि सपिष्टकम् ।
मांसानि विविधान्यत्र सुदुग्धं मीनमेव च ॥ ४ ॥
श्रीचक्रमभितो देवि मण्डलानां चतुष्टयम् ।
ईशान–वह्नि–नैर्ऋत्यवायुकोणेषु पार्वति ॥ ५ ॥
ध्येयो देव्यास्तदा विष्णुः पुत्रोऽयं वटुरूपधृक् ।
वटुकः कमलाक्षस्तु स्वर्णगौरश्चतुर्भुजः ॥ ६ ॥
गदां शङ्ख[1] च पद्मं च चक्रं चापि दधत्करैः ।
विद्रुतैः[2] पुरतो देव्याः(गजे?खगे)न्द्रासनसंस्थितः ॥ ७ ॥
[*]वारुणं शक्रयुक्तं च चतुर्दशस्वरान्वितम् ।
सहितं चन्द्रबिन्दुभ्यां वटुकाय नमोऽन्ततः ॥ ८ ॥
अनेन मनुना देवि गन्धाद्यैः पूजयेत्ततः ।

---

१ 'कर्धृतम्' क. पाठः । २ 'तं' क. पाठः ।

* वारुणं व शक्रं ल चतुर्दशः स्वरः औ चन्द्रबिन्दुसहितः तेन व्लौं वटुकाय नमः इति ।

तदग्रे परमेशानि पात्रं चान्नोदकान्वितम् ॥ ९ ॥
कृत्वा च विधिवत्तत्र बलिं मन्त्रेण दापयेत् ।
*एह्येहि देवी[1]पुत्रान्तान्ते वटुकान्तेऽथ नाथ च ॥ १० ॥
कपिलान्ते जटाभारभास्वरान्ते त्रिनेत्र च ।
ज्वालामु[ख्यं?ख] च सर्वान्ते विघ्नान्नाशय नाशय ॥ ११ ॥
सर्वोपचारसहितं बलिं गृह्णद्विधापदम् ।
वह्निजायान्वितो मन्त्रो वटुकस्य उदाहृतः ॥ १२ ॥
वामाङ्गुष्ठानामिकाभ्यां बलिं तस्मै निवेदयेत् ।
अस्यैवाराधनं कृत्वा मन्दभाग्योऽपि सुव्रते ॥ १३ ॥
सर्वबाधाविनिर्मुक्तः संपदां भाजनं भवेत् ।
यजनं चास्य देवस्य सांगेन कथितं पुरा ॥ १४ ॥
बलिप्रदानमात्रं तु प्रसंगात्कथितं शिवे ।
डाकिनीप्रमुखाः पश्चाद्बलिना तर्पयेत् ततः ॥ १५ ॥
तथैव वामतो देव्या मण्डले योगिनीः स्मरेत् ।
अथवा चिन्तयेदेता योगिन्यः सर्वसिद्धिदाः ॥ १६ ॥
योगिन्यः कामरूपाश्च तप्तकाञ्चनभास्वराः ।
मत्ताः कंकालमालाढ्याः कटीतटभरानता ॥ १७ ॥
गलद्रुधिरगन्धाढ्या रक्तवस्त्रोत्तरीयकाः ।
लिंगं पाशं कपालं च बिभ्रत्यश्च[शृ?सृ]णीं[2] करैः ॥ १८ ॥
स्वभक्तानामभिमतं संददाना[3] मुदान्विताः ।

---

* एह्येहि देवीपुत्रवटुकनाथकपिलजटाभारभास्वरत्रिनेत्रज्वालामुख सर्वविघ्नान् नाशय नाशय सर्वोपचारसहितं बलिं गृह्ण २ स्वाहेति बलिमन्त्रः ।

१ 'वि' क. पाठः । २ 'शृणि चापि धृताः' क. पाठः । ३ 'दीयमाना' क. पाठः ।

गन्धादिभिः समभ्यर्च्य बलिं मन्त्रेण दापयेत् ॥ १
यामात्मकं समुच्चार्य योगिनीभ्यस्ततः परम् ।
भ्यसन्तं[1] सर्ववर्णान्ते योगिनीपदमालिखेत् ॥ २० ॥
कवचं चास्त्रमालिख्य वह्निजायां पुनर्लिखेत् ।
अनेन मनुना वापि योगिनीनां बलिं हरेत् ॥ २१ ॥
अङ्गुष्ठमध्यमानामा योन्याकारेण[2] योजयेत् ।
कृताञ्जलिस्ततो देवि संप्रार्थयेदनेन तु ॥ २२ ॥

ऊर्ध्वं ब्रह्माण्डतो वा दिवि गगनले भूतले निस्तले वा
पाताले(वानले)वा सलिलपवनयोर्यत्रकुत्र स्थिता वा ।
क्षेत्रे पीठोपपीठादिषु च कृतपदा धूपदीपादिकेन
प्रीता देव्यः सदा नः शुभबलिविधिना पान्तु वीरेन्द्रवन्द्याः[3] ।

क्षेत्रपालं महादेव्या वामतः परिचिन्तयेत् ।
अपराजितवल्लीभिर्वेष्टितस्य महात्मनः ॥ २४ ॥
आरक्तवर्णैः[4] सततं कुसुमैरुपशोभिते ।
तिन्तिडीकल्पवृक्षस्य सच्छाये रत्नभूषिते ॥ २५ ॥
नीलाञ्ज(ल?न)चयप्रख्यं[5] दधानं करपङ्कजैः ।
कृपाणं च कपालं च शूलं डमरुमेव च ॥ २६ ॥
ध्यायेच्च सममत्यर्थं दंष्ट्राभिन्नाधरं परम् ।
पूजयित्वा विधानेन बलिं मन्त्रेण दापयेत् ॥ २७ ॥

---

१ 'स्वाहान्ते' क. पाठः । २ 'करे' ख. पाठः । ३ 'देवेन्द्रवन्द्याः' क. पाठः । ४ 'वर्णैः' ख. पाठः . ५ 'च्चं' क. पाठः ।

* यां योगिनीभ्यः सर्ववर्णयोगिनीभ्यो हुंफट्स्वाहेति बलिमन्त्रः ।

षड्दीर्घस्वरसंभिन्नं क्षकारं विलिखेत् प्रिये ।
ततः क्षेत्रपदं पाल धूपदीपादि वा लिखेत् ॥ २८ ॥
सहितं बलिमालिख्य गृह्णगृह्ण ततो वदेत् ।
वह्निजायान्वितो मन्त्रः †क्षेत्रपालस्य पार्वति ॥ २९ ॥
वाममुष्टिं विधायादौ तर्जनीं सरलां कुरु ।
अनया मुद्रया देवि बलिं तस्मै निवेदयेत् ॥ ३० ॥
चतुर्थमण्डले देव्याः पुरतो दक्षभागतः ।
नवीननीरदश्यामं सर्वाभरणभूषितम् ॥ ३१ ॥
तुन्दिनं गजवक्त्रं च चतुर्बाहुं दिगम्बरम् ।
वामदक्षोर्ध्वपाणिभ्यां पाशाङ्कुश[व?ध]रं विभुम् ॥ ३२ ॥
दक्षिणाधःकरेणैव मधुपूर्णकपालकम् ।
सिन्दूरसदृशाकारामुद्दाममदविह्वलाम् ॥ ३३ ॥
धृतरक्तोत्पलामन्यपाणिना तद्ध्वजस्पृशम् ।
आलिङ्ग्य वामहस्तेन तस्या मदनमन्दिरम् ॥ ३४ ॥
स्पृशन्तं परमेशानं ध्यात्वा तं परिपूजयेत् ।
गांगींगूंत्रयमालिख्य ङेन्तं गणपतिं ततः ॥ ३५ ॥
वरान्ते वरदान्ते च सर्वान्ते जनमालिखेत् ।
मे वशं चानय प्रोच्य बलिं गृह्ण द्विधापदम् ॥ ३६ ॥
वह्निजायान्वितो मन्त्रो गणपस्य*उदाहृतः ।
मुष्टिमध्यस्थितां देवि अङ्गुलीं दण्डवत् कुरु ॥ ३७ ॥

---

१ 'शा' क. पाठः ।

† क्षांक्षींक्षूंक्षैंक्षौंक्षः क्षेत्रपाल धूपदीपादिसहितं बलिं गृह्ण २ स्वाहा इति निष्कर्षः ।

* गांगींगूंगणपतये वरवरद सर्वजनं मे वशमानय बलिं गृह्ण २ स्वाहेतिबलिमन्त्रः ।

गजतुण्डा महामुद्रा गणपस्य सदा प्रिया ।
एतदन्ते महेशानि सर्वभूतबलिं हरेत् ॥ ३८ ॥
सुरा नराश्च पितरो यक्षरक्षःपिशाचकाः ।
एते भूताः समुद्दिष्टा बलिभिस्तान् प्रतर्पयेत् ॥ ३९ ॥
बलिभिस्तर्पितास्त्वेते यान्ति यज्ञे सहायताम् ।
अतर्पिता यदा तस्मिंस्ते वै विघ्नस्वरूपिणः ॥ ४० ॥
आत्मानं च क्रियाः सर्वा महामन्त्रेण पार्वति ।
ततो ब्रह्मस्वरूपिण्यै विशेषेण समर्पयेत् ॥ ४१ ॥
वारत्रयमितः पूर्वं प्राणबुद्धि ततः परम् ।
देहधर्माधिकारान्ते जाग्रत्स्वप्नसुषुप्तिषु ॥ ४२ ॥
मनसा च ततो वाचा कर्मणा च ततः परम् ।
हस्ताभ्यां च ततः पद्भ्यामुदरेण ततः परम् ॥ ४३ ॥
शिश्ना च यत् स्मृतं पश्चाद्यदुक्तं यत्कृतं भवेत् ।
मां मदीयं ततो देवि सकलं च ततः परम् ॥ ४४ ॥
तथैव त्वयि-शब्दान्ते ब्रह्मण्यर्पितमस्त्विति ।
स्वाहान्तो मनुरित्युक्तो मन्त्रः§स्वात्मसमर्पणे ॥ ४५ ॥
एतदन्ते महामन्त्रा(न?नि)यतः समुदीरयेत् ।
आवाहनं न जानामि न जानामि विसर्जनम् ॥ ४६ ॥
पूजाभागं न जानामि त्वं गतिः परमेश्वरि ।
सत्यं सत्यं पुनः सत्यमुत्क्षिप्य भुजमुच्यते ॥ ४७ ॥

---

§ इतः पूर्वं प्राणबुद्धिदेहधर्माधिकारजाग्रत्स्वप्नसुषुप्तिषु मनसा वाचा कर्मणा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना च यत्स्मृतं यदुक्तं यत्कृतं मां मदीयं सकलं त्वयि ब्रह्मण्यर्पितमस्तु स्वाहेति स्वात्मसमर्पणमन्त्रः । मामिति अस्मिन्मनौ विभक्तिप्रतिरूपकमव्ययं बोध्यम् ।

कायेन मनसा वाचा त्वत्तो नान्या गतिर्मम ।
अन्तश्चारेण भूतानामन्तस्त्वमेव संस्थिता ॥ ४८ ॥
यद्दत्तं भक्तिमात्रेण पत्रं पुष्पं फलं जलम् ।
आवेदितं च नैवेद्यं तद्गृहाणानुकम्पया ॥ ४९ ॥
विधिहीनं क्रियाहीनं भक्तिहीनं यदर्चितम् ।
यदक्षर[1]परिभ्रष्टं मात्राहीनं च यद्भवेत् ॥ ५० ॥
अनङ्गव्यवधानादि अपराधशतानि च ।
क्षन्तुमर्हसि मे देवि त्वमेव शरणं यतः ॥ ५१ ॥
त्वयि मे हृदयं चास्तु त्वयि चित्तं मनस्त्वयि ।
त्वत्पूजायां महामाये संवर्धन्तां प्रयोजिताः ॥ ५२ ॥
ये पुनर्विघ्नकर्तारस्ते नश्यन्तु त्वदाज्ञया ।
मन्त्रेषु पठितेष्वेषु त्व(रं?यं)देवी प्रसीदति ॥ ५३ ॥
दातुं[2] देवी चतुर्वर्गमित्येतन्नात्र संशयः ।
एवं संप्रार्थ्य देवेशि स्तुत्वा नुत्वाति[3]भक्तितः ॥ ५४ ॥
प्रधानदेवतामूर्तौ परिवारान् समर्पयेत् ।
तस्या एव महेशान्याः शरीरे सर्वदेवताः ॥ ५५ ॥
विलीनाः सन्तु मूलेन दे(वा?व्य)ङ्ग मीलिताः स्मरेत् ।
अथ कामकलारूपमात्मानं परिचिन्तयेत् ॥ ५६ ॥
ततस्तां परमेशानीं विसृजेद् हृदयाम्बुजे ।
ज्ञानतोऽज्ञानतो वापि यन्मया क्रियते शिवे ॥ ५७ ॥
तव कृत्यमिदं सर्वमिति मातः क्षमस्व मे ।
उद्वास्य परमेशानीं खेचर्यात्मनि योजयेत् ॥ ५८ ॥

१ 'रं' क. पाठः । २ 'दत्ते' ख. पाठः । ३ 'भि' ख. पाठः ।

अनेनैव तु मन्त्रेण ध्यायंस्तां स्थापयेद् हृदि ।
तिष्ठ देवि परे स्थाने स्वस्थाने परमेश्वरि ॥ ५९ ॥
विसृज्यैवं महेशानीं ततः पूरकवायुना ।
संहारमुद्रयादाय समाघ्राय गुरूक्तया ॥ ६० ॥
तच्चैतन्यं[स?स्व]मूलेन मूल एव निवेशयेत् ।
प्राणायामैस्तु संतर्प्य यजेन्निर्माल्यधारिणीम् ॥ ६१ ॥
निर्माल्यं निक्षिपेद्भूमौ नीत्वा तां चित्कलां पुरा ।
अस्या जगन्मयी सैव सा चै[वाशो?व शे]षिका परा ॥ ६२ ॥
तत्परं नहि [१]वेस्त्वे[ह?व]तत्त्वज्ञानादहं प्रभुः ।
महापद्मवनान्तःस्थशृङ्गाटोदरसंस्थिताम् ॥ ६३ ॥
देवीं परां समालोक्य आत्मानं तु विचिन्तयेत् ।
उन्मन्यन्ते शिवो भूत्वा तिष्ठेदानन्दनिर्भरः ॥ ६४ ॥
शिवेनैक्यं समासाद्य याव[२]दन्ते मनोलयः ।
निवर्तितसमाधिस्तु गुरवे मूर्धवासिने ॥ ६५ ॥
आललाटं नमस्कुर्यान्निवेद्यार्घ्यं तदाज्ञया ।
ऐशान्यां मण्डलं कृत्वा द्वारपद्मविवर्जितम् ॥ ६६ ॥
शेषिकां सुन्दरीं तत्र निर्माल्येन प्रपूजयेत् ।
लेह्यचो[३]ष्यान्नपानादि ताम्बूलमनु[४]लेपनम् ॥ ६७ ॥
नैर्माल्यं भोजनं तुभ्यं ददामि श्रीशिवाज्ञया ।
अनेन मनुना देव्या यजेन्निर्माल्यधारिणीम् ॥ ६८ ॥

इति श्रीगन्धर्वतन्त्रे पार्वतीश्वरसंवादे वटुकादिबलिविधिनिरूपणं एकोनविंशः पटलः ॥ १९ ॥

---

१ 'वा' क. पाठः । २ 'अन्तं यावत्म' क. पाठः । ३ 'पा' क. पाठः । ४ 'स्रग्विले' ख. पाठः ।

## विंशः पटलः ।

देव्युवाच

कथं सा परमेशानी शेषिका पू[जि?ज्य]ते शिव ।
कीदृशी सा महादेवी तदशेषं वद प्रभो ॥ १ ॥

ईश्वर उवाच

शेषिकां सुन्दरीं वक्ष्ये देवीं गुह्यतमां प्रिये ।
उच्छिष्टपूर्विकां देवीं मातङ्गीं सर्वसिद्धिदाम् ॥ २॥
सर्वापत्तारिणीं[1] विद्यां सर्वदोषविवर्जिताम् ।
यया विज्ञातया देवि क्षयं गच्छन्ति चापदः ॥ ३ ॥
स्थावरं जङ्गमं चैव कृत्रिमं चाङ्गजं तथा ।
विद्येयं नाशयेद् देवि स्वपराङ्गसमाश्रितम् ॥ ४ ॥
इयं विद्या महाविद्या सर्वपापापहारिणी ।
स्वर्गदा मोक्षदा चेयं राज्यसौभाग्यदा तथा ॥ ५ ॥
इयं देवी मया पूर्वं साधिता देवि निर्जने ।
सकृदुच्चारिता[2] विद्या ब्रह्महत्याविनाशिनी ॥ ६ ॥
य उच्छिष्टमुखो[3] भूत्वा स्मरेद् देवीं कदाचन ।
तदाचान्तो भवेद् देवि विनैवाचमने कृते* ॥ ७ ॥
निर्धनो धनमाप्नोति मूर्खो विद्यामवाप्नुयात् ।
मन्त्रं शृणु महादेव्या यथावत् कथयामि ते ॥ ८ ॥

---

१ 'विपम्' ख. पाठः । २ 'च' क. पाठः । ३ 'यशु' ख. पाठः ।

* ऐशोऽयं पाठः आचमनं विनेत्यर्थः, एवमग्रेऽपि बोध्यम् ।

उच्छिष्टशब्दमुच्चार्य तथा चण्डालिनीति च ।
सुमुखीति ततो देवि महापिशाचिनीति च ॥ ९ ॥
मायाबीजं ततः पश्चात् ठकारद्वितयं तथा ।
सविसर्गं‡ महादेवि सर्वसिद्धिप्रदायकम् ॥ १० ॥
अथान्यं संप्रवक्ष्यामि मन्त्रं परमदुर्लभम् ।
वाङ्मायाकमलाबीजं नमो भगवतीति च ॥ ११ ॥
मातङ्गेश्वरि सर्वान्ते जनवशंकरीति च ।
वह्निजायान्वितो मन्त्रः§ सर्वसिद्धिप्रदायकः ॥ १२ ॥
नारिदोषोऽत्र देवेशि न विघ्नो नियमस्तथा ।
अङ्गन्यासकरन्यासौ नाङ्गी चैवास्य देवता ॥ १३ ॥
यस्य तिष्ठति मन्त्रोऽयं स भवेत् सुरपादपः ।
ध्यानमस्याः प्रवक्ष्यामि यथावदखिलेश्वरि ॥ १४ ॥
शवोपरि समासीना रक्ताम्बरपरिच्छदा ।
रक्तालंकारभूषाढ्या गुञ्जाहारविराजिता ॥ १५ ॥
नवयौवनसंपन्ना पीनोन्नतपयोधरा ।
कपालकर्तृकाहस्ता परमज्योतीरूपिणी ॥ १६ ॥
विधानं चात्र वक्ष्यामि शृणु देवि मनोहरम् ।
भोजनानन्तरं देवि विनैवाचमने कृते ॥ १७ ॥
बलिं कृत्वा प्रथमतो मूलमन्त्रेण साधकः ।
ततो मन्त्रं जपेद् ध्यात्वा जपेदयुतमानतः ॥ १८ ॥

---

‡ उच्छिष्टचण्डालिनि सुमुखि देवि महापिशाचिनि ह्रीं ठः ठः इति ।

§ ऐं ह्रीं श्रीं नमो भगवति मातङ्गेश्वरि सर्वजनवशंकारि स्वाहा । इति मन्त्रान्तरम् ।

उच्छिष्टेनैव कर्तव्यो जपोऽस्याः सिद्धिमिच्छता ।
अपरं च प्रवक्ष्यामि शृणु देवि फलप्रदम् ॥ १६ ॥
होमसंतर्पणं चैव सर्वकार्यार्थसिद्धये ।
स्थण्डिले मण्डलं कृत्वा चतुरस्रं सबिन्दुकम् ॥ २० ॥
पूजयेन्मण्डलं देव्या मूलमन्त्रेण साधकः ।
तत्र देवीं समावाह्य वह्निरूपव्यवस्थिताम् ॥ २१ ॥
संपूज्यैव चरेद्धोमं दधिसिद्धार्थतण्डुलैः ।
सहस्रैकविधानेन राजा भवति वश्यगः ॥ २२ ॥
मार्जारस्य तु मांसेन देव्यै होमं समाचरन् ।
स प्राप्नोति परां विद्यां शस्त्रशास्त्रवशीकृताम् ॥ २३ ॥
कुर्याच्छागस्य मांसेन होमं मधुघृतान्वितम् ।
सहस्रैकप्रमाणेन भवन्ति फलसिद्धयः ॥ २४ ॥
विद्याकामश्चरेद् होमं मधुना सह सर्पिषा ।
अयु[क्तै?तै]कप्रमाणेन सिद्धिरिष्टा भवेद् ध्रुवम् ॥२५॥
सद्यो मार्जारमांसेन घृतेन मधुना सह ।
चाण्डालकेशयुक्तेन भवेदाकर्षणं महत् ॥ २६ ॥
शशकस्य तु मांसेन मधुनालोडितेन च ।
कृत्वा होममवाप्नोति विद्यावसुवरस्त्रियः ॥ २७ ॥
धत्तूरकाष्ठयोगेन चितावह्नौ तु मन्त्रवित्[1] ।
कोकिलाकाकपक्षैश्च होमैः शत्रून् विनाशयेत् ॥ २८ ॥
उच्चाटनाय शत्रूणां होमं कुर्याच्च मन्त्रवित् ।

---

१ 'धूस्तू' क. पाठः ।

पूर्वोक्तेन विधानेन चिताकाष्ठहुताशने ॥ २९ ॥
उलूककाकपक्षाभ्यां कृत्वा होमं निरन्तरम् ।
द्वेषयेद् द्विष्टमन्योन्यकलहाकुलसंकुलम् ॥ ३० ॥
उलूकपक्षहोमेन गर्भपातो भवेत् स्त्रियाः ।
बिल्वपत्रैः सुमध्वक्तैर्मासमेकं निरन्तम्[1] ॥ ३१ ॥
सहस्रैकप्रमाणेन कृत्वा होमं समाहितः ।
अपि वन्ध्या लभेत् पुत्रं चिरजीविनमुत्तमम् ॥ ३२ ॥
बन्धूककुसुमं हुत्वा रक्तं मधुसितान्वितम् ।
दुर्भगा चैव या नारी सुभगा सा न संशयः ॥ ३३ ॥
[इडा?हठा]दागत्य कामार्ता बलादालिङ्गयन्ति तम् ।
इयं देवी महेशानी वामाचार[2]फलप्रदा ॥ ३४ ॥
दक्षिणाचारयोगेन न भवेत् फलदायिनी ।
भोजनानन्तरं चास्या बलिं दद्याद् दिने दिने ॥ ३५ ॥
उच्छिष्टेन जपेन्मन्त्रं शतमष्टोत्तरं शिवे ।
उटजे[3] वा श्मशाने वा शून्यागारे चतु(ष्टयं?ष्पथे) ॥ ३६ ॥
बलिप्रदानतो देवी प्रत्यक्षा भवति ध्रुवम् ।
अनयैवाभिसंमन्त्र्य ओषध्यः सर्वसिद्धिदाः ॥ ३७ ॥
चन्द्री चक्री तथा वज्री त्रिशूला मुद्धयी तथा ।
देहस्था समरे पुंसां सर्वायुधवि[धा?दा]रिणी ॥ ३८ ॥
गृहीतं पुष्यनक्षत्रे अपामार्गस्य मूलकम् ।
लेपमात्रेण धीराणां सर्वायुधनिवारणम् ॥ ३९ ॥

---

१ 'स' क, पाठः । २ 'रा' क. पाठः । ३ 'उज्जटे' क. पाठः ।

अर्जुनं च नारजं च चम्पकोन्मत्तकः कुहूः ।
लेपमात्राज्जयी युद्धे वज्रदेहो भवेन्नरः ॥ ४० ॥
खर्जूरी मुखमध्यस्था कटीबद्धा च केतकी ।
भुजदण्डस्थितस्तालः सर्वायुधनिवारणः ॥ ४१ ॥
दक्षबाहुस्थितश्चार्को वामे तु हृदयेऽथवा ।
रुद्रः पुष्पगतो युद्धे वज्रदेहो भवेन्नरः ॥ ४२ ॥
त्रिलोहवेष्टितं कृत्वा रसं वज्राभसंयुतम् ।
रणस्थस्य करस्थं च सर्वायुधनिवारणम् ॥ ४३ ॥
गिरिकर्णीं शमीं दूर्वां गुञ्जां श्वेतां समाहरेत् ।
चन्दनेनान्विताः सर्वास्तिलकाद्विजयी रणे ॥ ४४ ॥
अधःपुष्पा शिखी चैव श्वेता च गिरिकर्णिका ।
गोरोचनासमायुक्ता तिलकं शत्रुमोहनम् ॥ ४५ ॥
कनकार्को[?]वाह्निरिन्द्रद्रुः पञ्चमस्तथा ।
करोति तिलकं यस्तु पश्येत्तं पञ्चधा रिपुः ॥ ४६ ॥
कृष्णसर्पकरालं तु रसं मृत्तिकयान्वितम् ।
सितगुञ्जां वपेत् तत्र तस्या मूलं समाहरेत् ॥ ४७ ॥
हरीतक्या समायुक्तं तिलकं शत्रुमोहनम् ।
कृततिलकं भटं दृष्ट्वा पश्येत् स्वं श्वावृतं रिपुः ॥४८॥
श्वंगणैर्भ(क्ष?क्ष्य)माणस्तु पतत्येव ततो भुवि ।
छाया यस्य जले याति संग्राह्यः कासमर्दकः ॥ ४९ ॥
अनेन तिलकेनारिः कूपवापीं प्रपश्यति ।

---

'त्र' क. पाठः

ब्रह्मदण्डी च कौमारी ईश्वरी वैष्णवी तथा ॥ ५०
वाराही वज्रिणी चान्द्री महालक्ष्मीस्तथैव च ।
एताश्चौषधयो दिव्यास्तथैता मातरः स्मृताः ॥ ५१ ॥
कृतताडी करे बद्धा[1] सर्वशत्रुनिवारिणी ।
बहुना तु किमुक्तेन संक्षेपात् कथ्यतेऽधुना ॥ ५२ ॥
षट्कर्मशालिनी विद्या प्रयोगात् सर्वसिद्धिदा ।
मूलविद्याप्रयोगेन सिद्धिहानिर्भवेद् ध्रुवम् ॥ ५३ ॥
प्रयोगेच्छा यदा देवि तदैनां च प्रयोजयेत् ।
अनयाखिलकर्माणि साधयेत् साधकोत्तमः ॥ ५४ ॥
प्रसङ्गात् कथितं देवि गोपनीयं प्रयत्नतः ।



इति श्रीगन्धर्वतन्त्रे पार्वतीश्वरसंवादे शोषिकाविद्याप्रयोगक्रमनिरूपणं विंशः पटलः ॥ २० ॥

१ 'दृष्ट्वा' ख. पाठः ।

## एकविंशः पटलः ।

ईश्वर उवाच

ततो वै मूलमन्त्रेण महेशानीं धिया स्मरन् ।
अप्राश्य चैव निर्माल्यं पादोदकपुरःसरम् ॥ १ ॥
शिरसा धारयेद्यस्तु भूमौ बिन्दूंस्तु पातयेत्[1] ।
ब्रह्महा स तु विज्ञेयो यद्भक्त्या चात्मसा(द्र?त्कृ)तम् ॥ २ ॥
शिवं गन्धं समादाय शंखतोये विलोकयेत् ।
सव्यहस्ते समादाय दक्षहस्तेन मन्त्रवित् ॥ ३ ॥
सप्तधा मन्त्रितं कृत्वा सर्वतीर्थमयं स्मरेत् ।
प्रोक्षयेत् तेन चात्मानं मूलदेवीं हृदि स्मरन् ॥ ४ ॥
पादोदकं पिबेद् भक्त्या शेषं मूर्धनि योजयेत् ।
सर्वाङ्गलेपनं कृत्वा यन्त्रलेपादिकं च यत् ॥ ५ ॥
निर्मञ्छेत् कामबीजेन मूलमन्त्रेण चात्मनः ।
अनामिकाग्रपर्वेण ललाटमपि संस्पृशेत् ॥ ६ ॥
निर्माल्यं शिरसा धार्यं सर्वाङ्गेष्वनुलेपनम् ।
मन्त्रेण भास्करायार्घ्यमच्छिद्रार्थं निवेदयेत् ॥ ७ ॥
जानुभ्यामवनीं गत्वा पठित्वा मन्त्रमीरितम् ।
एकाग्रमनसा वाग्भिरच्छिद्रमवधारयेत् ॥ ८ ॥
यज्ञच्छिद्रं तपश्छिद्रं यच्छिद्रं पूजने मम ।
सर्वं तदच्छिद्रमस्तु मार्तण्डस्य प्रसादतः ॥ ९ ॥

---

१ 'मौ वा बिन्दु पातयेत्' ख. पाठः ।

मार्तण्डभैरवं पश्चात् प्रणम्य च विलोकयेत् ।
आदावन्ते च देवस्य नमस्कारविलोकने ॥ १० ॥
कुर्याच्च सर्वदा भक्त्या धर्मकामार्थसिद्धये ।
यज्ञाधिकारिता चादौ पश्चात् संपूर्णता विधेः ॥ ११ ॥
विधेर्विपर्ययात् तस्य कृतं हरन्ति राक्षसाः ।
तमुच्यन्तं विलोक्यैव यजेदस्तमितं ततः ॥ १२ ॥
उभयोरेकतां मत्वा तमुद्यन्तं पुनस्ततः ।
स एवादौ स चान्तस्थः सोऽनन्तो ह्यन्त एव सः ॥१३॥
आद्यमन्तं विदित्वैव सर्वकर्मफलं लभेत् ।
ततस्तु पुष्पनैवेद्यतोयपात्रादिकं च यत् ॥ १४ ॥
मायाबीजेन तत्सर्वं पुनरेव विलोकयेत् ।
हस्तेन चक्षुषा वापि यत्र यश्च कृतः पुरा ॥ १५ ॥
पात्रन्याससस्तस्य तस्य विसृष्टिरमुना भवेत् ।
तोयैरभ्युदय तत्स्थानं मार्जयेत् तदनन्तरम् ॥ १६ ॥
उदके तरुमूले वा निर्माल्यं तत्र संत्यजेत् ।
नैवेद्यादीनि सर्वाणि गुरवे गुरुशक्तये ॥ १७ ॥
समर्प्योपायनं भक्त्या शिवायै[२] गुरुरूपिणे ।
जानुभ्यामवनीं गत्वा प्रणमेद् दण्डवत् प्रिये[३] ॥ १८ ॥
आदाय गुरुणा दत्तं स्वीकुर्यात्तु विधानतः ।
तयोरभावतो दद्यात् कुमारीभ्यो यथाविधि ॥ १९ ॥
अमृतं भक्षयेद् देवो भुक्त्वा देवत्वमालभेत् ।

१ 'मा' क. पाठः । २ 'शिवया' क. पाठः । ३ 'मेव च' क. पाठः ।

अमृतं तद्विजानीयादुत्सृष्टं दैवतेन यत् ॥ २० ॥
परदैवतनैर्माल्यं विनान्यत् स्वीकृतं नहि ।
अनिवेद्य शिवायैव यत्किंचित् स्वीकृतं प्रिये ॥ २१ ॥
(स?तत्)च पशुर्मृतं भुङ्क्ते लोकद्वययुतं प्रिये ।
पुरा सर्वे मनुष्याद्या भुक्त्वा मृतामि(ये?दं) नतु ॥ २२ ॥
देवत्वं(नोभवेत्?चालभन्) यस्मात्तन्नैव भक्षयेत् क्वचित्[2] ।
दिव्यभावविशुद्धात्मा भक्षयेदमृतं यदि ॥ २३ ॥
नित्यमभ्यासयोगेन देवगामी भवेन्नरः ।
अमृतोपस्तरं कृत्वा पिधानमपि तेन वै ॥ २४ ॥
बलिशेषं समादाय जुहुयाच्चैव पूर्ववत् ।
हुत्वामृतं ततो भक्त्या प्राशयेद् भावशुद्धितः ॥ २५ ॥
भुक्त्वामृतं तदा देवि हस्तं मूर्धनि विन्यसेत् ।
त्रितत्त्वेन त्रिधाचम्य षडङ्गानि प्रविन्यसेत् ॥ २६ ॥
शिवो दाता च [भ?भो]क्ता च शिवः सर्वमिदं जगत् ।
शिवो जयति सर्वत्र यः शिवः सोऽहमेव च ॥ २७ ॥
शक्तीरलंकृतं[2]वक्त्राः सुवेशाः सुमनोहराः ।
पश्येत्तु देवतादृष्ट्या ता एव देवता यतः ॥ २८ ॥
तथैव ब्राह्मणान् पश्येद्भूदेवान् शुद्धमानसान् ।
भक्त्या नत्वा प्रमुदितस्ततः स्थानवलोकयेत् ॥ २९ ॥
अनेन विधिना देवि संपूज्य परमेश्वरीम् ।
तत्कृपालब्धविज्ञानपूर्णोऽहमिव भूतले[3] ॥ ३० ॥

---

१ 'तं तु' क. पाठः । २ 'तु क्वाचित्क्वाचित्' क. पाठः । ३ 'लब्धिराहितः साहित-स्याहमेव वा' क. पाठः ।

भावनावशसंपन्नो विहरेत् तु तदिच्छया ॥ ३० ॥

देव्युवाच

क[स्य?थं] वा क्रियते पूजा [न?नु]गृह्येत निवेदिता ।
कथं वा प्रत्ययं चेतस्तदुपायं वद प्रभो ॥ ३१ ॥

ईश्वर उवाच

साधु पृष्टं त्वया भद्रे स्मरणान्मुक्तिदायकम्[1] ।
शिव[2]रूपं परं ब्रह्म अनुत्तरपदं महत् ॥ ३२ ॥
तदन्तःस्थं परं ब्रह्म ज्योतीरूपं सनातनम् ।
स्वयं प्रकाशते ह्यात्मा मेघापायेऽशुमानिव ॥ ३३ ॥
अभ्यसेद् बहुशस्तत्र श्रुतिदर्शितवर्त्मना ।
वर्णरूपं तु शब्दस्य तन्मयस्तत्क्रियास्तथा ॥ ३४ ॥
जप्त्वा कृत्वा भवेत् सिद्धि[3]र्भोगमोक्षमयी तत[4]ः ।
यावन्मनो लयं याति तस्मिन् स्वात्मनि चिन्मये ॥३५॥
तावदिष्टमनुं मन्त्री जपहोमैः समाचरेत् ।
अतः परं न किंचित् तु कृत्यम(सि?स्ति)तदात्मनः ॥३६॥
विदिते परमे तत्त्वे समस्तैर्नियमैरलम् ।
तालवृन्तेन किं कार्यं लब्धे मलयमारुते ॥ ३७ ॥
अवश्यं च भावि फलं तदाप्तौ तत्करोति यः ।
आस्तिकः स तु विज्ञेयः क्रमान्मोक्षे प्रतिष्ठितः ॥३८॥
प्राप्य न्यसेत्तदा तस्मिन् कृत्वा तद्रहितं न्यसेत् ।
उभयात्मकं तु विन्यस्य स संन्यासी मुनिर्मतः ॥३९॥

---

१ ‘ तात् ’ ख. पाठः । २ ‘ श ’ क. पाठः । ३ ‘ द्धेभो ’ क. पाठः । ४ ‘ मयास्तु
ते ’ क. पाठः ।

यन्त्रं शरीरमत्रोक्तं विदित्वा कमलेक्षणे ।
कृत्वा चाहंमतिं तत्र[1] यजेद्भक्त्या समाहितः ॥ ४० ॥
यद्रूपं परमेशान्या नि[षा?ष्क]लं सक[लार्णा?लं च]वा ।
आत्म(ा)भेदेन संपूज्य आत्मानं प्रियमीश्वरीम् ॥४१॥
तदानन्दमयं धाम याति पश्चान्न संशयः ।
एवं सा पञ्चमी प्रोक्ता पञ्चधा प्रथितविग्रहा ॥ ४२ ॥
पञ्चतत्त्वात्मके देहे प्रत्यक्षीक्रियते हि तैः ।
नान्यत्र वै भवेद् व्यक्ता विनात्मनि विचिन्तनम् ॥४३॥
अनुमानं महेशान्या आत्मन्येव नच क्वचित् ।
अनुमीय परं चैवं सर्वमात्मवदाचरेत् ॥ ४४ ॥
वस्तूनां गन्धमात्रेण सौरूप्यदर्शनात् तथा ।
तुष्यन्ति देवताः श्रेष्ठाः स्तुत्या लभ्याश्च[2] पार्वति ॥४५॥
भूतप्रेतपिशाचाश्च यक्षराक्षसपन्नगाः ।
उपभोगेन तुष्यन्ति मनुष्याद्याश्च जन्तवः ॥ ४६ ॥
गुरोः शरीरमास्थाय कुमारीणां विशेषतः ।
ब्राह्मणानां गवां चैव भुञ्जते देवताः पराः ॥ ४७ ॥
तस्मात्तांश्च प्रयत्नेन भोजयेत् तोषयेत् सदा ।
तुष्टेष्वेषु महादेवी परितुष्टा जगन्मयी ॥ ४८ ॥
ब्राह्मणानां शरीरस्था भुञ्जते पितरस्तथा ।
अनङ्गव्यवधानं स्यादङ्गहीनं तु यद्भवेत् ॥ ४९ ॥
साङ्गं भवति तत् सर्वं मिष्टान्नैर्विप्रभोजनात् ।

इति श्रीगन्धर्वतन्त्रे पार्वतीश्वरसंवादे पूजासंपूरणाद्युपायविधिनिरूपणं एकविंशः पटलः ॥ २१ ॥

---

१ 'कृत्वावहमरं तत्र' क. पाठः । २ ' भ्या च ' क. पाठः ।

# द्वाविंशः पटलः

---

ईश्वर उवाच

हृदिस्थं परमात्मानं विहायान्यत् समीहते ।
अहो मूढो वरारोहे बहिर्यन्मृग्यतेऽन्धवत् ॥१॥
विज्ञाय हृदयान्तःस्थं परं(य?प्र)कृतिगोचरम् ।
तन्निष्ठकर्मणा चैनमात्मन्येवं प्रतीयते* ॥ २ ॥
तत्प्रतीतौ भवेत् सिद्धो नान्यथा खलु पार्वति ।
अहं विष्णुः स्वयंभूश्च स्वायंभवा इमे वयम् ॥ ३ ॥
तदनुभूय देहेऽस्मिंस्तदेव समुपास्महे ।
तदन्तःस्थं समाहूय तदेवं तु यजामहे ॥ ४ ॥
उद्वास्य च तदात्मानं स्थापयित्वा निजे हृदि ।
निवेदितं तु तत्प्रीत्यै तस्मिन्नेव निवेदयेत् ॥ ५ ॥
विनामृतं न चान्यत् तु काङ्क्षन्ते देवतागणाः ।
अमृतेनैव तत्पूजा अमृतं तु निवेदयेत् ॥ ६॥
अमृतत्वं लभेद्वीरः स्वीकृत्यात्मनिवेदितम् ।
इति ते कथितं देवि शोधिका[मतृ?मृत]मुत्तमम् ॥७॥
स्थूलसूक्ष्मविभेदेन ज्ञायते कृपया गुरोः ।
नित्यं नैमित्तिकं[कर्म?काम्यं]चेति तेषां पृथक् पृथक् ॥८॥
त्रिविधं त्रैपुरं कर्म क्रमतस्तत् समाचरेत् ।
यदुक्तं तामसं त्यक्त्वा तत् सर्वं यत्नतश्चरेत् ॥९॥

---

* दैवादिकस्य ईङ्गतौ इत्यस्य धातोः कर्तरि अयं प्रयोगः ।

दैनन्दिनमतो नित्यं पातकमविधानतः ।
मासिकं तिथिकृत्यं च वार्षिकं फलदायकम् ॥ १० ॥
लङ्घनान्निरयो यस्य नित्यं श्रद्धावि[धान?घात]तः ।
नैमित्तिकं विजानीयाच्छ्रद्धया तत्समाचरेत् ॥ ११ ॥
फलमात्रश्रुतिर्यस्य श्रुतिस्मृतिप्रचोदितो[2] ।
काम्यं तत्तु विजानीयात् पूजितं तत्र गोचरे ॥ १२ ॥
विदध्यात् तत्प्रयत्नेन यत् पुनर्लोकपूजितम् ।
धर्ममपि त्यजेत् साधु यत् पुनर्[3]लोकगर्हितम् ॥ १३ ॥
नित्यं सात्त्विकमेवात्र नैमित्तिकं तु राजसम् ।
तामसं काम्यमेवात्र कुर्यात् फलवितृष्णया ॥ १४ ॥
तृष्णां तां दूरतस्त्यक्त्वा मनः पूर्णं विचिन्तयेत् ।
पूर्णे मन[सि?स्य]तृष्णे च पूर्णं सर्वमिदं जगत् ॥१५॥
उपानद्गूढपादस्य ननु चर्मावृतैव भूः ।
फलविरहितं काम्यं नित्यं नैमित्तिकं तथा ॥ १६ ॥
क्रियते त्रिपुराप्रीत्यै कृत्वा त[स्मै?स्यै]निवेदनम् ।
सात्त्विकं तद्विजानीयाद् भोगमोक्षफलप्रदम् ॥ १७ ॥
यस्य यद्विहितं कर्म त्रिविधं तत्र गोचरे ।
श्रुतिस्मृत्युदितं चापि मनसापि न हारयेत् ॥ १८ ॥
कर्मलोपादधोयोनौ जायते साधकाधमः ।
शिवशक्तिमयं विश्वं विदित्वा सद्गुरोः प्रिये ॥ १९ ॥
स्थूलसूक्ष्मविभेदेन पितृमातृस्वरूपतः ।

---

१ 'कं यदवि' क. पाठः । २ 'तम्' ख. पाठः ; ३ 'यै' क. पाठः ।

कर्मभिस्तोषयेत् तौ तु तद्भावमाश्रितः सदा ॥ २० ॥
उभयात्मा भवेत् सिद्ध्यै नैकात्मा ज्ञानवर्जितः ।
ज्ञानचक्षुस्तयोरैक्यं विदित्वा श्रीगुरोः क्रमात् ॥ २१ ॥
अनुभूय तदानन्दं तदात्मा तत्र संविशेत् ।
मातुः पितुर्यथा बालो व्युत्पत्तिं लभते क्रमात् ॥ २२ ॥
तयोः समत्वसंधानाद् व्युत्पन्नो ज्ञानमालभेत् ।
देवताः शक्तिरित्याहुः पितरः शिव एव च ॥ २३ ॥
एतावुभौ तांस्तु सर्वान् सुहृदः पूर्वसूचितान् ।
बलिभिस्तर्पयेत् तांस्तु सुहृद्भिश्च हतोऽन्यथा ॥ २४ ॥
तेषां बलिं पुरस्कृत्य तावुभौ परितोषयेत्
पश्चात् तेभ्यो निवेद्यैव सुहृद्भिर्विहरेन्मुदा ॥ २५ ॥
स्वाहान्तेन च देवेभ्यो मनुष्ये हन्तकारतः[1] ।
स्वधान्तेन पितृभ्यस्तु तेभ्यो लभ्यन्तगेन[?]तु ॥ २६ ॥
निराशाः पितरस्तस्य यास्यन्ति खलु पार्वति ।
सुहृदो ज्ञातयश्चापि वाङ्मात्रेणापि नार्चिताः ॥ २७ ॥
सुहृदो वर्ष्म खादन्ति ज्ञातयः कर्म संचितम् ।
ऐहिकं स्वपिता हन्ति स्वमाता पारलौकिकम् ॥ २८ ॥
लोकद्वयविहीनस्तु नैव सिद्धिं प्रविन्दते[2] ।
अयष्ट्वा पितरं यज्ञे यजेन्मातरमम्बिकाम् ॥ २९ ॥
विधिशतैरपि यज्ञं नानुगृह्णाति शाश्वती ।
आदावन्ते पितुस्तस्मात् कुर्यात् तर्पणमादरात् ॥ ३० ॥

१ 'ष्येभ्योऽन्त एव च' क. पाठः । २ 'प्रयच्छति' क. पाठः ।

अदत्तं नोपतिष्ठेत दद्यात् तस्मादतः परम् ।
गोभूहिरण्यवस्त्रादि भक्ष्यभोज्यानि यानि च ॥ ३१ ॥
वासिनीभ्यो द्विजेभ्यश्च दीनान्धकृपणाय च ।
त्यक्त्वा चावश्यकं कर्म लौकिकं भावतत्परः ॥ ३२ ॥
योगक्षेमे हितं यत्तु कुर्यात् तदनुशासनात् ।
समर्थो जीवयेत् स्नेहात् स्वकीयाननुजीविनः ॥ ३३ ॥
दुष्टेभ्यो दुष्टचित्तेभ्यो हिंस्रै[2]साहसिकात् तथा ।
बलिभ्यो धनमत्तेभ्यः कायस्थेभ्यो विशेषतः ॥ ३४ ॥
रक्षयेत् पालयेत् साधुः पुत्रानिव (नि?पि)तौरसान् ।
लोकांश्च त्रिविधान्मत्वा लालयेत् पालयेत् सदा ॥३५॥
वध्यान् वध्यांस्तथा दण्ड्यान् दण्डयेच्छास्त्रदर्शनात् ।
अवध्यस्य वधे यावांस्तथादण्ड्यस्य[3] दण्डने ॥ ३६ ॥
दण्ड्यस्यादण्डने पापस्तावान् वध्यस्य रक्षणे ।
इति विज्ञाय योगात्मा योगक्षेमं समाचरेत् ॥ ३७ ॥
विभूतीरात्मनः पश्येत् तत्प्राप्त्या तन्निवेदयेत् ।
विभूतीरात्मनो यस्तु महादेव्यै प्रदर्शयेत् ॥ ३८ ॥
ताभिरेव युतो भूयादणिमादिविभूतिभिः ।
मुहूर्त्तत्रयमात्रं तु कुर्यात् तनुविचिन्त(येत?नम्) ॥३९॥
चिन्तयेत् परमं ब्रह्म मध्याह्ने समुपागते ।
मुहूर्तत्रयमात्रं तु निद्रया समुपासयेत् ॥ ४० ॥
ततो बुद्ध्वा[4] यथाकाले तामेव समुपासयेत् ।

---

१ 'थैं' ख. पाठः । २ 'हिंस्रेभ्यः' क. पाठः । ३ 'दण्डस्तस्य तु' क. पाठः । ४ 'द्धया' क. पाठः ।

ललितानि च नृत्यानि गीतानि मधुराणि च ॥ ४१ ॥
दर्शयेच्छ्रावयेद् देव्यै भावात्मा तद्विलोकयेत् ।
नृत्येषु गीतानियता देव्यः स्रक्चन्दनार्चिताः ॥ ४२ ॥
भूषिताश्चारुभूषाभिर्वि[दुवे?हरे]त् ताभिरेव च ।
ततो मध्ये स्वयं देवः कामेश्वर इवापरः ॥ ४३ ॥
कामेश्वरीयुतो भूत्वा यजेत् कामेश्वरीं ततः ।
ब्रह्मचिन्तापरामोदमुदितो राज्यचिन्तकः ॥ ४४ ॥
मुहूर्तत्रयमात्रं तु निद्रया समुपासयेत् ।
दिवा दद्यात् पितृभ्यस्तु मातृभ्यो निशि तत्परः ॥ ४५ ॥
माता रात्रिः समाख्याता पिता दिवस एव च ।
उभयोरेकतां मत्वा सिद्धो भवति नान्यथा ॥ ४६ ॥
सोमः शक्तिः शिवः सूर्यो निशा शक्तिर्दिवा शिवः ।
यदा स भगवान् देवो महात्रिपुरभैरवः ॥ ४७ ॥
परापरायणोऽनन्तः परमानन्दनिर्भरः ।
परापररहस्याख्यां योगिनीं ब्रह्मरूपिणीम् ॥ ४८ ॥
शिवानन्दानन्दमयीं महात्रिपुरसुन्दरीम् ।
आकृष्योर्ध्वं यदा तिष्ठेत् तदहः परिकी(र्त?र्त्य)ते ।४९॥
शक्तिभैरवसंयोगादानन्दानन्दनिर्भ(या?रा)त् ।
भैरवानन्द[नम्रा?मग्ना]न्तर्लीला सा परमा कला ॥५०॥
मध्याह्नं तद्विजानीयान्मुहूर्तत्रयलक्षितम् ।
तौ तदा समभागेन तिष्ठतां शक्तिभैरवौ ॥ ५१ ॥
पूर्वापरौ तदा ज्ञेयावेतद्द्विगुणलक्षितौ ।

---

' रीभिर्यु ' क. पाठः ;

परस्पराद्वैतेप्सन्तौ प्रासाद्वैतौ तु मध्यतः ॥ ५२ ॥
अभिजिन्नाम जानीयात् तत्कालं सुरवन्दिते ।
तत्तत्तेजोभिराकीर्णौं[1] तयोरैक्यं तदा भवेत् ॥ ५३ ॥
सूर्यकोटिप्रतीकाशं चन्द्रकोट्ययुतप्रभम् ।
तदा दशभुजो देवः पञ्चवक्त्रस्त्रिलोचनः ॥ ५४ ॥
शुक्लाम्बरधरः शुक्लः शुक्लमाल्यानुलेपनः ।
तस्योत्सङ्गे महादेवी चन्द्रकोट्ययुतप्रभा ॥ ५५ ॥
प्रहसन्ती विशालाक्षी परमानन्दनन्दिता ।
तद्रूपतामभीप्सन्ती तद्रूपेक्षणलालसा ॥ ५६ ॥
शुक्लवेशं विना देवि नान्यत् तत्प्रीतये तदा ।
तत्रान्यद्रूपमापन्ने साधके दैवचोदिते ॥ ५७ ॥
क्रुद्धा भगवती तस्य शापं दद्यात् सुदारुणम् ।
सर्वैः शुक्लमयैर्द्रव्यैः शुक्लवेशैर्यजेत् तदा ॥ ५८ ॥
दिवि देवी भवेद् दृश्या[2] शरच्चन्द्रनिभानना[3] ।
तत्र पूजा सदा कार्या विशेषेण वरानने ॥ ५९ ॥
पेयं चो[षं?ष्यं]तथा लेह्यं चर्व्यं भक्ष्यं[4] च तर्पणैः ।
निवेदयेत् सदा भक्त्या यत्पुनः सुमनोहरम् ॥ ६० ॥
उपचारैर्यजेत् प्रातर्मध्ये रस्यान्नपानकैः[5] ।
गीतनृत्यादिना साकं रात्रौ यागपुरःसरम् ॥ ६१ ॥
प्राङ्मुखो हि यजेत् प्रातर्मध्याह्ने दक्षिणामुखः ।
सायं प्रत्यङ्मुखो भूत्वा रा(हु?त्रा)वुदङ्मुखः सदा ॥ ६२ ॥

---

[1] 'र्णां' क. पाठः । [2] 'श्याः' क. पाठः । [3] 'निभोपमाः' क. पाठः । [4] 'च' क. पाठः । [5] 'सा' क. पाठः ।

तत्र शांभवभेदेन जपेद्विद्यामनन्यधीः ॥ ६२ ॥
वर्जयेच्छक्तिभेदं तु यदीच्छेदात्मनो हितम् ।
अरुणकिरणाच्छन्नं यत्पूर्वं भैरवोदयात् ॥ ६३ ॥
अर्धनारीश्वरं ज्ञेयं तत्र पूजा(च?क्रि)याः समाः ।
उपचारैस्तदा कुर्यात् सपर्यां[1] विधिना तथा ॥ ६४ ॥
वरिवस्यां गृही, समभागेन संस्थितौ यदि ।
आनन्दपारमिच्छन्तौ सदानन्दाविवर्धिनौ ॥ ६५ ॥
पूर्वापरौ महापुण्यौ यदा तौ समरूपिणौ ।
चिन्तयेत् सततं भक्त्या तौ तत्कालविधानतः ॥ ६६ ॥
शक्तिशांभवभेदेन जपेद्विद्यामनन्यधीः ।
शुक्लाम्बरो भवेत् तत्र शुक्लमाल्यानुलेपनः ॥ ६७ ॥
रक्ताम्बरधराः पश्येद् रक्तमाल्यानुलेपनाः ।
दिशश्च विदिशश्चैव रक्ता दृश्या मनीषिभिः ।
लाक्षारुणमयं विश्वं स्वयं च तत्र तद्भवेत् ॥ ६८ ॥
पद्मरागप्रतीकाशैः[2] कोटिसूर्यसमद्युतिः ।
नाथः कामेश्वरस्तत्र ह्येकवक्त्रश्चतुर्भुजः ॥ ६९ ॥
रक्तपद्मनिभा[3] देवी बालार्ककिरणारुणा[4] ।
इच्छंस्तद्रूपतां प्राप्तुं तद्रूपा तं[5] विशन्त्यतः ॥ ७० ॥
अनुभूय तदाबन्धं भैरवानन्दसंकुलम् ।
विपरीतमभीप्सन्ती तदाक्रमणलालसा ॥ ७१ ॥
तदा स[रो?मो]भवेत् कालः सायंसंध्येति गीयते ।

---

[1] 'कार्या सपर्या' ख. पाठः । २ 'सुरराजसमन्विभः' क. पाठः । ३ 'भां देवीं' क. पाठः । ४ 'णाम्' क. पाठः । ५ 'पां तां' क. पाठः ।

शोणितैश्च समाक्रान्तां प्रतीचीमवलोकयन् ॥ ७२ ॥
पूजयेत् साधको भक्त्या चोपचारैर्यथाविधि ।
यदा सा परमा शक्तिः स्वेच्छया विश्वरूपिणी ॥ ७३ ॥
अधः कृत्वा तु पुरुषं(वर्णा?रन्तु)मिच्छा भवेद्यदा ।
तदाक्रम्य स्वयं देवी भैरवोपरिसंस्थिता ॥ ७४ ॥
सहजानन्दसंदोहैर्निजानन्दप्रवर्धिनी ।
तदा नैजं भवेद्विश्वं तत्र पूजा महोदया ॥ ७५ ॥
तत्तद्दृ(ष्टु?ष्टि)मयैर्दीपै(र्भा?र्भो)गैश्च विविधैः सदा ।
लाक्षारुणमयं सर्वं स्वयं तावत्तथा भवेत् ॥ ७६ ॥
शक्तिभेदात्मिकां विद्यां हंसबीजपुटीकृताम् ।
प्रणवान्तरितां शुद्धां नादलीलां तदात्मिकाम् ॥ ७७ ॥
मूलादिब्रह्मरन्ध्रान्तां बिषतन्तुतनीयसीम् ।
अधरा[1]म्बुरुहहंसीं सुस्थिरामिव चञ्चलाम् ॥ ७८ ॥
सं(श्र?स्र)वन्तीं सुधाधारां शुद्धलाक्षारसोपमाम् ।
आवाह्य पूजयित्वा स्वं कमलाङ्कुरान्तरे ॥ ७९ ॥
विनिर्जि(त?त्ये)न्द्रियमनो जपेदानन्दरूपिणीम् ।
मध्यं मु[2]खं विजानीयात् पूर्वापरौ स्तनद्व[यौ?यम] ॥८०॥
अर्धमात्रां[3] परं रूपं निशामध्यं तयोरधः ।
अनन्तफलदं पुण्यं भोगमोक्षफलप्रदम् ॥ ८१ ॥
संध्याचतुष्टयं भद्रे कथितं भुवि दुर्लभम् ।
चतुर्भुजं महादेव्या ज्ञेयं कालचतुष्टयम् ॥ ८२ ॥
आत्मा सा परमेशानी परमेश्वर एव च ।

---

१ 'दराम्बुज' क. पाठः । २ 'सुखं' क. पाठः । ३ 'त्रा' क. पाठः ।

यदङ्गं तु विहीयेत तदङ्गच्छेदनं तयोः ॥ ८३ ॥
तत्र यत् क्रियते कर्म मङ्गल्यं मङ्गलं परम् ।
ध्यानं पूजा जपश्चैव होमो न्यासश्च तर्पणम् ॥ ८४
अत्र वै पूजिता देवी पूरयेत् तन्मनोरथान् ।
अत्र यत् पुण्यमनघे भक्तिश्रद्धासमन्विते ॥ ८५ ॥
विधिना विहिते यज्ञे परमानन्दसंकुले ।
वक्त्रकोटिसहस्रैस्तु ह्यनन्तो वक्तुमक्षमः ॥ ८६ ॥
अमृताञ्जलिरप्यत्र[1] [सुधाब्धितुलनोपमः[2]] ।
अत्र यो नार्चयेद् देवीं जलेनापीह पार्वति ॥ ८७ ॥
न नमेद्वा गुरून् भक्त्या ब्रह्महा स निगद्यते ।
अत्र निद्रापरा यान्ति महाकालपुरं प्रिये ॥ ८८ ॥
दम्भं मोहं तथा निद्रामालस्यं बाह्यचिन्तनम् ।
कामं क्रोधं तथा लोभं हिंसां मात्सर्यमेव च ॥ ८९ ॥
वर्जयित्वा प्रयत्नेन विद्यामेव समभ्यसेत् ।
दुर्वासनां परित्यज्य कोटिजन्मसमुद्भवाम्[3] ॥ ९० ॥
एकेन जन्मना मुक्तिं याति भोगी न संशयः ।
शक्तेर्मुखं विना नान्यत् पश्येद्वै कर्हिचित्तदा ॥ ९१ ॥
पशवो दूरतस्त्याज्याः पुरुषाश्चान्यपूजकाः ।
अत्रान्यचिन्तनाद्यान्ति म्लेच्छयोनिं पतन्त्यधः ॥ ९२ ॥
यान्ति चोर्ध्वं परं धाम चिन्तनाद् ब्रह्म शाश्वतम् ।
नास्ति पुरस्क्रिया तेषां कायक्लेशपुरस्सरा ॥ ९३ ॥

---

१ 'मप्य' ख. पाठः । २ 'सुधासागरतुलनाम्' क. पाठः । ३ 'वान्' ख. पाठः ।

नित्यं पुरस्क्रियायुक्तास्त एव परिकीर्तिताः ।
तं तु देवा नमस्यन्ति किं पुनर्न(व?र)मर्कटाः ॥ ९४ ॥
देवीकला भवेत्तत्र सर्वलोकवशंकरी ।
अमर्त्या अ(र्पि?पि)तं म(न्य?र्त्य)मीहन्ते कुलवल्लभम् ॥९५॥
दृष्ट्वा[1] युवतयः सर्वाः क्लि[द्यान्मा?द्यद्यो]न्यो मुदान्विताः ।
शरदिन्दुप्रभं देवं पूर्णेन्दुप्रतिमाननम् ॥ ९६ ॥
नानावैदग्ध्यचातुर्यस्निग्धपीयूषभाषिणम् ।
अपि चेत्तत्समा नारी तत्समः पुरुषोऽस्ति चेत् ॥९७॥
नरेन्द्रं नरशार्दूलं दृष्ट्वा क्षुब्धमना[2] भवेत् ।
पूर्वे यद् दीयते वस्तु परे तस्माच्चतुर्गुणम् ॥ ९८ ॥
नानाविधोपहाराणि महादेव्यै निवेदयेत् ।
राजोपचारं दत्त्वान्ते स्तुत्वा नुत्वा विसर्जयेत् ॥ ९९ ॥
कालत्रयेऽप्यशक्तश्चेच्चतुर्थे सर्वथा प्रिये ।
अनश्नन् पूजयेद्रात्रौ भयनिद्रापराङ्मुखः ॥ १०० ॥
प्रातर्होमं प्रकुर्वीत तथा मध्यन्दिनेऽथवा ।
निद्राकालं प्रवक्ष्यामि साधकानां हिताय च ॥ १०१ ॥
दिवानिशोर्महादेवि नव मुहूर्तास्ततः परम् ।
मुहूर्तत्रयमानं तु निद्रा देव्याः समीरिता[3] ॥ १०२ ॥
अत्र निद्रापरां देवीं निद्रया समुपासयेत् ।
निद्राकाले जपेद्यस्तु पूजयेद्वा विमोहितः ॥ १०३ ॥
स्वापकालं विना देवि स्व(पे?प्या)दन्यत्र योऽबुधः ।

---

१ 'तंट' क. पाठः । २ 'ब्धं' क. पाठः । ३ 'ताः' ख. पाठः ।

चत्वारि तस्य नश्यन्ति आयुर्विद्या यशो बलम् ॥ १०४ ॥
तस्मात् सर्वप्रयत्नेन बोधकाले प्रबोधयेत् ।
दर्शनं चावलोकं च संभाषं चान्यलोकनम् ॥ १०५ ॥
स्वयमावेशनं चैव मन्त्राणां पञ्चलक्षणम् ।
विदित्वा प्रजपेन्मन्त्रं सर्वसिद्धिमुपालभेत् ॥ १०६ ॥
वेदसंध्यं त्रिसंध्यं वा द्विसंध्यं वाथ सुव्रते ।
योगात्मा योगविज्ञानी योगमुद्रासमन्वितः ॥ १०७ ॥
अब्दमेकं जपेद्यस्तु ब्रह्मचर्यव्रते स्थितः ।
सहस्रं प्रजपेदादावन्तेऽपि च सहस्रकम् ॥ १०८ ॥
मध्ययोः[1] प्रजपेद्विद्यां शेषं य(च्छ?त्स)मभागतः ।
लक्षमेकं भवेद् देवि त्रिंशदभ्यन्तरे तथा ॥ १०९ ॥
अस्तब्धाकुञ्चितं कार्यं न द्रुतं न विलम्बितम् ।
अक्षराक्षरसंचारिध्वनिमात्रं विभावयेत् ॥ ११० ॥
मयाप्येतद् व्रतस्थेन जप्यतेऽद्यापि सुन्दरि ।
त्रिसंध्यं जप्यते ब्रह्म तत्पदप्राप्तिसिद्धये ॥ १११ ॥
एवं क्रमाद्भवेत् सिद्धो भोगी भोगपरायणः ।
एवं मासमृतुं चैव वत्सरं युगमेव च ॥ ११२ ॥
गमयेत् परमेशानि यद्वा म(न्न?न्व)न्तरादिकम् ।
एतद्रहस्यं परमं न प्रकाश्यं कदाचन ।
समयाचारसंकेतं भोगमोक्षफलप्रदम् ॥ ११३ ॥

इति श्रीगन्धर्वतन्त्रे पार्वतीश्वरसंवादे समयाचारसंकेतवर्णनं
द्वाविंशः पटलः ॥ २२ ॥

---

१ 'मध्येऽपि' ख. पाठः ।

## त्रयोविंशः पटलः ।

---o---

ईश्वर उवाच

होमादिकं तु विफलं कुमारीपूजनं विना ।
कुमारी पूजिता येन त्रैलोक्यं तेन पूजितम् ॥ १ ॥
ब्रह्मा विष्णुश्च रुद्रश्च ऋषयो वासवस्तथा ।
पितरश्चैव दिक्पाला गन्धर्वाप्सरसोऽसुराः ॥ २ ॥
देवपत्न्यस्तथा नागा मातरः सिद्धचारणाः ।
विश्वेदेवाः सयक्षाश्च राक्षसाश्चैव देवताः ॥ ३ ॥
स्थावरा जङ्गमाश्चैव सर्वभूतानि जन्तवः ।
सर्वे ते तृप्तिमायान्ति कुमार्यो यत्र पूजिताः ॥ ४ ॥
बह्वीनामप्यलाभे तु एकैवै वरवर्णिनी ।
प्रमदा यौवनोन्मत्ता सा भवेत् सुन्दरी परा ॥ ५ ॥
अष्टाब्दावधि पञ्चाब्दात् पूजितव्या विधानतः ।
कुमार्यै यज्जलं दत्तं तज्जलं सागरोपमम् ॥ ६ ॥
यदन्नं दीयते तस्यै कुलाचलसमं प्रिये ।
कुमारीपूजनं देवि कुमारीमनुना भवेत् ॥ ७ ॥
यथा वा पूज्यते देवी पूजितव्यास्तथा तथा ।
हेतुना भोजितव्याः*स्ताः पायसैर्मधुरान्वितैः ॥ ८ ॥

---

१ 'व' ख. पाठः । २ 'कैकं' ख. पाठः । ३ 'व्यात' ख. पाठः ।

* णिजूलोपः ऐशः ।

बालप्रियैश्च नैवेद्यैस्त्रिपुरसुन्दरीधिया ।
स्तुत्या नत्वाथ संतोष्य स्वाभीष्टं प्रार्थयेत्ततः ॥ ९ ॥
पूजितायाश्च तुष्टाया हस्ताद्भक्तियुतो नरः ।
शिरसा प्रतिगृह्णीयादाशीर्वादयुताक्षतान् ॥ १० ॥
यद्यद्ददाति संतुष्टा तत्तद्भवति निश्चितम् ।
इति ते कथितं देवि रहस्यं परमाद्भुतम् ॥ ११ ॥
विना तेन महेशानि न पूजाफलभाग्भवेत् ।
नित्यार्चायां च दीक्षायां पुरश्चर्यादिकेषु च ॥ १२ ॥
आदौ पूर्णे च मध्ये च लक्षे पूर्णे विशेषतः ।
कुमार्यः पूजितव्याश्च कुमारीर्नार्चयेद्यदि ॥ १३ ॥
तस्य पूजाफलं सर्वं नीयते यक्षराक्षसैः ।
न पूजयति चेत् कन्यास्तदा[1] विघ्नैः प्र[2]भूयते ॥ १४ ॥
पूर्वार्जितफलं नश्येत् का कथा परजन्मनि ।
तस्मात् सर्वप्रयत्नेन यदीच्छेदात्मनो हितम् ॥ १५ ॥
पूजितव्या महाभागाः कुमार्यः परमेश्वरि ।
प्रातरुत्थाय पूजायां स्नानकालेऽथवा पुनः ॥ १६ ॥
संस्कृतासंस्कृता[3] वापि हीनजात्युद्भवास्तथा ।
नमस्याः साधकेन्द्राणां कुलीनानां परार्चने ॥ १७ ॥
ब्रह्मण्यर्पितचित्तानां नास्तीह भिन्नता क्वचित् ।
कुलपूजां विना देवि कुलदेवी पराङ्मुखी ॥ १८ ॥
परयोषा यदा भद्रे स्वयं तासां गुरुर्भवेत् ।

---

१ ' तद्वि ' क. पाठः । २ ' परि ' क. पाठः । ३ ' ते ' क. पाठः ।

ब्राह्मणी क्षत्रिया वैश्या शूद्रा च कुलभूषणा ॥ १९ ॥
वेश्या नापितकन्या च रजकी योगिनी तथा ।
नानावैदग्ध्यकुशलाः कलारूपगुणान्विताः ॥ २० ॥
तासां रूपं च भावं च विलोक्यामर्षचेष्टितम् ।
ब्राह्मण्याद्यष्टशक्तीनां नामभिः कृतशब्दितां[2]: ॥ २१ ॥
आसनं प्रथमं ताभ्यः स्वागतं च पुनः पुनः ।
अर्घ्यं पाद्यं च पानीयं मधुपर्काचमनीयकम् ॥ २२ ॥
स्न[3]पयेद् गन्धपुष्पाद्भिः केशसंस्कारमेव च ।
धूपयित्वा तथा केशान् कौशे[4]यं च निवेदयेत् ॥ २३ ॥
ततः स्थानान्तरे नीत्वा पीठमास्तीर्य भक्तितः ।
संवेशयेद्विधानेन पूर्वादिक्रमयोगतः ॥ २४ ॥
नानालंकारभूषाद्यैर्भूषयित्वानुलेपनैः ।
गन्धं पुष्पं तथा धूपं दीपं नैवेद्यमेव च ॥ २५ ॥
दुग्धं दधि घृतं तक्रं नवनीतं सशर्करम् ।
नारिकेलं कपित्थं च नागरङ्गकमुत्तमम् ॥ २६ ॥
पिष्टकं पायसं चैव नानारससमन्वितम् ।
दत्त्वा संपूज्य विधिवत् स्तुतिभिस्तोषयेत्ततः ॥ २७ ॥
मातर्देवि नमस्तुभ्यं ब्रह्मरूपधरेऽनघे ।
कृपया हर विघ्नं मे मन्त्रसिद्धिं प्रयच्छ मे ॥ २८ ॥
माहेशि वरदे देवि परमानन्दरूपिणि[6] ।

---

१ 'नटकी' ख. पाठः । २ 'संज्ञका' ख. पाठः । ३ 'स्ना' ख. पाठः ।
४ 'पेयं' क. पाठः । ५ 'ब्रह्मेश्वरि' क. पाठः । ६ 'णी' ख. पाठः ।

कृपया हर विघ्नं मे मन्त्रसिद्धिं प्रयच्छ मे ॥ २६
कौमारि सर्वविद्येशि कुमारक्रीडने परे ।
कृपया हर विघ्नं मे मन्त्रसिद्धिं प्रयच्छ मे ॥ ३०
वैष्णवि विष्णुरूपासि सर्वविघ्नविनाशिनि[1] ।
कृपया हर विघ्नं मे मन्त्रसिद्धिं प्रयच्छ मे ॥ ३१
वाराहि वरदे देवि परमानन्दरूपिणि[2] ।
कृपया हर विघ्नं मे मन्त्रसिद्धिं प्रयच्छ मे ॥ ३२
इन्द्राणि वरदे देवि गजस्कन्धस्थिता ह्यसि[3] ।
कृपया हर विघ्नं मे मन्त्रसिद्धिं प्रयच्छ मे ॥ ३३ ॥
चामुण्डे मुण्डमालास्रक्चर्चिते भयनाशिनि[4] ।
कृपया हर विघ्नं मे मन्त्रसिद्धिं प्रयच्छ मे ॥ ३४ ॥
महालक्ष्मि महामोह[5]क्षोभसंतानहारिणि ।
कृपया हर विघ्नं मे मन्त्रसिद्धिं प्रयच्छ मे ॥ ३५ ॥
[6]मितिमातृमयि[7] देवि [8]मितिमातृबहि(स्?ष्)कृते ।
एके बहुतरे देवि विश्वरूपे नमोऽस्तु ते ॥ ३६ ॥
एतत् स्तोत्रं पठेद्यस्तु कर्मारम्भेषु संयतः ।
विदग्धार्श्च[9] समालोक्य तस्य विघ्नं न जायते ॥ ३७ ॥
आचम्य मुखवासेन ताम्बूलं च निवेदयेत् ।
ततो दद्यात् पुनर्माल्यं गन्धचन्दनपङ्किलम् ॥ ३८ ॥

---

१ 'विष्णुरूपधरे देवि विनतासुतवाहिनि' ख. पाठः । २ 'दंष्ट्रोद्धृतवसुन्धरे' ख. पाठः । ३ 'शक्ररूपधरे देवि शक्रादिसुरपूजिते' ख. पाठः । ४ 'विघ्ननाशिनि' ख. पाठः । ५ 'महोत्साहे' ख. पाठः । ६ 'इ' क. पाठः । ७ 'ये' क. पाठः । ८ 'स' क. पाठः । ९ 'र्धां वा' ख. पाठः ।

यदि क्रीडापरास्तास्तु भवन्ति भाग्ययोगतः ।
क्री(डाय?डये)त् क्रीडनैः सर्वाः क्रीडारसपरायणाः ॥३९॥
तस्मात् सर्वप्रयत्नेन रक्षितव्याः सदा प्रिये ।
यथा तु नमिताः प्राज्ञे भक्तिभावपरायणैः ॥ ४० ॥
स्वेच्छाकृतुमती या स्याद्गृहीत्वा रक्तमुत्तमम् ।
रोचनाचन्द्रकाश्मीरकस्तूर्यगुरुसंयुतम् ॥ ४१ ॥
स्वयंभूकुसुमं दिव्यं फलं वा दिव्यमेव च ।
गृहीत्वा पूजयेद् देवीं महात्रिपुरसुन्दरीम् ॥ ४२ ॥
कुण्डगोलोद्भवं वापि नान्यत्र कुसुमं भवेत् ।
मद्यं मांसं मुद्रा शक्तिः स्वयंभूकुसुमं तथा ॥ ४३ ॥
एभिरेव महेशानि प्रत्यक्षीक्रियते परा ।
द्रव्यसंशोधनं कृत्वा शक्तिशोधनसंभवैः ॥ ४४ ॥
संपूज्य त्रिपुरां देवीमसाध्यमपि साधयेत् ।
अन्या यदि न गच्छन्ति निजकन्यानुजात्मनः ॥४५॥
अग्रजा मातुलानी तु माता वा तत्सपत्निका ।
वयसा जातितो वापि हीना रक्ष्याः स्वसा यथा ॥ ४६ ॥
पूज्याः कुलवरैः सर्वैर्निजाहंकारवर्जितैः ।
स्वयमक्षोभितो भूत्वा मूलयोगं न चाचरेत् ॥ ४७ ॥
मूलयोगकृतामायुःसिद्धोऽपि नश्यति ध्रुवम् ।
सर्वाभावे ह्येकतरा पूजनीया प्रयत्नतः ॥ ४८ ॥
संस्कृतासंस्कृता वापि बन्धकी वाथ निष्पतिः ।

---

१ 'त्मजा' क. पाठः ।

पूर्वाभावे परा ज्ञेया तदंशा योषितो यतः ॥ ४९ ॥
एका चेत् कुलशास्त्रज्ञा लभ्या[1] कुलविशारदैः ।
पूजार्हा सा त(रा?दा)देवि भोगमोक्षप्रसाधिका ॥५०॥
एका च युवती यत्र पूजिता चावलोकिता ।
तदा देव्यश्च सर्वाश्च पूजितं सर्वदैवतम् ॥ ५१ ॥
इति ते कथितं देवि न प्रकाश्यं कदाचन ।



इति श्रीगन्धर्वतन्त्रे पार्वतीश्वरसंवादे कुमारीपूजनविधाननिरूपणं त्रयोविंशः पटलः ॥ २३ ॥

१ 'भ्यते' क. पाठः ।



# चतुर्विंशः पटलः ।

ईश्वर उवाच

एवं यः कुरुते पूजां नित्यं भक्तियुतो बुधः ।
कन्दर्पसदृशः स्त्रीषु गौरीपतिरिवापरः ॥ १ ॥
स एव सुकृती लोके स एव कुलभूषणम्[1] ।
धन्या च जननी तस्य धन्यस्तस्य पिता खलु ॥ २ ॥
दैवी कला भवेत् तत्र मम तुल्यो महामतिः ।
अणिमाद्यष्टसिद्धीशो जायते नात्र संशयः ॥ ३ ॥
वह्निरिव रिपोर्हन्ता इन्दुरिव सुखप्रदः ।
पितृदेवसमः शास्ता शुचौ शुचिसमः खलु ॥ ४ ॥
बृहस्पतिसमो वक्ता धरणीसदृशः क्षमी ।
वक्त्रे सरस्वती तस्य लक्ष्मीस्तस्य सदा गृहे ॥ ५ ॥
तीर्थानि तस्य देहे वै नच तस्य पुनर्भवः ।
धनेन धननाथः स्यात् तेजसा भास्करोपमः ॥ ६ ॥
बलेन पवनो ह्येष दानेन वासवोपमः ।
गानेन तुम्बुरुः साक्षान्नित्यं येन समर्चिता ॥ ७ ॥
एकाहमपि देवेशि महात्रिपुरसुन्दरीम् ।
न पूजयेत्तथा(नस्यात्? तस्मात्)प्रायश्चित्तं समाचरेत् ॥ ८ ॥
उपोष्यैव चाधिवासं कृत्वा पूजां परेऽहनि ।

---

१ 'णः' ख. पाठः ।

गुरुं संपूज्य विधिवत् तदा पूजां समापयेत् ॥ ९ ॥
कुमार्यै भोजनं दत्त्वा विप्रानपि च भोजयेत् ।
अत ऊर्ध्वं पुनर्दीक्षां लक्षजापं समाचरेत् ॥ १० ॥
महात्रिपुरसुन्दर्या योगिनीनां तथैव च ।
द्व्यहं वाथ त्र्यहं वापि पूजाशून्यं करोति यः ॥ ११ ॥
सिद्धिहानिर्भवेत् तस्य योगिनीशापमालभेत् ।
चत्वारि तस्य नश्यन्ति आयुर्विद्या यशो बलम् ॥ १२ ॥
तस्य मांसं च शुक्रं च रूपशोणितमेव च ।
अभीष्टानपि कामांश्च हिंसन्ति योगिनीगणाः ॥ १३ ॥
बन्धुभिः कलहो घोरः कलत्रैश्च विशेषतः ।
सस्यशून्या भवेदुर्वी विघ्नस्तस्य पदे पदे ॥ १४ ॥
सत्यं सत्यं भवेद्रोगी दरिद्रश्चोपजायते ।
इहैव दुःखमाप्नोति त्रिविधं लोमहर्षणम् ॥ १५ ॥
परे स्वर्गात् परिभ्रष्टः क्षितौ क्षितिप[ला?ना]यकः ।
अतुलां भक्तिमासाद्य कैवल्यं लभते ततः ॥ १६ ॥
ब्रह्मचिन्ताप्रवृत्तो यः सोऽपहाय च दैवतम् ।
विना(ल?न)या प्रवर्तेत ब्रह्मघाती स एव तु ॥ १७ ॥
जपध्यानपरो मन्त्री योगक्षेमपरायणः ।
स्वयं यदि भवेन्मूढो गुरुं तत्र नियोजयेत् ॥ १८ ॥
ज्ञानकर्मपरः शुद्धः सर्वदेवमयः प्रभुः ।
सिद्धयः सकलास्तस्य गुरुर्यस्य हिते रतः ॥ १९ ॥
मासतो वर्षतो वापि स्वयं पुण्याहयोगतः ।

कुर्याद्वै महतीं पूजां संपन्नाङ्गविभूषिताम् ॥ २० ॥
उपहारैर्बहुविधैरलंकृतसुविग्रहाम् ।
नित्यमेवार्चनं देव्या नित्यमेव समाचरेत् ॥ २१ ॥
नित्याचारपरो मन्त्री नैमित्तिकवि(धं?धिं) चरेत् ।
नित्यनैमित्तिकपरः साधुः काम्यं विचिन्तयेत् ॥ २२ ॥
काम्यान्नैमित्तिकं नित्यं नित्यं नैमित्तिकात् परम् ।
नित्याचारविलोपी यः काम्यं नैमित्तिकं च वा ॥ २३ ॥
करोति स च दुर्मेधा नाप्नोति तस्य तत्फलम् ।
नित्याचारमनादृत्य यदन्यत्तु समीहते ॥ २४ ॥
निष्फलं तस्य तत्कर्म वन्ध्यास्त्रीमैथुनं यथा ।
अपि पुष्पफलैर्वापि पूजयेच्चक्रदेवताः ॥ २५ ॥
अङ्गहीनं तु पुरुषो न सम्यग्याज्ञिको भवेत् ।
अङ्गहीना तथा पूजा न सम्यक्फलदायिनी ॥ २६ ॥
ध्यानं पूजा जपो होम इति हस्तचतुष्टयम् ।
शरीरं न्यासजालं तु आत्मा तज्ज्ञानमेव च ॥ २७ ॥
भक्तिः शिरोऽत्र हृच्छ्रद्धा कौशलं नेत्रमीरितम् ।
एवं यज्ञशरीरं तु मत्वा साधकसत्तमः ॥ २८ ॥
यज्ञं समापयेन्नित्यं साङ्गमेवं खलु प्रिये ।
अङ्गहीने महान् दोषस्ततोऽङ्गं नावधीरयेत् ॥ २९ ॥
सर्वाङ्गपूर्णपुरुषो यज्ञाख्यः सर्वसिद्धिदः ।
तत्तदीहापरा शक्तिः सिद्धिः संयोगतस्तयोः ॥ ३० ॥

---

१ 'कर्मेव वा' ख. पाठः । २ 'साङ्गेनैव' ख. पाठः । २ 'पूर्णयज्ञः' क. पाठः ।

श्रीमत्त्रिपुरसुन्दर्याः पूर्णे यज्ञशरीरके ।
अङ्गबाधे यथा दोषो नान्यस्य हि तथा भवेत् ॥३१॥
स्वविभवा(न्न?नु)रूपा वै पूजा कार्या विभूतये ।
व्यतिक्रमात् तु हीनः स्याद् ब्रह्महत्यामवाप्नुयात् ॥३२॥
नाधिकं नैव च न्यूनमुभयं पापदायकम् ।
चतुर्दश्यामथाष्टम्यां पूर्णायां मासमध्यतः ॥ ३३ ॥
महाभूतदिने वापि यजेद् विभवविस्तरम् ।
कृष्णायाथ चतुर्दश्या युक्तं कुजादिनं यदा ॥ ३४ ॥
महाभूतदिनं तत्तु सर्वभूतवशंकरम् ।
यदि पुष्यो[1] भवेत् तत्र तदानन्तफलप्रदम् ॥ ३५ ॥
मन्त्रं यदि श्मशाने तु शवोपरि यथाविधि ।
अथवा प्रजपेद् देवीं मातृकां नीलरूपिणीम् ॥ ३६ ॥
कृत्वा जप्त्वा तदा कुर्याद् भूतप्रेतपिशाचकान् ।
तान् वशीकृत्य तल्लोके तथेह तैः सहा(स?ग)तः ॥३७॥
वशीकृत्य श्रिया युक्तो मोदते पुत्रपौत्रकैः ।
यथा तथा गृहे बाह्ये कृत्वा जप्त्वा नरो बुधः ॥३८॥
राक्षसान् किंनरान् कृत्वा तल्लोके च तथेह च ।
तैश्च प्रमुदितो भोगी भोगान् भुङ्क्ते यथेच्छया ॥३९॥
निजगृहे सदा यस्तु पवित्रे सुमनोहरे ।
कृत्वा जप्त्वा नरः प्राज्ञो यक्षान् सर्वान् वशं नयेत् ॥४०॥
भुक्त्वा च मुदितो लोके धनी धनविशारदः ।

१ 'प्या' ख. पाठः ।

धनप्राणो धनात्मा च सुखं तदनुचिन्तनात् ॥ ४१ ॥
अनुभूय तदानन्दं तादिहापि विराजते ।
नदीनदसमीपे तु पितृपीठेऽथवा प्रिये ॥ ४२ ॥
कृत्वा जप्त्वा च तल्लोके तथेह तैः प्रमोदितः ।
कामात्मा कामरूपी च कामी काममनोहरः ॥ ४३ ॥
कामयित्वाखिलान् कामान् कामराज इवापरः ।
राजते सततं राजा राजभिश्चैव वाजिभिः ॥ ४४ ॥
पुण्यक्षेत्रे महापीठे पुण्यवृक्षसमीपके ।
कृत्वा जप्त्वा नरो मानी मान्योऽयं यमलोकराट् ॥४५॥
सर्वदा[युञ्जते?यं जयी]लोके राजते सिद्धिभूमिषु ।
मानुषत्वं विना सिद्धिः पुनः परमदुर्ल[भं?भा] ॥४६॥
यस्मात् तत् सर्वलोकानां भोगप्रत्यक्षदायकम् ।
प्रफुल्लकुसुमाकीर्णे उद्यानेऽतिमनोहरे ॥ ४७ ॥
प्रफुल्लकुन्दसंमोदप्रपूरितदिगन्तरे ।
वृक्षमूलेऽथवा जप्त्वा कृत्वा हस्तं स्वमस्तके ॥ ४८ ॥
गन्धर्वरूपवान् भूत्वा गीतनृत्यविशारदः ।
गन्धर्वान् किंनरान् कृत्वा तल्लोके च तथेह तैः ॥ ४९ ॥
आनन्दं परमं लब्ध्वा गीतनृत्यादिगोचरम् ।
तदानन्दमये रम्ये मोदते तत्प्रसादतः ॥ ५० ॥
नागलोकसंधिभूमौ वने गिरिगुहासु च ।
कृत्वा जप्त्वा सदा देवीं नागान् सर्वान् वशं नयेत् ॥५१॥

---

१ 'द्व' ख. पाठः ।

तैः[1] सह मुदितः प्राज्ञस्तल्लोके च तथेह च ।
भुङ्क्ते बहुविधान् भोगान् नागलोकप्रतिष्ठितान् ॥ ५२ ॥
परकीये यदा यत्र पश्यन्नच्छविलोकिते(?) ।
कृत्वा जप्त्वा नरो धर्मादाद्वरं लोकमाप्नुयात् ॥ ५३ ॥
तानेव वशगान् कृत्वा तल्लोके च तथेह च ।
मोदते सततं वीरः सुरासुरविचेष्टितैः ॥ ५४ ॥
यत्र कुत्र महापीठे सौरे सूर्यविलोकने ।
कृत्वा जप्त्वा महातेजा भवरोगतमोपहः ॥ ५५ ॥
उदेति सविता सूर्यः सूर्यलोके तथेह च ।
वने सर्वान् वशे कृत्वा वशी वशं नयेज्जगत् ॥ ५६ ॥
पुण्यनद्यां[2] जलान्ते यस्तदन्तर्वा[3] निरन्तरम् ।
सदा पुण्यज(न?ल)स्नायी तत्पायी तद्विहारवान् ॥ ५७ ॥
कृत्वा जप्त्वा नरः प्राज्ञो ब्रह्मर्षिलोकसंज्ञके ।
ब्रह्मर्षिभिर्मुदा तत्र तथेह तैः[4]प्रसादतः ॥ ५८ ॥
भोगान् भुङ्क्ते स[5] विप्रर्षिब्रह्म[6]घोषपुरःसरान् ।
महत्या च(प्रि?श्रि)या युक्तो ब्राह्मया चैवातिशुद्धया ॥ ५९ ॥
राजते सततं राजा (रा?वा)जिराजविहारवान् ।
देवतायतने [ध?पु]ण्ये नित्यपूजागृहे तथा ॥ ६० ॥
देवताः प्रतिगृह्णन्ति देवतायतने कृ[ताः?ताम्] ।
उद्याने स्वस(मां?मी)पस्थे गृहे चातिमनोहरे ॥ ६१ ॥

---

१ 'तैः स प्रमु' ख. पाठः । २ 'पुण्यानद्री' ख. पाठः । ३ 'न्ते वा' ख. पाठः ।
४ 'ते प्र' ख. पाठः । ५ 'भंक्ते सविप्रं भोगान्' ख. पाठः । ६ 'ब्राह्मया' ख. पाठः ।

नित्यमावाहयेत् तत्र मधुपर्कादिभिर्यजेत् ।
देवांस्तत्र विजानीयात् तेषां सांनिध्ययोगतः ॥ ६२ ॥
देवताभवनैस्तुल्ये शोभिते देवशोभया ।
निर्जने चातिशुद्धे च गन्धधूपोत्करे शुभे ॥ ६३ ॥
दीपदर्पणघण्टादिकुसुमोत्करभूषिते ।
देवपीठे महापुण्ये मह(दु?त्यु)च्चगृहे तथा ॥ ६४ ॥
कृत्वा जप्त्वा नरो देवि कारयेद्वशगान् सदा ।
भावनावशसंपन्नो नरो दि(व्यो?वि)तथेह च ॥ ६५ ॥
दीव्यते देववद् देवो देवभोगैर्विहारवान् ।
दिव्यदर्शी दिव्यरूपी दिव्यभोगविहारवान् ॥ ६६ ॥
देवैः संमानितो मानी देववद्विहरेत् च्चितौ ।
विमानगामिभिर्यानैर्गजवाजिपुरःसरैः ॥ ६७ ॥
शिवालये शिवक्षेत्रे शिवलिङ्गसमीपके ।
कृत्वा जप्त्वा शिवामोदी शिवलोके तथेह च ॥ ६८ ॥
मोदते सततं योगी युक्तः शिवदकिंकरैः ।
विष्णुक्षेत्रे महापुण्ये विष्णुगेहे तदन्तिके ॥ ६९ ॥
वैष्णवं भावमाश्रित्य कृत्वा जप्त्वाथ साधकः ।
वैष्णवान् वशगान् कृत्वा विष्णुलोके तथेह च ॥ ७० ॥
मोदते सततं शुद्धः स्वयं विष्णुरिवापरः ।
विष्णुपीठे परा सिद्धिः सद्यो देवत्वदायिनी ॥ ७१ ॥

इति श्रीगन्धर्वतन्त्रे पार्वतीश्वरसंवादे कुमारीपूजामहिम-प्रयोगादिमाहात्म्य-निरूपणं चतुर्विंशः पटलः ॥ २४ ॥

---

१ 'गी' क. पाठः ।

## पञ्चविंशः पटलः ।



ईश्वर उवाच

पुण्यक्षेत्राणि वक्ष्यन्ते शृणु प्राधान्यतो मम ।
पुण्यक्षेत्रं नदीतीरं गुहापर्वतमस्तकम् ॥ १ ॥
तीर्थप्रदेशाः सिन्धूनां संगमः पावनं वनम् ।
उद्यानानि विविक्तानि बिल्वमूलं तटं गिरेः ॥ २ ॥
तुलसीकाननं गोष्ठं वृषशून्यं शिवालयम् ।
अश्वत्थामलकीमूलं गोशाला जलमध्यतः ॥ ३ ॥
देवतायतनं कूलं समुद्रस्य निजं गृहम् ।
गुरूणां संनिधानं च चित्तैकाग्रस्थलं तथा ॥ ४ ॥
सर्वेषामुत्तमं प्रोक्तं निर्जनं पशुवर्जितम् ।
यत्र तत्र नरः पूजां निर्जने कुरुते तु यः ॥ ५ ॥
तस्यै दत्ते शुभं देवि पत्रं पुष्पं फलं जलम् ।
श्रद्धाभ[क्ता?क्त्यो]श्च बाहुल्यात् पूजाद्रव्यस्य विस्तरात् ॥६॥
देव्याः संनिधिरत्र स्यान्निर्जने पूजनात् तथा ।
वाराणस्यां सदा पूजा संपूर्णफलदायिनी ॥ ७ ॥
ततस्तु द्विगुणा प्रोक्ता पुरुषोत्तमसंनिधौ ।
ततोऽपि द्विगुणा प्रोक्ता द्वारवत्यां विशेषतः ॥ ८ ॥
सर्वक्षेत्रेषु पीठेषु पूजा द्वारवतीसमा ।
विन्ध्ये शतगुणा प्रोक्ता गङ्गायामपि तत्समा ॥ ६ ॥

आर्यावर्ते मध्यदेशे ब्रह्मावर्ते[1] तथैव च ।
विन्ध्यवत् फलदा पूजा प्रयागे पुष्करे तथा ॥ १० ॥
ततश्चतुर्गुणा प्रोक्ता करतोयानदीजले ।
तस्माच्चतुर्गुणफला नन्दिकुण्डे च पार्वति ॥ ११ ॥
ततश्चतुर्गुणा प्रोक्ता जल्पीशे[2]श्वरसंनिधौ ।
तत्र सिद्धेश्वरीयोनौ ततोऽपि द्विगुणा मता ॥ १२ ॥
ततश्चतुर्गुणा प्रोक्ता लौहित्यनदपाथसि ।
तत्समा कामरूपे च सर्वत्रैव जले स्थले ॥ १३ ॥
सर्वश्रेष्ठो यथा विष्णुर्लक्ष्मीः सर्वोत्तमा यथा ।
देवीपूजा तथा शस्ता कामरूपे सुरालये ॥ १४ ॥
देवीक्षेत्रं कामरूपं विद्यतेऽन्यन्न तत्समम् ।
अन्यत्र विरला देवी कामरूपे गृहे गृहे ॥ १५ ॥
ततः शतगुणा प्रोक्ता नीलकूटस्य मस्तके ।
ततोऽपि द्विगुणा प्रोक्ता हारके शिवलिङ्गके ॥ १६ ॥
ततोऽपि द्विगुणा प्रोक्ता दाक्षायण्याः स्त्रयोनिषु ।
ततः शतगुणा प्रोक्ता[3] कामाख्यायोनिमण्डले ।
कामाख्यायां महादेवीपूजां यः कृतवान् सकृत् ॥ १७ ॥
स चेह लभते कामान् परत्र शिवरूपता(म) ।
न तस्य सदृशोऽन्योऽस्ति रिपुस्तस्य न विद्यते ॥१८॥
वाञ्छितं समवाप्नोति चिरायुरभिजायते ।
वायोरिव गतिस्तस्य भवेदन्यैरबाधिता ॥ १९ ॥

---

१ 'ह्मदेशे' क. पाठः । २ 'ल्रे' ख. पाठः । ३ 'एं प्रेक्तं' ख. पाठः ।

संग्रामे शास्त्रवादे च दुर्जयः स हि जायते ।
मूलमूर्तिर्महादेव्या योनिरूपा निगद्यते ॥ २० ॥
तत्र संपूज्य तां देवीं पुनर्जन्म न विद्यते ।
पुण्यक्षेत्रमिति प्रोक्तं न प्रकाश्यं कदाचन २१

देव्युवाच

संग्रामे सूतके चैव रोगभीतौ तथापदि ।
तदा किं स्यान्महादेव तदिह कथयस्व मे ॥ २२ ॥

ईश्वर उवाच

अशौचं साधकेन्द्राणां नास्ति रोगभयं तथा ।
शुचीनां धर्मचर्याणामापदामुद्भवः कुतः ॥ २३ ॥
यदि विघ्नो भवेद् देवि पूर्वकर्मनिबन्धनात् ।
तदैवं परमेशानि विधिं कुर्याद्विचक्षणः ॥ २४ ॥
गन्धं पुष्पं च धूपं च दीपं नैवेद्यमेव च ।
एतैर्हीना तु या पूजा न सा कल्याणदायिनी ॥२५॥
पुष्पाञ्जलिं विधायाथ पूजयेच्चक्रदेवताः ।
अष्टकोणं त्रिकोणं वा बैन्दवं परिपूजयेत् ॥ २६ ॥
एवं कृत्वा जपेद्विद्यां समर्प्य च विसर्जयेत् ।
कुमार्यै भोजनं दत्त्वा संपूर्णफलभाग् भवेत् ॥ २७ ॥
अथवाद्वैतभावेन आत्मानं तन्मयं स्मरेत् ।
अद्वैतभावसंपन्नास्त्रिपुरीकृतविग्रहै[1]ः ॥ २८ ॥
आत्मन्येव यजेद् देवीमुपचारैर्यथाविधि ।

---

१ 'हे' ख. पाठः ।

निजदेहाख्ययन्त्रं तु सर्वयन्त्रात् परं शिवम् ॥ २९ ॥
आनन्दह्रदयं कृत्वा स(दोन्ना?दा न्या)सेन मानवः ।
गुरून् नुत्वा विधानेन जपेद्विद्यामनन्यधीः ॥ ३० ॥
सुगन्धिपुष्पमालाभिः स्वर्णालंकारभूषणैः ।
स्निग्धं सुमधुरं यन्त्रं कामरूपं मनोहरम् ॥ ३१ ॥
कृत्वा सुमङ्गलं देहे मृदुभाषणसस्मितम् ।
अहिंसावृत्तिमाश्रित्य सर्वप्राणिहिते रतः ॥ ३२ ॥
निजभावे सदा तिष्ठद् देववद्विहरेत् क्षितौ ।
दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ॥ ३३ ॥
वीतरागभयक्रोधो मनोऽहंकारवर्जितः ।
योषिदन्ते पुरश्चर्या कार्या रात्रौ नचान्यथा ३४
मनस्तुष्टौ समुत्पा(न्ने?ते) सिंहव्याघ्रसमाकुले !
परसैन्यागमे वापि कुर्यान्मानसपूजनम् ॥ ३५ ॥
कारागारानिबन्धे वा पूजाद्रव्यविहीनकः ।
इदं रहस्यं परममिदं स्वस्त्ययनं महत् ॥ ३६ ॥
मन्त्रवेदमयं शुद्धं पूजाक्रममनुत्तमम् ।
गोपयेद् यत्नतो दिव्यं सर्वसिद्धिप्रदायकम् ॥ ३७ ॥
ज्ञानदं कामदं श्रेष्ठं सद्यः प्रत्ययकारकम् ।
यस्मै कस्मै न दातव्यं नास्तिकाय कदाचन ॥ ३८ ॥
एतज्ज्ञानात् परं ज्ञानी सद्यो भवति तत्क्षणात् ।

देव्युवाच

कथं तन्मानुषे लोके लोकानां दर्शनं भवेत् ॥ ३९ ॥

तत्कथय महादेव लोकदेशविभेदतः ।

ईश्वर उवाच

मानुषे[1] भारतं श्रेष्ठं तत्र च पुण्यदेशकम् ॥ ४० ॥
लोकाः पुण्यपराः श्रेष्ठास्तेषां ज्ञानी विशिष्यते ।
ज्ञानपुण्यविहीनास्तु पिशाचा भोगतत्पराः ॥ ४१ ॥
पशुप्रायजना म्लेच्छाः प्रेतलोकनिवासिनः ।
तदस्तीति प्रमाणेन जानाति[2] न समीहते ॥ ४२ ॥
भुङ्क्ते बहुविधान् भोगान् भूतलोकप्रमाणकः ।
भक्ष्याभक्ष्यं न जानान्ति कार्याकार्यमथापि वा ॥ ४३ ॥
वर्तन्तेऽविधिना यज्ञे भोगैर्मधुपुरस्कृतैः ।
ते पुनरिह देवेशि निशाचरप्रमाणकाः ॥ ४४ ॥
जीवनं धनमेवात्र धनचिन्तारापरायणाः[3] ।
धनसंचयकारी च दानभोगबहिष्कृतः ॥ ४५ ॥
शिश्नोदरसुखे[4] यस्तु केवलं वर्तते जनः ।
यक्षलोकप्रमाणी च यक्षलोके महीयते ॥ ४६ ॥
सदाचारमये देशे सदाचारविहारवान् ।
अरोगो रूपवान् भोगी पितृलोके महीयते ॥ ४७ ॥
मध्यदेशे महापुण्ये देवनदीसमन्विते ।
पूज्यपूजकभावेन यज्ञायज्ञविशारदः ॥ ४८ ॥
शुद्धान्तःकरणो विज्ञो मानुष[5]लोकसूचकः ।

---

१ 'षं' ख. पाठः । २ 'नन्ति' ख. पाठः । ३ 'णाः' ख. पाठः । ४ 'सु' ख. पाठः । ५ 'षो' ख. पाठः ।

भोगमोक्षप्रदे शुद्धे कृष्णामृगविचेष्टिते ॥ ४६ ॥
कर्तव्यमिति सर्वाणि श्रुतिस्मृतिमयानि च ।
कुरुते सततं भोगी दानभोगपरायणः ॥ ५० ॥
देववद् विहरेल्लोके देवलोकप्रमाणकः ।
अथ त्रिगुणरूपिण्याः पीठे त्रैगुण्यहारिणि[1] ॥५१॥
महादेव्या महापुण्ये गुह्ये वा प्रकटेऽपि च ।
निरानन्दैरथानन्दैर्[2]दक्षिणोत्तररूपकैः ॥ ५२ ॥
अतदात्मा तदात्मा च योगी वा भोगसंयुतः ।
निस्त्रैगुण्यो भवेद् देवि महादेवीप्रसादतः ॥ ५३ ॥

---

इति श्रीगन्धर्वतन्त्रे पार्वतीश्वरसंवादे पुण्यपीठ–आपत्कालपूजादिविधि-
निरूपणं पञ्चविंशः पटलः ॥ २५ ॥

---

१ ' निस्त्रैगुण्यदायके ' क. पाठः । २ ' थवा ' क. पाठः ।

## षड्विंशः पटलः ।

देव्युवाच

कीदृशो वा भवेच्छिष्यः कीदृशो वा भवेद्गुरुः ।
कीदृशी वा भवेद् दीक्षा कथं कुर्याद्वद प्रभो ॥ १ ॥

ईश्वर उवाच

अथ दीक्षां प्रवक्ष्यामि मन्त्रिणां हितकाम्यया ।
विनानया न चैव स्यात् सर्वमन्त्रफलं यतः ॥ २ ॥
ज्ञानं दिव्यं यतो दद्यात् कुर्यात् पापक्षयं यतः ।
अतो दीक्षेति सा प्रोक्ता गुरुशिष्यौ वदामि ते ॥ ३ ॥
आदौ विद्यावतारोऽयं दक्षिणामूर्तिरव्ययः ।
गुरुर्भूत्वैव भगवान् महाविद्यां ददाति वै ॥ ४ ॥
दिव्यो गुरुर्ऋषिः सोऽथ दिव्यां विद्यां प्रकाश्य च ।
दिव्यौघान् अकरोच्छिष्यान् वक्ष्येऽथ शृणु पार्वति ।
प्रकाशोऽथ विमर्षो(र्शो)ऽन्यस्त्वानन्दोऽपर इत्यपि ॥ ५ ॥
नामभेदादहं लोकेऽकल्पयं दिव्यरूपतः ।
त्रयस्तेभ्यः समुत्पन्नाः सिद्धाश्च त्रय एव ते ॥ ६ ॥
ज्ञानं सत्यं पूर्ण इति श्रीमुखास्ते समीरिताः ।
दिव्या मदन्तिके नित्यं सिद्धा भूमाविहापि च ॥ ७ ॥
निवसन्ति ततस्तेभ्यः समभूवंस्त्रयस्तथा ।
स्वभावः प्रतिभस्तद्वत् सुभगश्चेति नामतः ॥ ८ ॥

---

१ 'स्व' क. पाठः ।

ते भूमावेव सततं निवसन्ति मदात्मकाः ।
प्रसन्नवदनाः सर्वे वराभयकरान्विताः ॥ ९ ॥
द्विनेत्रा द्विभुजा एते ललिताकारसंयुताः ।
मायालक्ष्म्यादिकास्तद्वदाख्या आनन्दनाथगाः ॥ १० ॥
नवानां नवनामानि नवार्णानि पृथक् पृथक् ।
तानि सप्ताक्षरीयोगात् प्रत्येकं षोडशाक्षरम् ॥ ११ ॥
नित्याषोडशरूपाणि तानि ज्ञेयान्यनुक्रमात् ।
विमला जयिनी मध्ये पूज्या एवं वरानने ॥ १२ ॥
नाम पर्यायतः प्राप्तं कालावाप्तमिति द्वयम् ।
प्रसिद्धं बाह्यतोऽन्यच्च त्रीणि नामानि साधके ॥ १३ ॥
मनुष्यरूपसंप्राप्तः सर्वतन्त्रार्थतत्त्ववित् ।
मन्त्रतन्त्रावता(बोध?राय)विचराम्यहमेव सः ॥ १४ ॥
गुरुः शाक्तो भवेद् च्छ्वै तदन्यो विपरीतदः ।
गुरुः सर्वगुणोपेतो दोषैरस्पृष्टमानसः ॥ १५ ॥
अरोगी नातिवृद्धश्च(स?सु)वचा मि(ख?ष्ट)भाषणः ।
सुन्दरः सुमुखः स्वच्छस्त्वलोभी[1] बहुमन्त्रवित् ॥ १६ ॥
असंशयः संशयच्छिन्निग्रहानुग्रहे प्रभुः ।
निर्द्वन्द्वो निरहंकारः सत्यवादी दृढव्रतः ॥ १७ ॥
आश्रम्याश्रमधर्मज्ञो मात्सर्यरहितः शुचिः ।
अबहुमन्त्रदो वाग्मी जपपूजापरायणः ॥ १८ ॥
सर्वतन्त्रार्थवेत्ता च दयावान् नच हिंसकः ।

---

१ 'सुलभो' ख. पाठः ।

यदृच्छालाभसंतुष्टः शान्तो नियमवानृजुः ॥ १९ ॥
स्मेरपूर्वाभिभाषित्वं स्वच्छताऽजि(च?ह्म)वृत्तिता ।
संतोषित्वमगर्वित्वमलोभित्वमनिन्दिता ॥ २० ॥
अपत्त्वंमवित्तेच्छा गुरुत्वं हितवादिता ।
एवंविधो गुरुर्ज्ञेयस्त्वितरः शिष्यदुःखदः ॥ २१ ॥
यथायोग्यगुणैः पूर्वैर्युक्तश्चातिप्रियंवदः ।
विशुद्धदेहवदनः शुद्धाम्बरधरः शुचिः ॥ २२ ॥
विमुखः परनिन्दासु देवतादर्शनेषु च ।
परान्नवनिताभूमिपीडासु विगतस्पृहः ॥ २३ ॥
दयान्वितः सर्वजने प्रेक्षाकारी जितेन्द्रियः ।
आस्तिको गुरुभक्तश्च शुद्धि(वा?मा)न् सुस्थिराशयः ॥ २४ ॥
अलुब्धः स्थिरमैत्रश्च गुरुवाक्यप्रमाणकः ।
सर्वदा दृढभक्तिश्च गुरौ मन्त्रे सदैवते ॥ २५ ॥
एवंविधो भवेच्छिष्यस्त्वितरो दुःखकृद्गुरोः ।
दीक्षाकालं विनिश्चित्य मुहूर्ते दोषवर्जिते ॥ २६ ॥
गुरुं समाश्रयेच्छिष्यः प्रसादाय समाहितः ।
प्रसीद नाथ देवेति तथेति च कृतादरः ॥ २७ ॥
प्रणम्योपविशेत् पार्श्वे तथा गच्छेदनुज्ञया ।
मुखावलोकी सेवेत कुर्यादादिष्टमादरात् ॥ २८ ॥
असत्यं न वदेदग्रे न बहु प्रलपेदपि ।
कामं क्रोधं तथा लोभं मानं प्रहसनं स्तुतिम् ॥ २९ ॥

१ 'नैरपेक्ष्यं' क. पाठः ।

चापलानि च जि(ह्वा?ह्मा)नि कार्याणि परिदेवनम् ।
ऋणादानं तथादानं वस्तूनां क्रयविक्रयम् ॥ ३० ॥
न कुर्याद् गुरुणा सार्धं शिष्योऽपि च कदाचन ।
यतो गुरुः शिवः साक्षात्तं स्तुवन् प्रणमन् (त्य?भ)जेत् ॥३१॥
यथा देवे तथा मन्त्रे यथा मन्त्रे तथा गुरौ ।
यथा गुरौ तथा चात्मन्येवं भक्तिक्रमः प्रिये ॥ ३२ ॥
अवमन्य गुरोर्वाक्यं स्वबुद्ध्या कुरुते तु यः ।
न कदाचिद्भवेत् सिद्धिर्मन्त्रैर्देवप्रपूजनैः ॥ ३३ ॥
मन्त्रेण तस्य नियतं पूजां कुर्याद्यथोदितम् ।
आसनं शयनं वस्त्रं भूषणं पादुकां तथा ॥ ३४ ॥
छायां कलत्रमन्यच्च यद् गुरोस्तत् प्रपूजयेत् ।
गु[रु?रोः]शय्यासनं पीठमुपानच्छत्रपादुकाम् ॥ ३५ ॥
स्नानोदकं तथा छायां लङ्घयेन्न कदाचन ।
गुरुं दृष्ट्वा भवेद् हृष्टः परमानन्दनिर्भरः ॥ ३६ ॥
भीतभीतः पदाम्भोजं पश्येच्चकितलोचनः ।
(उो?उ)पदीकृत्य सर्वस्वं तदादिष्टं मुदान्वितः ॥ ३७ ॥
कुर्यात् सर्वप्रयत्नेन यथा तुष्टो भवेत् तु सः ।
सकृत् प्रणम्य दण्डवदिष्टदेवधिया गुरुम् ॥ ३८ ॥
पुलकाञ्चितसर्वाङ्गः पूजाकोटिफलं लभेत् ।
यद्यत् प्रियतमं वस्तु भक्त्या तस्मै निवेदयेत् ॥ ३९ ॥
अदत्त्वा गुरवे वस्तु यत्किंचिदिह भूतले ।
आत्मसात् कुरुते यस्तु स भवेद्योगिनीप(तिः?शुः) ॥ ४० ॥

यदेव लभ्यते वस्तु भिक्षया वान्यचेष्टया ।
तन्निवेद्य तदादिष्टं स्वयं भुञ्जीत सादरम् ॥ ४१ ॥
इदमेव हि सच्छिष्यैः कर्तव्यं गुरुनिष्कृतिः ।
येन विशुद्धभावेन सर्वथात्मार्पणं गुरौ ॥ ४२ ॥
गुरुता शिष्यता चैव तयोर्वत्सरकालतः ।
दापयेत् स्वकृतं दोषं पत्नी पापं स्वभर्तरि ॥ ४३ ॥
तथा शिष्यार्जितं पापं गुरुमाप्नोति निश्चितम् ।
सद्गुरुः स्वाश्रमे शिष्यं वर्षमेकं परीक्ष्य वै ४४
दीक्षाकालं ततः प्राज्ञो भावयेत् सुसमाहितः ।
शरत्काले च वैशाखे दीक्षा श्रेष्ठफलप्रदा ॥ ४५ ॥
फाल्गुने मार्गशीर्षे च ज्यैष्ठे दीक्षा च मध्यमा ।
आषाढो माघमासश्च कनिष्ठौ सद्भिरादृतौ ॥ ४६ ॥
निन्दितः श्रावणश्चैत्रः पौषो भाद्रपदस्तथा ।
निन्दितेष्वपि मासेषु दीक्षोक्ता ग्रहणे शुभा ॥ ४७ ॥
विषुवायनयोर्द्वन्द्वे आषाढे मदनोत्सवे ।
ग्रहणेऽर्कस्य चेन्दोर्वा दिनं तत्फलदं भवेत् ॥ ४८ ॥
मन्त्रारम्भं सुधीः कुर्याच्छुक्लपक्षे शुभेऽहनि ।
रवौ गुरौ सिते सोमे कर्तव्यं बुधवासरे ॥ ४९ ॥
पूर्णिमा पञ्चमी चैव द्वितीया सप्तमी तथा ।
त्रयोदशी च दशमी प्रशस्ता सर्वकामदा ॥ ५० ॥
पञ्चाङ्गशुद्धदिवसे स्वोदये राशितारयोः ।

---

१ 'दै' क. पाठः ।

गुरुशुक्रोदये शुद्धे लग्ने द्वादशशोभिते ॥ ५१ ॥
चन्द्रतारानुकूले च स्थिरे दीक्षा शुभा प्रिये ।
त्रिविधा सा भवेद् दीक्षा मान्त्री शाक्ती च शांभवी ॥५२॥
मन्त्रार्चनासनस्थानध्यानयोगादिभिः कृता ।
मान्त्री दीक्षा च सा प्रोक्ता यथाशास्त्रोक्तरूपिणी ॥५३॥
सिद्धैः स्वशक्तिमालोक्य तथा केवलया शिशोः ।
निरुपायकृता दीक्षा शा[क्तेयो?क्तीयं]परिकीर्तिता ॥५४॥
अभिसंधिं विनाचार्यशिष्ययोरुभयोरपि ।
देशिकानुग्रहेणैव शिवताव्यक्तिकारिणी ॥ ५५ ॥
शिष्टा तु शांभवी दीक्षा शिवावेशनकारिणी ।
अज्ञानाद् विश्वविज्ञानं त्राणं संसारबन्धनात् ॥ ५६ ॥
यतः करोति संसिद्ध्यै मन्त्र इत्युच्यते तदा ।
भूमेः परिग्रहं कुर्याद्यथोक्तं ते मया पुरा ॥ ५७ ॥
शल्यादिशोधनं कुर्याद् याज्ञे[2] विधिविधानतः ।
विप्राशि[रा?षा] वेदघोषैर्मङ्गलाचारपूर्वकम् ॥ ५८
वास्तोर्बलिं प्रकुर्वीत मण्डलं रचयेत् तथा ।
सर्वमङ्गलसंपत्त्यै विदध्यादङ्कुरार्पणम् ॥ ५९ ॥
गुरुः कालं विनिश्चित्य प्रागेव सप्त वासरान् ।
शिष्यानुकूलमन्त्रेण पूजयेत् परदेवताम् ॥ ६० ॥
प्रणवाद्यैर्नमोऽन्तैश्च रात्रौ रात्रीशनामभिः ।
प्रो(क्त?क्तान्)बलींस्तु तेषां वै वितरेद्विधिना गुरुः ॥६१॥

---

१ 'शेषं' क. पाठः । २ 'याज्ञी' क. पाठः ।

पूजां रात्रौ प्रकुर्वीत दिक्पालानपि पूजयेत् ।
तत्तद् ध्वजमधिष्ठाय तत्तद्वर्णविराजितम् ॥ ६२ ॥
पायसान्नैर्बलिं तेभ्यो दत्त्वा तान् प्रार्थयेद् गुरुः ।
धारायुक्तं वारिपात्रं तत्तन्मन्त्रानुमन्त्रितम् ॥ ६३ ॥
शिरस्याधाय देवेशि प्रदक्षिणमनुव्रजेत् ।
यज्ञं संरक्षयेद् दिव्यमादौ गुरुरनन्यधीः ॥ ६४ ॥
शक्रादिसहिता देवाः पूजितास्तर्पितास्तथा ।
म(थं?खं)रक्षन्तु संतुष्टा लोकपाला नमोऽस्तु वः ॥ ६५ ॥
म(थे?खे)ग्रहणापूर्वेद्युः सायमेव निवासनम् ।
गुर्वादिसहितो वासो रात्रौ नियमपूर्वकम् ॥ ६६ ॥
विधिवन्मण्डपं चारुवेदिकामध्यशोभितम् ।
पताकाध्वजसंकीर्णं वितानादिविभूषितम् ॥ ६७ ॥
निर्धूमशान्तसंबुद्धदीपावलिभिरञ्चितम् ।
पुष्पाक्षतफलैः कुम्भैर्लाजैरर्चिभिरर्चितम् ॥ ६८ ॥
तरुपल्लवमालाभिः सर्वतः समलंकृतम् ।
संवृतं कदलीस्तम्भैः पूगोपेतैरलंकृतम् ॥ ६९ ॥
पञ्चगव्येन तद्गेहं चक्रराजं शिशुं तथा ।
शोधयेन्मूलमन्त्रेण मन्त्रितेन वरानने ॥ ७० ॥
समानं पञ्चगव्यानां कृत्वा भागं विशोधयेत् ।
मूलमन्त्रेण संमन्त्र्य कुशाग्रेणैव शोधयेत् ॥ ७१ ॥
तेन सर्वविशुद्धिः स्यात् सर्वपापनिकृन्तनम् ।

१ 'रवि' ख. पाठः । २ 'न्तैः' ख. पाठः । ३ 'पात्रं' ख. पाठः ।

महापातकजातानि कृत्वा गव्यं पिबेद्यदि ॥ ७२ ॥
नाशयेत् पानमात्रेण इत्याहुर्वेदवेदिनः ।
सुस्नातं शुद्धवेशं च शिष्यं सुस्थिरमानसम् ॥ ७३ ॥
आरात् (स्थोऽयं?संस्थाप्य)विधिवद् यजेदनुदिनं गुरुः ।
होमयेत् संस्कृते वह्नौ पायसैर्मधुराप्लुतैः ॥ ७४ ॥
आचार्यः कुण्डे विधिवत् संपूज्य परदेवताम् ।
मूलेनैव शिखां बद्ध्वा ततः शय्यागतं शिशुम् ॥ ७५ ॥
स्वप्नमानवमाश्रित्य (स्वाद?स्वाप)येत् पूर्वमस्तकम् ।
तारो हिलिद्वयं शूलपाणये द्वि(ज?ठ) ईरितः ॥ ७६ ॥
स्वप्नमानवमन्त्रोऽयं शयने परिकीर्तितः ।
नमोऽजाय त्रिनेत्राय पिङ्गलाय महात्मने ॥ ७७ ॥
वामाय विश्वरूपाय स्वप्नाधिपतये नमः ।
स्वप्ने कथय मे तथ्यं सर्वकार्येष्वशेषतः ॥ ७८ ॥
क्रियासिद्धिं विधास्यामि त्वत्प्रसादान्महेश्वर ।
मन्त्रेण स्वापकाले तु देवं प्रार्थ्य ततः स्वपेत् ॥ ७९ ॥
स्वप्ने शुभाशुभं दृष्टं पृच्छेत् प्रातः शिशुं गुरुः ।
गुरुणा चार्चनं कृत्वा उपवासी जितेन्द्रियः ॥ ८० ॥
दर्भशय्यागतो रात्रौ दृष्ट्वा स्वप्नं निवेदयेत् ।
कन्यां छत्रं रथं दीपं प्रासादं (मङ्क?कम)लं नदीम् ॥ ८१ ॥
कु(कुमंकुषयं?अरं वृषभं)माल्यं स्वर्णं च फलिनं द्रुमम् ।
पर्वतं च हयं मेध्यमाममांसं सुरासवम् ॥ ८२ ॥

---

१ 'वा' क, पाठः । २ 'स्वपि' ख, पाठः ।

एवमादीनि सर्वाणि [स्पृ?दृ]ष्ट्वा सिद्धिमवाप्नुयात् ।
चाण्डालं गर्दभं काकं गर्तं शून्यममङ्गलम् ॥ ८३ ॥
तैलाभ्यक्तं नरं नग्नं शुष्कवृक्षं सकण्ठकम् ।
प्रासादम[ङ्ग?त]लं दृष्ट्वा नरो रोगमवाप्नुयात् ॥ ८४ ॥
दृष्ट्वा दुःस्वप्नकं चैव होमात् सिद्धिमवाप्नुयात् ।
शुभे शुभं वदेत् तस्य जुहुयादशुभे[शुभ?शतम् ।
अस्त्रेणेति क्रमात् प्रोक्तो विधिः शिष्या[१]धिवास[र?ने ॥ ८५ ॥

इति श्रीगन्धर्वतन्त्रे पार्वतीश्वरसंवादे गुर्वादिलक्षणदीक्षानिरूपणं षड्विंशः पटलः ॥ २६ ॥

१ 'शास्या' क. पाठः ।

## सप्तविंशः पटलः ।

ईश्वर उवाच

अथ पूर्वानुसारेण नित्यं प्रातः समाप्य च ।
देवान् पितॄन् समभ्यर्च्य वस्त्रालंकारभूषणैः[1] ॥ १ ॥
आचार्यं वृणुयाद् भक्त्या ब्राह्मणानपि तोषयेत् ।
शिष्यः [सा?स्त्र]लंकृतो मौनी पुष्पचन्दनभूषितः ॥ २ ॥
नानामङ्गलवाद्यैश्च ब्रह्मघोषपुरःसरम् ।
नारीणां मङ्गलाशीर्भिर्ब्राह्मणानां तथैव च ॥ ३ ॥
जयशब्दान्वितैः स्तोत्रैः संतुष्टः शुद्धमानसः ।
दीपमालावलीरम्यं नानाधूपप्रधूपितम् ॥ ४ ॥
मण्डपं विधिवद् देवि पूर्ववत् प्रविशेद् गुरुः ।
पूर्ववदपरं कृत्वासने समुपविश्य च ॥ ५ ॥
तथापरं च निर्वर्त्य कुङ्कुमेन वरानने ।
वेदिकायां वरारोहे सिन्दूररजसाथवा ॥ ६ ॥
चक्रराजे[2] तु लिखिते[3] तन्मध्ये दर्भविस्तृते ।
सौवर्णं राजतं ताम्रं मणिकं[4] च सुलक्षणम् ॥ ७ ॥
द्वात्रिंशदङ्गुलं कुम्भं विस्तारोन्नतिशालिनम् ।
क्षालयित्वास्त्र(तं?म)न्त्रेण कुम्भं सम्यक् सुरेश्वरि ॥ ८ ॥
चन्दनागुरुकर्पूररोचनाकुङ्कुमैरपि ।

---

१ 'भू' क. पाठः । २ 'जं' क. पाठः । ३ 'तं' क. पाठ । ४ 'मार्तिकं' क. पाठः ।

दिव्यैर्द्रव्यैस्तु संपूर्णं वासोयुग्मेन वेष्टितम् ॥ ९ ॥
नूतनं नेत्ररम्यं च पुष्पमालाद्यलंकृतम् ।
दधिचन्दनसंलिप्तं च्चि(प्ता?प्त्वा)न्तर्नवरत्नकम् ॥ १० ॥
मदयन्तीं सहदेवीं दूर्वां भस्म तथैव च ।
मृत्तिकाः सप्त विन्यस्तं पल्लवैः पञ्चभिर्युतम् ॥ ११ ॥
परितो वेष्टितं सूत्रै रक्तैश्चातिमनोहरैः ।
यवानास्तीर्य पुष्पाणि[स?सु]रद्रुमधिया गुरुः ॥ १२ ॥
मूलमन्त्रेण संस्थाप्य यजेदाधारपूर्वकम् ।
वह्निमण्डलरूपं तं कलाभिः सह पूजयेत् ॥ १३ ॥
तथा सूर्यमयं कुम्भं कलाभिस्तत्र पूजयेत् ।
जलं सोममयं तद्वत् कलाभिश्च समर्चयेत् ॥ १४ ॥
तेजस्त्रयमिदं प्रोक्तं ज्वलत्तदात्मकं स्मृतम् ।
पुष्पैर(ञ्जाल?ञ्जलि)मापूर्य तस्मिन्नेव प्रदापयेत् ॥ १५ ॥
पश्चिमोत्तरुद्रेन्द्रे पुष्पपातः शुभोऽशुभे ।
अष्टोत्तरशतं शान्त्यै जुहुयादस्त्रमन्त्रतः ॥ १६ ॥
अथ प्रागुक्तविधिना यथाक्रममनुत्तमम् ।
कृत्वा संपूज्य विधिवदिष्ट्वा देवधिया गुरुः ॥ १७ ॥
अङ्गावृतीः समभ्यर्च्य श्रपयित्वा चरुं ततः ।
भागमेकं महादेव्यै शेषमग्नौ हुनेत्ततः ॥ १८ ॥
अष्टोत्तरशतं साज्यं मधुरात्रितयान्वितम् ।
समिद्धेऽग्नौ महादेवीं ध्यात्वा सम्यक् प्रधानतः ॥ १९ ॥
योऽनर्चिषि जुहोत्यग्नावसमिद्धे च मानवः ।

स मन्दाग्निः सामयो वा अल्पायुश्चोपजायते ॥ २० ॥
तस्मात् समिद्धे होतव्यं नासमिद्धे कथंचन ।
आरोग्यमिच्छतायुश्च श्रियमात्यन्तिकीं तथा ॥ २१ ॥
तथाबुधः सधूमे च जुहुयाद्यो हुताशने ।
यजमानो भवेदन्धः सपुत्रश्च विनश्यति ॥ २२ ॥
अ(थ?प्र)दीप्ते न होतव्यं मध्यमे नाप्यनेधिते ।
प्रदीप्ते लेलिहानेऽग्नौ होतव्यं कर्मसिद्धये ॥ २३ ॥
हुत्वा सा(ज्ञा?ङ्गां) महेशानीं समाप्य तदनन्तरम् ।
कर्म पूर्वोक्तमा(चा?च)र्य्य तरुणोल्लासवान् गुरुः ॥ २४ ॥
शिष्यमाहूय यत्नेन वाससाच्छाद्य तन्मुखम् ।
विशे(ष्या?षा)र्घ्योदकेनैव तमवोक्ष्य[1] विधानतः ॥ २५ ॥
कारुण्या(विनये?म्बुनिधे)देवि सर्वसंपत्तिसंश्रये ।
शरण्ये वत्स(लो?ले)मातः कृपामस्मिन् शिशौ कुरु ॥ २६ ॥
(अशि?आश)वप्रमुखैः पाशैः पाशितस्य सुरेश्वरि ।
दीनस्यास्य दयाधारे कुरु कारुण्यमीश्वरि ॥ २७ ॥
ऐहिकामुष्मिकैर्भोगैरभिसं(बु?ब)द्ध्यतामसौ ।
स्वभक्तिः सकला चास्मै दीयतां निष्कलाश्रये ॥ २८ ॥
एवं प्रार्थ्य महादेवीमु(द्रा?द्वा)स्य हृदयाम्बुजे ।
शिष्याय श्रावयेद् दिव्यः शिवोऽहमिति भावयन् ॥ २९ ॥
अन्तस्तमोपहं दिव्यं सिद्धान्तं श्रावयेद् गुरुः ।
(यत्?षट्)त्रिंशत्तत्त्वभ(वि?रि)तं विश्वं स्थावरजङ्गमम् । ३०।

१ 'त्रे' क. पाठः ।

शरीरं चापि त(त्रो?त्वो)त्थं तस्मिन्नेव द्विधा शिवः ।
कञ्चुकितः शिवो जीवो निष्कञ्चुकः परः शिवः ॥ ३१ ॥
आत्मज्ञानमात्मविद्भिः पुरुषार्थः समीरितः ।
वर्णात्मकं महेशानि नित्याः शब्दाः प्रकीर्तिताः ॥ ३२ ॥
अचिन्त्यस्त्विह मन्त्राणां प्रभावः समुदाहृतः ।
संप्रदायपरिज्ञानं गुरूणां सिद्धिदायकम् ॥ ३३ ॥
विश्वासाद्गुरुवाक्यानां सर्वसिद्धिरितीरिता ।
प्रामाण्यं चात्र स्वनिष्ठं विश्वासः समुदाहृतः ॥ ३४ ॥
गुरूणां चैव मन्त्राणां देवानामपि पार्वति ।
मनःपवनयोश्चैवमेकत्वेन विभावनात् ॥ ३५ ॥
अन्तरात्मपरिज्ञानमिति जानीहि पार्वति ।
आनन्दं ब्रह्मणो रूपं तच्च देहे[1] विभावयेत् ॥ ३६ ॥
तस्याभिव्यञ्जकाः पञ्च मकाराद्याः प्रकीर्तिताः ।
तैरेव यजनं तस्य गुप्त्या सिद्धिर्नचान्यथा ॥ ३७ ॥
प्राकट्याच्च[2](व?भ)यं यस्माद् गोपयेन्मातृजारवत् ।
अभेदभावनादार्ढ्यादाज्ञासिद्धिः समीरिता ॥ ३८ ॥
न निन्देद् दक्षिणं वामं न निन्देद् दर्शनानि च ।
निन्दाद्रोहादिकर्तॄणां गणानां नैव कारयेत् ॥ ३९ ॥
रहस्यकथनं देवि सच्छिष्ये[3]एव नापरे ।
सदा विद्यानुसंधानं शिवभावेन तत्परः ॥ ४० ॥
कामं क्रोधं तथा लोभं मदमोहौ तथैव च ।

---

१ 'हं' क. पाठः । २ 'प्रकटा' च क. पाठः । ३ 'ष्यायै' ख. पाठः ।

हिंसां स्तेयं च मात्सर्यं यल्लोकेषु विगर्हितम् ॥ ४१ ॥
स्त्रीविद्वेषादिकं चैव वर्जयेन्मतिमान् सदा ।
एक एव गुरुर्देवस्तस्यैवोपासनं सदा ॥ ४२ ॥
असंशयस्तु सर्वत्र निष्परिग्रहता मता ।
फलविरहितं कर्म त्यजेदनित्यमेव तत् ॥ ४३ ॥
पञ्चानामप्यलाभे तु नित्यं क्रमविम[र्ष?र्श]नम् ।
निर्भयत्वं च सर्वस्माज्ज्ञेयं सर्वं ह[रि?विः]प्रिये ॥ ४४ ॥
स्वयमेव हि होतात्र आत्मा शि[१]वस्तु पावकः ।
आत्मलाभात्परं नास्ति फलं क्वापि च सुव्रते ॥ ४५ ॥
सैषाज्ञा परमा शैवी कथिता तव पार्वति ।
वेदादिसकला विद्या वेश्या इव प्रकाशिताः ॥ ४६ ॥
सर्वेषु दर्शनेष्वेव विद्येयं खलु गोपिता ।
धीमांस्तत्रैव दीक्षेत सर्वथात्मविभूतये ॥ ४७ ॥
अथ शिष्यशिरोदेशे [वरु?चर]णं रक्तशुक्लयोः ।
भावयित्वा वपुस्तस्य च्छा[२]लितं मांसबृंहितम् ॥ ४८ ॥
तदमृतैः[श्र?स्र]वद्भिश्च कुर्याद् गुरुरुदारधीः ।
मूलादिब्रह्मरन्ध्रान्तं ज्वलन्तीं ज्वलनच्छविम् ॥ ४९ ॥
प्रतीशषहरीं[?]कोटिसूर्यप्रकाशिनीं पराम् ।
चन्द्रकोटिप्रभां शुद्धामज्ञानेन्धनदाहिकाम् ॥ ५० ॥
तत्तद्रश्मिभिरेवास्य पापपाशांस्तु संदहेत् ।
शिवोऽहमिति निश्चित्य वीक्षेत् करुणया दृशा[३] ॥ ५१ ॥

१ 'श' क. पाठः । २ 'मा' ख. पाठः । ३ 'त्तं करुणद्रवा' ख. पाठः ।

सर्वपापविनिर्मुक्तं सर्वदोषविवर्जितम् ।
पुनः स्वयं शिवो भूत्वा असंदिग्धमना गुरुः ॥ ५२ ॥
शिवहस्तेन शिष्यस्य मन्त्रं शिरसि संस्पृशेत् ।
जपोक्तक्रमतो योगी शिष्यदेहं प्रविश्य तु ॥ ५३ ॥
गृहीत्वा तस्य चात्मानमात्मना योजयेद् गुरुः ।
स्वयं मन्त्रतनुर्भूत्वा संक्रामेन्मन[सा]दरात् ॥ ५४ ॥
ह्सौःवर्णकर्णिके शि[द्य?ष्यं]स्वरद्वन्द्वाष्टकेसरे ।
दिगष्टकस्थितवंठंवर्गाष्टयुक्तदिग्दले ॥ ५५ ॥
चतुरस्रासने शुद्धे मातृकायन्त्रराजके[1] ।
निवेश्य सादरं देवि कलशामृतधारया ॥ ५६ ॥
स्न[2]पयेन्मूलविद्याभिस्त्रि[भङ्गो?रङ्गैः] देशिकोत्तमः ।
परिधाप्य दुकूले च चन्दनाद्यैर्विलेपयेत् ॥ ५७ ॥
अलंकृत्य यथालाभं समानं शिष्यपुत्रकम् ।
प्रसन्नं शान्तचित्तं च पार्श्वे निवेश्य देशिकः ॥ ५८ ॥
तदङ्के मातृकां न्यस्य विद्याङ्गन्यासमाचरेत् ।
विमुक्तमुखवस्त्रस्य हस्ते तस्य गुरुः स्वयम् ॥ ५९ ॥
यथाधिकारमालोच्य द्रव्यभेदान् प्रकाशयेत् ।
अन्यथा सर्वहानिः स्यादयोग्येषु प्रकाशनात् ॥ ६० ॥
भोजनं तत्त्वमन्त्रैस्तु कारयेद् ग्रा[म?स]मुद्रया ।
अथ गुरुः प्रसन्नात्मा पूर्वोक्तामात्मनः पराम् ॥ ६१ ॥
बालान्वितां विधायादौ पादुकां विनिवेदयेत् ।

---

१ 'का' क. पाठः । २ 'स्ना' क. पाठः ।

दत्तकर्णे दिशेद्बालां पश्चादिष्टं निवेदयेत् ॥ ६२ ॥
स्वकीयचरणं मूर्ध्नि शिशोर्निक्षिप्य पार्वति ।
सर्वान् मन्त्रान् सकृद्वापि क्रमेणैव यथाविधि ॥ ६३ ॥
यथाधिकारमावर्त्य स्वाङ्गेषु च शिशोः करम् ।
स्पर्शयित्वा किमप्यङ्गं तदङ्गमातृकादिकम् ॥ ६४ ॥
द्व्यक्षरं त्र्यक्षरं वापि चतुरक्षरमेव वा ।
आनन्दनाथशब्दान्तं नाम कुर्याद्गुरुः पिता ॥ ६५ ॥
आचाराननुशिष्यार्थं[1] ह्यचैतन्यं परामृ(ष?शे)त् ।
त्रिभिः कूटैस्तदङ्गं च त्रिः[2] प्रमृज्य गुरुः स्वयम् ॥ ६६ ॥
परिरभ्य तथा मूर्ध्नि समुपा[ग्रा?घ्रा]य सादरम् ।
आत्मरूपं ततः कृत्वा शिष्यं[3] पूर्णं विभावयेत् ॥ ६७ ॥
अष्टोत्तरसहस्रं स्वशक्तिहान्यनवाप्तये ।
प्रसन्नात्मा जपेद्विद्यां ततो गुरुरुदारधीः ॥ ६८ ॥
कृतार्थः कृतकृत्यस्तु यथाविभवविस्तरैः ।
वित्तशाठ्यं परित्यज्य दम्भमोहौ च जि[म्भ?ह्म]ताम् ॥ ६९ ॥
हस्त्यश्वरथयानाद्यैर्दासदासीभिरेव च ।
गोभूहिरण्यवस्त्राद्यैस्तोषयेद् गुरुमात्मनः ॥ ७० ॥
कुम्भादिकर्णे यद् द्रव्यं सर्वमण्डप एव च ।
अर्थं प्राणान् शरीरं च सर्वं तस्मै निवेद्य च ॥ ७१ ॥
पतित्वा पादयोर्मूले दण्डवद् भुवि मानवः ।
नमस्ते भगवन्नाथ शिवाय गुरुरूपिणे ॥ ७२ ॥

---

1 'न्वशिष्यर्थः' क. पाठः । २ 'विप्र' क. पाठः । ३ 'ष्यः पूर्णो' क. पाठः ।

प्रसीद करुणाधाम[न्]मयि दीनत्वतापिते ।
कायेन मनसा वाचा त्वत्तो नान्या गतिर्मम ॥ ७३ ॥
प्रसन्नास्तु परा देवी भोगमोक्षविधायिनी ।
तन्मना भव हे पुत्र [त्वा?ता]मेव त्वं सदा स्मर ॥ ७४ ॥
द्वैतभावं च ते मास्तु पूर्णानन्दमयो भव ।
(वक्कैः?उक्त्वो)त्तिष्ठेति पीयूषवचोभिरभि(व?न)न्द्य तम् ७५
हस्ताभ्यां च तमुत्थाप्य प्रसन्नोऽहं सदा प्रियें[2] ।
सिद्धयः सकलास्तूर्णं सन्तु ते मत्प्रसादतः ॥ ७६ ॥
प्रसन्नात्मा तथा शिष्यो विदिताखिलवेद्यकः ।
भक्तिश्रद्धासमायुक्तो भोजयेद् वै (क्षमावि?कुमारि)काः॥७७
ब्राह्मणान् परितोष्याथ दीनान्धकृपणानपि ।
पक्वान्नैरतिमिष्टैश्च ज्ञातीनपि च भोजयेत् ॥ ७८ ॥
गन्धैर्नानाविधैः पुष्पैर्माल्यैरपि च तोषयेत् ।
तेभ्य आशिष आदाय समर्थीया[3] जयावहाः[4] ॥ ७९ ॥
सद्गुरोराहितदीक्षो महाविद्याधरो महान् ।
सर्वमन्त्राधिकारी स्यात् सर्वज्ञो भुवि जायते ॥ ८० ॥

इति श्रीगन्धर्वतन्त्रे पार्वतीश्वरसंवादे दीक्षाविधाननिरूपणं
सप्तविंशः पटलः ॥ २७ ॥

---

१ 'प्रदा' ख. पाठः । २ 'ये' ख. पाठः । ३ 'यान्' क पाठः । ४ 'ह' क. पाठः ।

## अष्टात्रिंशः पटलः ।

देव्युवाच

—=-:**०**:-—

पुरश्चर्याविधिं ब्रूहि विद्यासिद्धिर्भवेद्यथा ।

ईश्वर उवाच

अथ वक्ष्ये विधानानि पौरश्चरणिके विधौ ॥ १ ॥

विना येन न सिद्धः स्यान्मन्त्रो वर्षशतैरपि ।

यथाविधि गुरोर्दीक्षां गृहीत्वा साधकोत्तमः ॥ २ ॥

तथैव तु यजेद् देवीं नित्यं प्रातरनन्यधीः ।

आत्मानं तन्मयं स्मृत्वा भक्तिश्रद्धासमन्वितः ॥ ३ ॥

अष्टोत्तरसहस्रं वा लक्षार्धं यावदेव हि ।

तावदेव मनुं जप्त्वा पुरश्चर्यां समाचरेत् ॥ ४ ॥

न्यूनातिरिक्तदोषाणां शान्तावष्टाधिकं जपेत् ।

गुरोराज्ञां समादाय शुद्धान्तःकरणो नरः ॥ ५ ॥

यत्नात् पुरस्क्रियां कुर्यात् स्वविद्यासिद्धिकाङ्क्षया ।

सर्वेषामेव मन्त्राणां विद्यानां चैव पार्वति ॥ ६ ॥

गुरोराज्ञैव मूलं स्यात् सिद्धिर्यस्मात् तदाज्ञया ।

अश्रद्धा चैव नास्तिक्यं पूर्वजन्मकृताशुभम् ॥ ७ ॥

---

१ 'तां' ख, पाठः ।

प्रतिबन्धत्रयं देवि मन्त्रसिद्धौ निगद्यते ।
यत्नात् पुरश्चरेन्मन्त्री प्रतिबन्धविनाशने ॥ ८ ॥
लक्ष्मीमदादनादृत्य मन्त्रं भोगपरायणः ।
नैवार्चां[१] कुरुते मन्त्री तथा नैव पुरस्क्रियाम् ॥ ९ ॥
स मन्त्रस्य ऋणी ज्ञेयो भंजनं तस्य शान्तये ।
जीवहीनो यथा देहः[२] सर्वकर्मसु न क्षमः ॥ १० ॥
पुरश्चरणहीनोऽपि तथा मन्त्रः प्रकीर्तितः ।
तत् कुर्यात् सर्वथा मन्त्री गुरुं वा कारयेद्बुधः ॥ ११ ॥
गुरोरभावे विप्रोऽस्य सर्वप्राणिहिते रतः ।
शुद्धान्तःकरणः स्निग्धो वासोभिश्च विशेषतः ॥ १२ ॥
कुलज्ञः कुलशास्त्रज्ञः पुनर्गुरुः पुरस्क्रियाम् ।
कारयित्वा पुनर्विद्यां लब्ध्वा तु[३] विनियोजयेत् ॥ १३ ॥
आदौ पुरस्क्रियां कर्तुं पुण्यक्षेत्रं समाश्रयेत् ।
चतुर्दश्यामथाष्टम्याममावस्यामुहूर्तके ॥ १४ ॥
देव्याः पुरस्क्रियारम्भः कर्तव्यः साधकोत्तमैः[४] ।
अथ पूर्वमुपोष्याथ कृतनित्यक्रियः शुचिः ॥ १५ ॥
द्विजान् देवान् गुरून् भक्त्या संपूज्य परमेश्वरि ।
गणेशं मातृकांश्चैव[५] पितॄंश्चैव प्रपूजयेत् ॥ १६ ॥
ग्रामे वा नगरे देशे पुरे वा पत्तने तथा ।
क्षेत्राधिपस्य नाम्ना तु दीपस्थानं विचारयेत् ॥ १७ ॥

---

१ 'र्य' ख. पाठः । २ 'हो' क. पाठः । ३ 'ति' क. पाठः । ४ 'मः' क. पाठः ।
५ 'कां चै' क. पाठः ।

शक्तिक्षेत्रे शिवक्षेत्रे दीपस्थानं विचिन्तयेत् ।
वर्तुलं रचयेद् देवि कूर्माकृति सुलोचने ॥ १८ ॥
तन्मध्ये नव कोष्ठानि कृत्वा वर्णान् समालिखेत् ।
स्वरान् युग्मक्रमेणैव दिक्षु चाष्टदलेषु च ॥ १९ ॥
अवर्गः कथितो देवि कवर्गादिकसप्तकम् ।
पूर्वादिक्रमतो देवि कुबेरान्तं लिखेत्ततः ॥ २० ॥
ळक्षवर्णं शंभुकोणे विलिखेत् कूर्मसंज्ञके ।
यस्मिन् कोष्ठे क्षेत्रनाम तन्मुखं विद्धि पार्वति ॥ २१ ॥
अङ्गेषु पार्श्वयोः पाणियुग्मं जानीहि सुन्दरि ।
ततः पार्श्वद्वयं देवि कुक्षिस्थानं निगद्यते ॥ २२ ॥
ततः पादद्वयं देवि चान्ते पुच्छं प्रकीर्तितम् ।
मुखे कार्याणि सिध्यन्ति मनोरथशतानि च ॥ २३ ॥
कण्ठस्थाने महेशानि सर्वकार्यविनाशकृत् ।
उदरे दुःखदारिद्र्यं पादयोर्हानिरुच्यते ॥ २४ ॥
पुच्छे तु धनहानिः स्यादित्येवं कथितं मया ।
दीपस्थानं समाश्रित्य जपपूजां समाचरेत् ॥ २५ ॥
पूर्वोक्तविधिसंपन्नं गुरुं नत्वा विधानतः ।
अक्षमालां समाश्रित्य मातृकां वर्णरूपिणीम् ॥ २६ ॥
मन्त्रसिद्धिप्रदां शुद्धां सर्वपापौघनाशिनीम् ।
प्रणवो मातृका देवी माया चैवामृतत्रयम् ॥ २७ ॥
अमृतत्रयसंयोगाद् दुष्टमन्त्रोऽपि सिध्यति ।

अथ मुक्ताफलमयी वाञ्छोच्चफलदायिनी ॥ २८ ॥
सर्वसिद्धिप्रदा नित्यं सर्वलोकवशंकरी ।
यथा मुक्ताफलमयी स्फाटिकी च तथा भवेत् ॥ २९ ॥
रुद्राक्षमालिका भोगमोक्षानन्तफलप्रदा ।
प्रवालमाला वश्ये तु सर्वकार्यार्थसाधिका ॥ ३० ॥
[मलिना?माणिक्य]रचिता माला साम्राज्यफलदायिनी ।
पुत्रजीवोद्भवा माला पुत्रपौत्रप्रदायिनी ॥ ३१ ॥
पद्माक्षमालया लक्ष्मीर्जायते महती यशः ।
रक्तचन्दनमाला तु वश्ये सर्वसमृद्धिदा ॥ ३२ ॥
महाशङ्खमयी माला मारणोच्चाटनादिषु ।
वीराणां शस्यते सा हि शेषयोर्न शुभप्रदा ॥ ३३ ॥
पञ्चाशद्भिः शतैः कुर्यादष्टाविंशति [रेव?भिश्च] वा ।
न न्यूनैर्नाधिकैः कार्या बीजाद्यैर्न विभूतये ॥ ३४ ॥
एको मेरुस्तत्र देयः सर्वेभ्यः स्थूलसंभवः ।
आद्यं स्थूलं ततो[1] न्यूनं न्यूनं न्यूनतरं ततः ॥ ३५ ॥
विन्यसेत् क्रमतस्तस्मात् सर्पाकारा [त्रि?प्यै[2]]नायता ।
ब्रह्मग्रन्थियुतं कुर्यात् प्रतिबीजं तथास्थितम् ॥ ३६ ॥
अन्यथा विफला माला संस्कृता जपकर्मणि ।
रुद्राक्षैर्यदि जप्येत इन्द्राक्षैः स्फाटिकैस्तथा ॥ ३७ ॥
नान्यन्मध्ये प्रयोक्तव्यं पुत्रजीवादिकं तु यत् ।

---

१ 'ततस्तस्मात्' ख. पाठः । २ 'च सा यतः' क. पाठः ।

यदान्यत्तु प्रयुञ्जीत मालायां जपकर्मणि ॥ ३८ ॥
मिश्रीभावं तदा याति चण्डालैः पापकर्मभिः ।
एकजातीयबीजेन यः कुर्यान्मालिकां सदा ॥ ३९ ॥
जन्मान्तरे जायते स वेदवेदाङ्गपारगः ।
पूर्वोक्तेन विधानेन गृहीत्वा दिव्यमालिकाम् ॥ ४० ॥
जपं समारभेत् पश्चात् प्रोक्तयोगसमन्वितः ।
तत्र स्थित्वा जपेद्विद्यां लक्षमात्रं सदा शुचिः ॥ ४१ ॥
दधि क्षीरं घृतं गव्यमैक्षवं गुडवर्जितम् ।
तिलाश्चैव सिता मुद्गाः कन्दः केमुकवर्जितः ॥ ४२ ॥
नारिकेलफलं चैव कदली लव(णी?ली)तथा ।
आम्रमामलकं चैव पनसं च हरीतकी ॥ ४३ ॥
व्रतान्तरप्रशस्तं च हविष्यं मन्यते बुधैः ।
अवैष्णवमलभ्यं च यदशस्तं व्रतान्तरे ॥ ४४ ॥
त्याज्यमेव तु तत् सर्वं यदीच्छेत् सिद्धिमात्मनः ।
क्षारं च लवणं मांसं गृञ्जनं कांस्यभोजनम् ॥ ४५ ॥
माषाढकीमसूरांश्च कोद्रवांश्चणकानपि ।
ताम्बूलं च द्विभक्तं च दुःसंवादं प्रमत्तताम् ॥ ४६ ॥
श्रुतिस्मृतिविरुद्धं च जपं रात्रौ विवर्जयेत् ।
भूशय्या ब्रह्मचारित्वं मौनं चाप्यनसूयता ॥ ४७ ॥
नित्यं त्रिषवणस्नानं क्षुद्रकर्मविवर्जनम् ।
नित्यपूजा नित्यदानं देवतास्तुतिकीर्तनम् ॥ ४८ ॥

---

१ 'द' क. पाठः । २ 'श्य' क. पाठः । ३ 'दै' पाठः ।

नैमित्तिकार्चनं चैव विश्वासो गुरुदेवयोः ।
जपनिष्ठा द्वादशैते धर्माः स्युर्मन्त्रसिद्धिदाः ॥ ४९ ॥
स्त्रीशूद्रपतितव्रात्य[पतितो?नास्तिको]च्छिष्टभाषणम् ।
असत्यभाषणं जि(ह्व?ह्म)भाषणं परिवर्जयेत् ॥ ५० ॥
स(त्यै?भ्यै)रपि न भाषेत जपहोमार्चनादिषु ।
अन्यथानुष्ठितं सर्वं भवत्येव निरर्थकम् ॥ ५१ ॥
वाङ्मनःकर्मभिर्नित्यं निःस्पृहावान् भवेत् सदा ।
वर्जयेद् गीत[नृत्या?वाद्या]दिश्रवणं नृत्यदर्शनम् ॥ ५२ ॥
माल्यं च गन्धलेपं च पुष्पधारणमेव च ।
मैथुनं तत्कथालापं तद्गोष्ठीं परिवर्जयेत् ॥ ५३ ॥
कौटिल्यं क्षौरमभ्यङ्गमनिवेदितभोजनम् ।
प्राणिहिंसां न कुर्वीत पुरश्चरणकृन्नरः ॥ ५४ ॥
अस्नातांश्च द्विजान् शूद्रान् स्त्रियो नैव स्पृशेत्तथा ।
असंकल्पितकृत्यं च वर्जयेन्मर्दनादिकम् ॥ ५५ ॥
त्यजेदुष्णोदकस्नानं सुगन्धामलकादिकम् ।
शिवाङ्गं पञ्चगव्येन क्षालयेद् बहिरन्तरम् ॥ ५६ ॥
स्नायाच्च पञ्चगव्येन केवलामलकेन वा ।
अपवित्रकरो[1] नग्नः शिरसि प्रावृतोऽपि वा ॥ ५७ ॥
निरासनः शयानो वा गच्छन्नुत्थित एव वा ।
रथ्यायामशिवे[2]स्थाने न जपेत् तिमिरालये ॥ ५८ ॥

१ 'अपवित्रकरलग्नो वा शि' क. पाठः । २ 'माशब्द' क. पाठः ।

प्रलपन् वा जपेद् यावत् तावन्निष्फलमुच्यते ।
सकृदुच्चारिते शब्दे प्रणवं समुदीरयेत् ॥ ५९ ॥
प्रोक्ते पामरशब्दे तु प्राणायामं सकृच्चरेत् ।
बहुप्रलापे चाचम्य न्यस्याङ्गानि ततो जपेत् ॥ ६० ॥
पतितानामन्त्यजानां दर्शने भाषणे श्रुते ।
क्षुतेऽधोवायुगमने जृम्भणे जपमुत्सृजेत् ॥ ६१ ॥
कृत्वाचम्य जपेच्छेषं यद्वा सूर्यादिदर्शनम् ।
शयीत कुशशय्यायां शुचिवस्त्रधरः सदा ॥ ६२ ॥
प्रत्यहं क्षालयेच्छय्यामेकाकी निर्भयः स्वपेत् ।
एवमादींश्च नियमान् पुरश्चरणकृच्चरेत् ॥ ६३ ॥
एवमुक्तविधानेन विलम्बत्वरितं विना ।
उक्तसंख्याजपं कुर्यात् पुरश्चरणसिद्धये ॥ ६४ ॥
देवतागुरुमन्त्राणामैक्यं संभावयन् धिया ।
जपेदेकमनाः प्रातःकालान्मध्यंदिनावधि ॥ ६५ ॥
यत्सं(ख्यामा?ख्यया)समारब्धं तच्च कुर्य्याद्दिने दिने ।
यदि न्यूनाधिकं कुर्याद् व्रतभ्रष्टो भवेन्नरः ॥ ६६ ॥
नैरन्तर्यविधिः प्रोक्तो न दिनं व्यतिलङ्घयेत् ।
दिवसातिक्रमात् (तेषां?पुंसः) सिद्धिहानिः प्रजायते ॥६७॥
मन्त्रं जप्त्वाम्बु पानीयैः सुलोचनमभोजनम् (?) ।
कुर्याद्यथोक्तविधिना त्रिसंध्यं देवमर्चयेत् ॥ ६८ ॥
एकसंध्यं द्विसंध्यं वा न मन्त्रं केवलं जपेत् ।

एकग्रामे स्थितो गत्वा वन्देत केवलं गुरुम् ॥ ६९ ॥
प्रणामोऽष्टाङ्ग एवात्र देवतावन्दनं तथा ।
नित्यं नैमित्तिकं कुर्यात् सङ्गं च साधुभिः सह ॥ ७० ॥
शक्तौ त्रिषवणस्नानं द्वे सकृद्वा तथा चरेत् ।
परकीयतरे तोये स्नानं पूर्वं समाचरेत् ॥ ७१ ॥
संख्यापूर्तौ निजैर्द्रव्यैर्जपसंख्यादशांशतः ।
यथोक्तविहिते कुण्डे जुहुयात् संस्कृतेऽनले ॥ ७२ ॥
अथवा प्रत्यहं जप्त्वा जुहुयात्तद्दशांशतः ।
तथा होमदशांशं तु जले संपूज्य देवताम् ॥ ७३ ॥
तर्पयामीति मन्त्रान्ते प्रोक्ताद्भिर्मूर्ध्नि तर्पयेत् ।
जपो होमस्तर्पणं च (पू?मृ)जा ब्राह्मणभोजनम् ॥७४॥
पूर्वपूर्वदशांशेन कुर्यात् पञ्चाङ्गसंयुतम् ।
स्वाभिषेकाघमर्षौ च सूर्यार्घ्यं जलपानकम् ॥ ७५ ॥
प्राणायामं ततः कुर्यात् पूर्वपूर्वदशांशतः ।
दशाङ्गोपासनं भक्त्या पुरश्चरणमुच्यते ॥ ७६ ॥
तत्पुरश्चरणं नाम मन्त्रसिद्ध्यर्थमात्मनः ।
यथोक्तं नियमं कृत्वा स्वकल्पोक्तजपस्य हि ॥ ७७ ॥
करणं विजयान्तं तत्प्रोक्तं देशिकसत्तमैः ।
तदन्ते महतीं पूजां कुर्याद् ब्राह्मणभोजनम् ॥ ७८ ॥
गुरुं संतोषयेदेवं मन्त्राः सिध्यन्ति मन्त्रिणः ।

होमकर्मण्यशक्तानां[1] विप्राणां द्विगुणो जपः ॥ ७९ ॥
इतरेषां तु वर्णानां त्रिगुणादिः समीरितः ।
एकमङ्गं विहीयेत ततो नेष्टमवाप्नुयात् ॥ ८० ॥
अङ्गहीनं भवेद्यद्यत् तत्तन्नेष्टार्थ[2]साधनम् ।
सर्वथा भोजयेद्विप्रान् कृतसाङ्गत्वसिद्धये ॥ ८१ ॥
विप्राराधनमात्रेण व्यङ्गं साङ्गं भवेद्यतः ।
न्यूनातिरिक्तकर्माणि न फलन्ति मनोरथान् ॥ ८२ ॥
तान्येवं पूर्णतां यान्ति समस्तानि भवन्ति चेत् ।
अतो यत्नेन विदुषो भोजयेत् सर्वकर्मसु ॥ ८३ ॥
नियतान्यपि कर्माणि हीनानि द्विजभोजनैः ।
निरर्थकानि तानि स्युर्बीजान्यूषरगाणि च ॥ ८४ ॥
अथवान्यप्रकारेण पुरश्चरणमुच्यते ।
ग्रहणेऽर्कस्य चेन्दोर्वा शुचिः पूर्वमुपोषितः ॥ ८५ ॥
नद्यां समुद्रगामिन्यां नाभिमात्रोदके[3] स्थितः ।
ग्रहणादिविमोक्षान्तं जपेन्मन्त्रं समाहितः ॥ ८६ ॥
अनन्तरं दशांशेन क्रमाद्धोमादिकं चरेत् ।
होमस्य तु दशांशेन तर्पणं समुपाचरेत् ॥ ८७ ॥
अभिषेकदशांशेन कुर्याद् ब्राह्मणभोजनम् ।
तदन्ते महतीं पूजां कुर्यात् साधकसत्तमः ॥ ८८ ॥
गुरवे दक्षिणां दद्याद्भक्त्या विप्रान् प्रतर्पयेत् ।

---

१ 'स' क. पाठः । २ 'न्न' क. पाठः । 'क' ख. पाठः ।

ततश्च मन्त्रसिद्धिः स्याद् देवता च प्रसीदति ॥८९॥
ततस्तु मन्त्रसिद्ध्यर्थं गुरुं संपूज्य तोषयेत् ।
अथवा देवतारूपं गुरुं भक्त्या प्रतोषयेत् ॥ ९० ॥
पुरश्चरणहीनोऽपि मन्त्रसिद्धिरसंशयः ।

इति श्रीगन्धर्वतन्त्रे पार्वतीश्वरसंवादे पुरश्चर्याविधिनिरूपणं
अष्टाविंशः पटलः ॥ २८ ॥

## एकोनत्रिंशः पटलः ।



ईश्वर उवाच

पूर्वोक्तविधिना देवि लक्षार्धं प्रजपेत् तथा ।
रात्रौ ताम्बूलपूर्णास्यस्तथैवोक्तविधानतः ॥ १ ॥
कामरूपं वपुः कृत्वा कामिन्येवं महानिशि ।
कुलयुक्तो जपेल्लक्षं निशाया मध्यभागतः ॥ २ ॥
अत्र यत् क्रियते कर्म तदनन्तफलप्रदम् ।
मूलाधारे महादेवि लिङ्गं स्वयंभूवाचकम् ॥ ३ ॥
ज्योतीरूपं तु योनिस्थं तत्रैव मनसा जपेत् ।
ध्यायेत् कुण्डलिनीं देवि तद्विद्याक्षररूपिणीम् ॥ ४ ॥
हृदि त्रिकोणमध्ये च बाणलिङ्गे च तेजसि ।
तत्र संचिन्त्य मनसा जपेल्लक्षं समाहितः ॥ ५ ॥
मूर्ध्नि त्रिकोणमध्ये तु इतरं पश्चिमामुखम् ।
तत्र स्थित्वा जपेल्लक्षं यत्र कुत्र समाहितः ॥ ६ ॥
एवं लक्षत्रये सिद्धे यद्भावस्तूपजायते ।
तमुपाश्रित्य भावेन यथा देवस्तथा (स्वे? भवेत्) ॥७॥
नवलक्षं जपेद्विद्यामिह भोगसमृद्धये ।
न ध्यानं नच विन्यासो न पूजा न पुरस्क्रिया ॥८॥

---

१ 'रास्यः' ख. पाठः । २ 'नी' ख. पाठः ।

केवलं जपमात्रेण सिद्धयः सिद्धिकाङ्क्षिणाम् ।
कोटिजापे तु संपूर्णे मनो मन्त्रात्मकं भवेत् ॥ ६ ॥
यावत्तावद्धि जप्तव्यं मनसैव नचान्यथा ।
मन्त्रमात्रस्वरूपे च सिद्धे मनसि पार्वति ॥ १० ॥
ध्यानमात्रं मनः कृत्वा ध्यानं ब्रह्मणि चार्पयेत् ।
विदिते ब्रह्मणः क्षेत्रे विदितः सर्ववित् प्रभुः ॥ ११ ॥
नव स्थानानि कथ्यन्ते शृणु सावहिता प्रिये ।
ज्योतीरूपं तदाधारे मेढ्रस्थाने शिखाप्रभम् ॥ १२ ॥
नाभिस्थं सूर्यविम्बाभं तरुणादित्यवर्च्चसम् ।
हृदि ज्योतिःशिखाकारं कण्ठे दीपशिखाप्रभम् ॥ १३ ॥
भ्रूमध्ये रत्नसङ्काशं तदूर्ध्वे भास्करप्रभम् ।
लम्बिके चन्द्रबिम्बाभं ततो वैदूर्यसंनिभम् ॥ १४ ॥
नवमे विश्वतेजा हि घण्टावैदूर्य्यसंनिभः ।
लिङ्गरूपी ह्यहं देवि नव लिङ्गानि यानि च ॥ १५ ॥
नव स्थानानि मन्त्रेण क्रमात् संभिद्य कुण्डलीम् ।
विसंज्ञाममृतं पीत्वा पुनराधारमानयेत् ॥ १६ ॥
मूलस्थानगतं मन्त्रं स्मरेदेवं क्रमेण तु ।
नवलक्षप्रमाणं तु जप्त्वा त्रिपुरसुन्दरीम् ॥ १७ ॥

विधिवज्जायते देवि रुद्रमूर्त्तिरिवापरः ।
मन्त्राणां नव लक्षाणि कृत्वा लिङ्गानि वै नव ॥१८॥
नवैव परिजप्याथ नवलक्षफलं लभेत् ।
जातसूतकमादौ स्याद् वृत्ते च मृतसूतकम् ॥१९॥
सूतकद्वयसंयुक्तो यो मन्त्रः स न सिध्यति ।
स्वयं तद्रहितं कृत्वा मन्त्रं यावज्जपेद्धिया ॥ २० ॥
सूतकद्वयनिर्मुक्तः स मन्त्रः सर्वसिद्धिदः ।
सत्कुलस्थानजातीनां शुचीनां श्रीमतां सताम् ॥ २१ ॥
नियतमग्निहोतॄणां भिक्षाशिनो(शना) ग्रजन्मनाम् ।
एषां मध्ये तु यः कश्चिद्गुरुर्वा[1] शिष्य एव वा ॥ २२ ॥
मन्त्रार्थं[2] मन्त्रचैतन्यं योनिमुद्रां न वेत्ति च ।
कथितं सूतकं तस्य जपात् सिद्धिर्न जायते ॥ २३ ॥
गुप्तवी(जा?र्या)श्च ये मन्त्रा न दास्यन्ति फलं प्रिये ।
मन्त्राश्चैतन्यसंयुक्ताः सर्वसिद्धिकराः स्मृताः ॥ २४ ॥
चैतन्यरहिता मन्त्राः प्रोक्ता वर्णास्तु केवलम् ।
फलं नैव प्रयच्छन्ति लक्षकोटिजपादपि ॥ २५ ॥
मन्त्रोच्चारे कृते यादृक् स्वरूपं प्रथमं भवेत् ।
शते सहस्रे लक्षे वा कोटिजापे न तत्फलम् ॥ २६ ॥

---

१ 'कः' क. पाठः । २ 'र्थम' ख. पाठः ।

हृदये ग्रन्थिभेदश्च सर्वावयववर्धनः ।
मन्त्रार्थः[१] कथ्यते देवि शृणु तत्प्रथमं प्रिये ॥ २७ ॥
भावार्थः संप्रदायार्थो निग(र्वा?र्भा)ख्यश्च कौलिकः ।
तथा सर्वरहस्यार्थो महातत्त्वार्थ एव च ॥ २८ ॥
अ(त्यन्ता?चरा)र्थो हि भावार्थः केवलं परमेश्वरि ।
शिवशक्तिसमायोगाज्जनितो मन्त्रराजकः ॥ २९ ॥
तन्मयीं परमानन्दनन्दितां मन्त्ररूपिणीम् ।
नि[संज्ञ?सर्ग] सुन्दरीं देवीं ज्ञात्वा स्वैरमुपासते ॥ ३० ॥
शिवशक्त्यात्मसं[यन्त्र?घट्ट]रूपिणी ब्रह्मरूपिणी ।
तत्प्रथाप्रसराश्लेषभुवि त्विन्द्रोपलाञ्छिते ॥ ३१ ॥
ज्ञातुर्ज्ञानमयाकारकरणान्मन्त्ररूपिणी ।
मध्यबिन्दुवि[सर्गान्तः]समा[२]स्थानमये परे ॥ ३२ ॥
कुटिलारूपके तस्याः प्रतिरूपे[३] त्रियरकले ।
मध्यप्राणप्रथारूपस्पन्दव्योम्नि स्थिता पुनः ॥ ३३ ॥
मध्यमे मन्त्रपिण्डे तु तृतीये पिण्डके पुनः ।
[बाह्य?राहु]कूटद्वयस्फूर्जच्च[रूद्धा?लत्ता]संस्थितस्य तु ॥३४॥
धर्माधर्मस्य वाच्यस्य [वीरा?विषा]मृतमयस्य च ।
वाचकाचरसंयुक्तेः प्रथितां[४] विश्वरूपिणीं[५] ॥ ३५ ॥

---

१ 'र्थं' ख. पाठः । २ 'मस्था' ख. पाठः । ३ 'बिम्बं' क. पाठः । ४ 'तां' क. पाठः ।
५ 'णीम्' क. पाठः ।

तेषां समस्तरूपेण पराशक्तिस्तु मातृका ।
कूटत्रयात्मिका देवी[1] समष्टिव्यष्टिरूपिणी[2] ॥ ३६ ॥
कूटत्रये तु ह्रींकारं देव्या नेत्रत्रयं शुभम् ।
हकारस्त्वग्निरू[ढ?प]त्वात् संहरेद्भेदसंततिम् ॥ ३७ ॥
रेफः कालाग्निरू[ढ?प]त्वात् पापौघक्षयकारकः ।
तयोर्विमर्श ईकारो बिन्दुना त्रिगुणात्मना ॥ ३८ ॥
अमृतत्वं करोतीन्दुः कामः कामानशेषतः ।
सम्प्रदायो महाबोधरूपो गुरुमुखे स्थितः ॥ ३९ ॥
विश्वाकारप्रथायास्तु महत्त्वं च (स?य)दाश्रयम् ।
शिवशक्त्याद्यया[3] मूलविद्यया परमेश्वरि ॥ ४० ॥
जगत्कृत्स्नं तया व्याप्तं शृणुष्वावहिता प्रिये ।
पञ्चभूतमयं विश्वं तन्मयी सा सनातनी ॥ ४१ ॥
तन्मयी मूलविद्या च तथापि कथयामि ते ।
हकाराद्व्योम संभूतं (ह?क)कारात्तु प्रभञ्जनः ॥ ४२ ॥
रेफादग्निः सकाराच्च जलतत्त्वस्य सम्भवः ।
लकारात् पृथिवी जाता तस्माद्विश्वमयी च सा ॥ ४३ ॥
गुणाः पञ्चदश प्रोक्ता भूतानां तन्मयी शुभा ।
यस्य यस्य पदार्थस्य या या शक्तिरुदीरिता ॥ ४४ ॥

---

१ 'कां देवीं' क. पाठः । २ 'णीम्' क. पाठः । ३ 'त्मना' क. पाठः ।

सैव सर्वेश्वरी देवी स च सर्वो महेश्वरः ।
व्याप्त्या पञ्चदशार्णैः सा पञ्चभूत[स्तृ?गु]णात्मिका[1] ॥ ४५ ॥
पञ्चभिश्च तथा षड्भिश्चतुर्भिरपि चाक्षरैः ।
स्वरव्यञ्जनभेदेन सप्तत्रिंशत्प्रभेदिनी * ॥ ४६ ॥
सप्तत्रिंशत्प्रभेदेन षट्त्रिंशत्तत्त्वरूपिणी ।
तत्त्वातीतस्वभावा च विद्येयं भाव्यते सदा ॥ ४७ ॥
पृथिव्यादिषु भूतेषु व्यापकं चोत्तरोत्तरम् ।
भूतं[लं सस्तलं?त्वधस्तनं] व्याप्यं तद्गुणा व्यापकाश्रयाः ४८
व्याप्येष्ववस्थिता देवि स्थूलसूक्ष्मविभेदतः ।
तस्माद्व्योमगुणः शब्दो वाय्वादीन् व्याप्य संस्थितः ॥४९॥
व्योमबीजैस्तु विद्या[द्यै?स्थै]र्लक्षयेत्[तु च?च्छब्द] पञ्चकम् ।
तेषां कारणरूपेण स्थितं व्योममयं[2] परम् ॥ ५० ॥
भवे(ज्ज्वलु?द्गुण)वतां बीजं गुणानामपि वाचकम् ।
कार्यकारणभावेन तयोरैक्यविवक्षया ॥ ५१ ॥

---

१ 'काम्' क. पाठः । २ 'ध्वनिमयं' ख. पाठः ।

* प्रथमबीजेऽकारचतुष्टयमीकारश्चेति पञ्च स्वरा व्यञ्जनषट्कं चेति एवमेकादश । द्वितीयबीजेऽकारपञ्चकमीकारश्चेति षट् स्वराः सप्त व्यञ्जनानि एवं त्रयोदश । तृतीयबीजेऽकारत्रयमीकारश्चेति चत्वारः स्वरा पञ्च व्यञ्जनानि एवं नव । एवं विभजने त्रयस्त्रिंशत् । बीजत्रयान्ते बिन्दवस्त्रय इति षट्त्रिंशत् । एतत्समष्टिरेका । एवं सप्तत्रिंशत्प्रभेदिनी विद्येति ।

महामायात्रयेणापि कारणेन च बिन्दुना ।

वाय्वग्निजलभूमीनां स्पर्शानां च चतुष्टयम् ॥ ५२ ॥

उत्पन्नं भावयेद् देवि स्थूलसूक्ष्मविभेदतः ।

रूपाणां त्रितयं त[त्त्वं?द्वत्]त्रिभी रेफैर्विभावितम् ॥ ५३ ॥

प्रधानं तेजसो रूपं तद्बीजेन हि जन्यते ।

विद्यास्थैश्चन्द्रबीजैस्तु स्थूलः सूक्ष्मो रसः स्मृतः ॥ ५४ ॥

सम्बन्धो विदितो लोके रसस्याप्यमृतस्य च ।

वसुन्धरागुणो गन्धस्त[द्विद्धि?ल्लिपिः]गन्धवाचिका ॥ ५५॥

भुवनत्रयसं [बुद्ध्या?बन्धात्] त्रिधात्वं तु महेश्वरि ।

अशुद्ध [स्तत्त्व?शुद्ध] मिश्राणां प्रमातॄणां परं वपुः ॥ ५६ ॥

क्रोधीशत्रितयेनाथ विद्यास्थेन प्रकाश्यते ।

श्रीक[श्च?ण्ठ] दशकं तद्वद्व्यक्तस्य हि[1] वाचकम् ॥ ५७ ॥

प्राणरूपस्थितो देवि त (त्त्वमे?द्वदे)कादशः (पुनः?परः) ।

एकः सन्नेव पुरुषो बहुधा जायते हि सः ॥ ५८ ॥

रुद्रेश्वरसदेशाख्या देवता मि[2]तविग्रहाः ।

बिन्दु(क्रमे?त्रये)ण कथिता, अमितामि[3]तविग्रहाः ॥ ५९ ॥

शान्तिः शक्तिश्च शंभुश्च नादत्रितयबोधनाः[4] ।

वा[ग्भवो?गुरा] मूलवलये सूत्राद्याः कवलीकृताः ॥ ६० ॥

---

१ 'तत्त्वद्दशकं व्यक्ति' क. पाठः । २ 'मिति' क. पाठः । ३ 'नन्त' क. पाठः । ४ 'नात्' ख. पाठः ।

तथा मन्त्राः समस्ताश्च विद्याया(य?म)त्र संस्थिताः ।
गुरुक्रमेण संप्राप्तः संप्रदायार्थ ईरितः ॥ ६१ ॥
निग[र्वो?र्भो]ऽपि च देवेशि शिवगुर्वा[थ?त्म] गोचरः[1] ।
तत्प्रकारं च देवेशि दिङ्मात्रेण वदामि ते ॥ ६२ ॥
शिवगुर्वात्मनामैक्यानुसंधानात् तदात्मकम् ।
निष्कलत्वं शिवे बुद्ध्वा तद्रूपत्वं गुरोरपि ।
तन्निरीक्षणसामर्थ्यादात्मनश्च शिवात्मताम् ॥ ६३ ॥
भावयेद्भक्तिनम्रस्तु शङ्कोन्मेषाकलङ्कितः ।
कौलिकं कथयिष्यामि चक्र[मे?दे]वतयोरपि ॥ ४६ ॥
विद्यागुर्वात्मनामैक्यं तत्प्रकारः प्रदर्श्यते[2] ।
तथा मन्त्रात्मकं चक्रं देवतायाः परं वपुः ॥ ६५ ॥
एकादशाधिकशतै[3]र्देवतात्मतया स्थितम् ।
लकारैश्चतुरस्राणि, वृत्तत्रितयसंयुतम् ॥ ६६ ॥
सरोरुहद्वयं (शक्तो?शाक्तै)रग्नी(सो?षो) मात्मकं प्रिये ।
हृल्लेखात्रयसम्भू[त्यै?तै]रक्षरैर्नवसंख्यकैः ॥ ६७ ॥
बिन्दुत्रययुतैर्जातं नवयोन्यात्मकं प्रिये ।
मण्डलत्रयसंयुक्तं चक्रं शक्त्यनलात्मकम् ॥ ६८ ॥
व्योमबीजत्रयेणापि, प्रमातृत्रितयात्मकम् ।
इच्छा[दिना?ज्ञान]क्रियारूपमादनत्रयसंयुतम् ॥ ६९ ॥

---

१ 'गौरव' क. पाठः । २ 'दृश्यते' क. पाठः । ३ 'तं' क. पाठः ।

सर्ववर्णात्मकं बिन्दुचक्रं सद्यः शिवात्मकम् ।
गणेशत्वं महादेव्याः ससोमरविपावकैः ॥ ७० ॥
इच्छाज्ञानक्रियाभिश्च गुणत्रययुतैः पुनः ।
ग्रहरूपा परा देवी, ज्ञानकर्मेन्द्रियैरपि ॥ ७१ ॥
त(दुत्थै?दर्थै)रेव देवेशि करणैरान्तरैः पुनः ।
प्रकृत्या च गुणेनापि पुंस्त्वबन्धेन चात्मना ॥ ७२ ॥
नक्षत्रविग्रहा जाता, योगिनीनामथोच्यते ।
त्वगादिधातुनाथाभिर्डाकिन्यादिभिरप्यसौ ॥ ७३ ॥
वर्गाष्टकानिविष्टाभिर्योगिनी(भ्य?भि)स्तु संयुता ।
योगिनीरूपमास्थाय क्रीडते विश्वरूपिणी ॥ ७४ ॥
प्राणोऽपानः समानश्च व्यानोदानौ तथा पुनः ।
नागः कूर्मोऽथ कृकरो देवदत्तो धनञ्जयः ॥ ७५ ॥
जीवात्मा परमात्मा च तैरेव [बलि?राशि]रूपिणी ।
अकथादित्रिपंक्त्यात्मतार्तीयादिक्रमेण[1] सा ॥ ७६ ॥
(जनना?गणेशोऽ)भून्महाविद्या परावागादिवाङ्मयी ।
बीजबिन्दुध्वनीनां च त्रिकूटेषु ग्रहात्मिका ॥ ७७ ॥
हृल्लेखात्रयसम्भूतैस्तिथिसंख्यैरथाक्षरैः ।
अन्यैर्द्वादशभि[र्व्यक्तै?र्वर्णै]रेषा नक्षत्ररूपिणी ॥ ७८ ॥

---

१ 'हादिपंक्त्यादितार्तीयादित्रयेण' क. पाठः ।

विद्यान्तर्भूतशक्त्याद्यैः शाक्तैः[1] षड्भिरथाक्षरैः ।
योगिनी[वर्ण?त्वं च]विद्याया, राशित्वं चान्त्यवर्जितैः ॥७९॥
एवं विश्वप्रथाकारचक्ररूपा महेश्व(रि?री) ।
देवीदेहो यथा देवि गुरुदेहस्तथैव च ॥ ८० ॥
तत्प्रसादाच्च शिष्योऽपि तद्रूपः सम्प्रकाशते ।
सहस्रदलमध्ये तु त्रिकोणं परिचिन्तयेत् ॥ ८१ ॥
तत्रैव मादनं बीजं बिन्दुमाश्रित्य दीपयेत् ।
कोटिचन्द्रप्रतीकाशं चिदानन्दमयं परम् ॥ ८२ ॥
अनुत्तरपदं गुह्यं ललाटोर्ध्वे व्यवस्थितम् ।
भगमाधारसंस्थानं त्रिकोणपुरमाश्रितम् ॥ ८३ ॥
मृणालतन्तुरूपां[2] हि विश्वोत्पत्तेश्च कारणम् ।
इच्छाज्ञानाक्रियारूपा चतुर्थी हृदये स्थिता ॥ ८४ ॥
शक्रं ललाटमध्ये तु दीपाभं परिचिन्तयेत् ।
विद्युत्कोटिप्रतीकाशं पञ्चमं नेत्रनासिके ॥ ८५ ॥
शिवो नादाख्यसंयुक्तस्त्रिषु शून्येषु संस्थितः ।
सूर्यकोटिप्रतीकाशो महापद्मोपरिस्थितः ॥ ८६ ॥
सकारं मुखमध्ये तु बालार्कसदृशं परम् ।
मादनं जठरे देवि वराभं परिचिन्तयेत् ॥ ८७ ॥

---

१ 'क्तैः' ख. पाठः । २ 'पं' ख. पाठः ।

हकारं प्राणवायौ च हंसा [भि?भं] परिचिन्तयेत् ।
कलाषोडशपत्रे च इन्द्रमोंकाररूपकम् ॥ ८८ ॥
ह्रींकारं हृदये पद्मे कोटिसूर्यसमप्रभम् ।
बिन्दुद्वये कुच[1]युग्मे यवा[2]भे चार्धचन्द्रकम् ॥ ८९ ॥
नादबिन्दुस्तदग्रे तु शिवशक्तिसमन्विते ।
कामराजं महेशानि आकर्षणकरं परम् ॥ ९० ॥
नाभिपद्मे त्रिकोणे च दाडिमाभं सकारकम् ।
पादद्वये महेशानि मादनं दीपसंनिभम् ॥ ९१ ॥
पृष्ठोपरिस्थितं देवि इन्द्रं[3] तेजःस्वरूपिणम् ।
चतुर्थं योनिमध्ये तु दीपाभं परिचिन्तयेत् ॥ ९२ ॥
शिवेन लिङ्गरूपेण तद्बिन्दुयुगलेन च ।
विद्याबीजत्रयं देवि योनित्वे परिचिन्तयेत् ॥ ९३ ॥
लिङ्गं योनिं च सत्त्वं च चतुर्थं कथितं मया ।
(५)अथ सर्वरहस्यार्थं कथयामि तवानघे ॥ ९४ ॥
मूलाधारे ज्वल[4]द्रूप वाग्भवाकार[तद्धि?तां] गते ।
अष्टात्रिंशत्कलायुक्तपञ्चाशद्वर्णविग्रहा ॥ ९५ ॥
विद्या कुण्डलिनीरूपा मण्डलत्रयभेदिनी ।
तडित्कोटिप्रभाप्रख्या बिषतन्तुनिभाकृतिः ॥ ९६ ॥
व्योमेन्दुमण्डलासक्ता [स्व?सु]धास्रोतःस्वरूपिणी ।
सदाव्याप्तजगत्कृत्स्ना सदानन्दस्वरूपिणी ॥ ९७ ॥
एषा स्वात्मेति बुद्धिस्तु रहस्यार्थो महेश्वरि ।

---

१ 'वे' ख. पाठः । २ 'जराभे' ख. पाठः । ३ 'न्द्रते' क. पाठः । ४ 'तडि' ख. पाठः ।

(६)महातत्त्वार्थ इति यत्तच्च देवि ब्रवीमि ते ॥ ९८ ॥
निष्कले परमे सूक्ष्मे [1]निर्लिप्ते भाववर्जिते ।
व्योमातीते परे तत्त्वे प्रकाशानन्दविग्रहे ॥ ९९ ॥
विश्वोत्तीर्णे विश्वमये तत्त्वे स्वात्मानियोज(येत्?नम्) ।
तदा प्रकाशमानत्वात् तेजसां तमसामपि ॥ १०० ॥
अविनाभावरूपत्वं तस्माद्विश्वस्य सर्वतः ।
प्रकाशते महातत्त्वं दिव्यक्रीडारसो[2]ऽज्ज्वले ॥ १०१ ॥
निरस्तसर्वसंकल्पविकल्पस्थितिपूर्वकः ।
रहस्यार्थो मया प्रोक्तः सद्यः प्रत्ययकारकः ॥ १०२ ॥

इति श्रीगन्धर्वतन्त्रे पार्वतीश्वरसंवादे विद्यासाधननिर्णयो
एकोनत्रिंशः पटलः ॥ २९ ॥

१ 'निर्लेपये' ख पाठः । २ 'सोद्वले' ख. पाठः ।

# त्रिंशः पटलः ।

—=·:*०*:·=—

ईश्वर उवाच

अकथ्यमपि देवेशि तव स्नेहाद्वदाम्यहम् ।
त्रिकूटान्ते हंसबीजं बिन्दुनादविभूषितम् ॥ १ ॥
विपरीतेन वा देवि दुर्लभं पापचेतसाम् ।
हकारः प्राणरूपस्तु सकारो जीव उच्यते ॥ २ ॥
उभौ जीवेति विख्यातौ त्रैलोक्ये सचराचरे ।
हकारं शुक्लवर्णाढ्यं चन्द्रकोटिसमप्रभम् ॥ ३ ॥
सकारं रक्तवर्णाढ्यं कोटिसूर्यसमप्रभम् ।
भावनं त्वस्य मन्त्रस्य जपमात्रं न विद्यते ॥ ४ ॥
अजपा तेन विख्याता शिवशक्तिसमन्विता ।
न्यासमन्त्रस्य विद्याया हकारः प्राण उच्यते ॥ ५ ॥
सकारो[1] जीव आख्यातो जीवः कामेन मण्डितः
मादनं प्राणरूपं तु वि(मर्ष?कासः) शिव उच्यते ॥६॥
सकारस्थः परो ज्ञेयः संकोचः शक्तिरूपवान् ।
संकोचः परमा शक्तिर्वि(मर्षः?कासः) परमः शिवः ॥७॥
संकोचश्च विकासश्च हस इत्यक्षरद्वयम् ।
तयोरक्षररूपेण [क?ह]वर्णौ बिल्व(न्दु)मालिनी ॥ ८ ॥

---

१ 'सकारं जीवमाख्यातं जीवं कामेन मण्डितम्' क. पाठः ।

प्राणो बिन्दुरिति प्रोक्तः साहचर्याद्वरानने ।
सपूर्वमुदितं मन्त्रं शंभुशक्त्यैक्यवाचकम् ॥ ९ ॥
जीवशक्त्यैक्यसिद्ध्यर्थं गदितं सुरपूजिते ।
अस्मिन्मन्त्रे वरारोहे कालकर्मान्तवर्त्मना ॥ १० ॥
वर्तते यस्तु युक्तात्मा असाध्यमपि साधयेत् ।
त्वं च जीवैक्यसिद्ध्यर्थमुदितं मन्त्रनायकम् ॥ ११ ॥
तथ्यं मद्वाक्यतो(देवि?विद्धि) फलाफलस्पृहां त्यज ।
अस्मिन्मन्त्रे महाभागे समे जप्ते वदाम्यहम् ॥ १२ ॥
सर्वे मन्त्राः प्रसिध्यन्ति जीवन्ति च पुनन्ति च ।
प्राणन्ति च महाभागे सत्यं सत्यं वदाम्यहम् ॥ १३ ॥
सोऽहंभावेन भावेन भावनं भावनं मतम् ।
सोऽहंभावेन भावं तु उक्तलक्षणल(क्ष्यते?क्षितम्) ॥१४॥
कृत्वाहंभावमुत्सृज्य सोऽहंभावे स्थिरीभवेत् ।
शंभुभावे स्थिरीभूते बिन्दुं शंभौ विभावयेत् ॥ १५ ॥
सच्चित्सुखमयः शंभुस्त्रिरूपः सर्वकर्मणि ।
सर्वदा भा(ष?व्य)ते यस्मात्तन्मयं त्वखिलं ततः ॥१६॥
सत्संनिधिसमङ्गेषु शंभुश्चैव प्रकाशते ।
कामः कामयते[1] भेदमेति तद्रूपतां मतिः ॥ १७ ॥

---

१ 'यतो भेदमिति तद्रूपतामतिः' क. पाठः ।

यत्र[1] चित्सत्तयोर्व्याप्तिस्तत्रानन्दोऽभिजायते ।
यत्रानन्दो भवेद्भावे तत्र चित्सत्त्वयोः[2] स्थितिः ॥ १८ ॥
या चित्सत्त्वैव सा प्रोक्ता या[3] सत्ता सा चिदुच्यते ।
एवं चित्सत्त्वयोरैक्ये[4] स्थिरीभूते वरानने ॥ १९ ॥
आनन्देन समावेशोऽप्यचिरादेव जायते ।
तदानन्दमयं विश्वं स्वात्माभेदं प्रकाशते ॥ २० ॥
एवं शंभुमये भावे सर्वतः प्रभवे शिवे ।
सर्वशक्त्युपभोगे तु जीवन्मुक्तो महीं वसेत् ॥ २१ ॥
भावया ? वस्तुभूताया हसौ................ ।
प्राणाः स्वराः समाख्याता बिन्दुस(ङ्गौ?गौं)च चेतना ॥२२॥
अन्यान्यावयवानि स्युरन्यानि परमेश्वरि ।
तेन तद्युक्तितो मन्त्राः प्रसीदन्ति नचान्यथा ॥ २३ ॥
बिन्दुसँगौ[5] हसौ तुर्यस्वरश्चेति च पञ्चमम् ।
भवत्या मातृकादेहे विद्धि चैतन्यजृम्भणम् ॥ ३४ ॥
तेन तैर्हीनरूपास्तु मन्त्रा विद्यास्तथा परे ।
निष्प्राणदेहवत्कार्यकरणेष्वक्षमाः स्मृताः ॥ २५ ॥
रमां मायां हंसबीजं वाग्भ[वत्वे?वाद्ये]नियोजयेत् ।
शक्त्यन्ते परमेशानि सोऽहं मायां रमां तथा ॥ २६ ॥

---

१ 'अत्र चित्सत्त्वये व्याप्तिर्य' क. पाठः । २ 'त्त्व' क. पाठः । ३ 'अ' क. पाठः ।
४ 'त्त्वं' क. पाठः । ५ 'संगौ' कं. पाठः ।

कामाराजाह्वये देवि क्रोधीशं शक्रसंयुतम् ।
मायाबिन्दुसमायुक्तं कोटिसूर्यसमप्रभम् ॥ २७ ॥
स्फुरत् त्रिकोणमध्यस्थं किरणानेकसंवृतम् ।
एतत्प्राणं महाभागे गुप्तं ग्रन्थे प्रकाशितम् ॥ २८ ॥
बोधिन्या बोधयेद्विद्यां संदीपन्या च दीपयेत् ।
तारमायारमायोगो म(नो?नु)र्दीपनमुच्यते ॥ २९ ॥
जीवन्या जीवयेद्विद्याममृतैरमृतं चरेत् ।
पृथग्विधं तु तस्यापि साधनं शृणु पार्वति ॥ ३० ॥
वाग्भववीजरूपां[1] तु दीपाभां तन्तुरूपिणीं ।
गच्छन्तीं ब्रह्ममार्गेण लिङ्गभेदक्रमेण तु ॥ ३१ ॥
विशेदच्छामृतं[2] दिव्यं क्षीरधारोपमं[3] द्रवत् ।
पीत्वाकुलामृतं देवि पुनरेव विशेत् कुलम् ॥ ३२ ॥
पुनरेवाकुलं गच्छेद् द्वादशान्ते वरानने ।
सहस्रारे महापद्मे वाग्भवं पूर्णचन्द्रकम् ॥ ३३ ॥
ब्रह्मग्रन्थिं ततो भित्त्वा*सप्तषष्ट्याख्यधारया '?, ।
नासिकारन्ध्रमार्गेण त्वात्ममूलं प्रवेशयेत् ॥ ३४ ॥
जिह्वामापूर्य भो देवि मातृकावर्णरूपिणीम् ।
बहिर्गतां तु वाग्रूपां जिह्वाग्रे दीपरूपिणीम् ॥ ३५ ॥

---

१ 'पं' क. पाठः । २ 'विशद्स्था' क. पाठः । ३ 'मद्रवम्' क. पाठः ।

* 'वह्निविपाधारद्वयमध्यवर्तिनं शाक्ताख्यमाधारं भित्त्वेत्यर्थः ।

आमूलाद्ब्रह्मरन्ध्रान्तं तस्माज्जिह्वावधि प्रिये ।
वाग्भवबीजरूपां तां दीपशिखां विभावयेत् ॥ ३५ ॥
लक्षमेकमिदं जप्त्वा सर्वपापहरो भवेत् ।
अव्याहतमतिः शास्त्रे विजयी वाक्पतेरपि ॥ ३६ ॥
वादे सदसि वाक्यस्य स्तम्भकः प्रतिवादिनः ।
सत्पण्डितघटाटोप[जात?जेता]ऽप्रतिहतप्र[भुः?भः] ।३७।
पदगुम्फैर्महाकाव्यकर्ता स(त्रा?जा)यते शिवे ।
इति ते कथितं देवि वाग्भवस्यापि साधनम् ॥ ३८ ॥
अथ कामकलाबीजस्वरूपां चिन्तयेत् पराम् ।
उद्यदादित्यसंकाशां स्फुरद्दीपशिखानिभाम् ॥ ३९ ॥
गच्छन्तीं ब्रह्ममार्गेण ब्रह्मरन्ध्रावधि प्रिये ।
प्रपतद्बिन्दुधाराभिः[1] शुद्धलाक्षारसोपमम्[2] ॥ ४० ॥
समस्तभुवनाभोगकवलीकृतजीवनाम् ।
महा[त्म?स्व]महिमाक्रान्तिध्वस्ताहंकृतिभूमिकाम् ॥४१॥
चिन्तयित्वा महेशानि वशयेज्जगतीमिमाम् ।
चिन्तयेद्योषितां योनौ चल[ज्ज्वा?ज्ज]लेन्दुसंनिभाम् ॥४२॥
तद्दृष्टिपथगा[3] नारी दैवी वाप्यथवासुरी ।
निवेदितात्मसर्वस्वा वशगा देवि जायते ॥ ४३ ॥

---

१ 'पतद्भिर्बि' क. पाठः । २ 'मैः' क. पाठः । ३ 'वशगा' क, पाठः ।

अथ वक्ष्ये महेशानि शक्तिकूटस्य साधनम् ।
आधाराद्ब्रह्मरन्ध्रान्तं विद्युदग्निसमप्रभम् ॥ ४५ ॥
स्रवत्सुधामयं देवि शक्तिकूटं विचिन्तयेत् ।
देहिनाममृतानन्दवर्षधारारसोपमम् ॥ ४६ ॥
सर्पाणां दर्शनादेव (उडी?जडी)करणकारकः ।
स्थिरजङ्ग[1]मशंकाख्यविषघातविनाशकः[2] ॥ ४७ ॥
महारोग[3]पीडितानां शरच्चन्द्रकरोपमः ।

देव्युवाच ।

कथं कामकला देव सूचिता न प्रकाशिता ॥ ४८ ॥
यस्याः स्मरणमात्रेण सायुज्यं लभते नरः ।

ईश्वर उवाच ।

तत्रैवविध्यं शृणु प्राज्ञे सर्वतन्त्रेषु गोपितम् ॥ ४९ ॥
स्थूलं समं तथा नाम सूक्ष्मं मन्त्रतनुं तथा ।
नभोमहाबिन्दुमुखी चन्द्रसूर्यस्तनद्वया ॥ ५० ॥
सुमेरुहार्धकलया शोभमाना मही यदा ।
पातालतलविन्य[4]स्ता त्रिलोकीयं कलात्मिका ॥ ५१ ॥
ललितायास्त्रिभिर्बीजैः प्रकाशार्थो य ईर्यते ।
तस्यविम(र्ष?र्श)ईकारो बिन्दुना तत्त्रिधा गतम् ॥ ५२ ॥

---

१ 'मकालाख्य' क. पाठः । २ 'विषोपविषनाशानः' ख. पाठः । ३ 'रौद्र' क. पाठः । ४ 'न्यासात्' ख. पाठः ।

तत्तुरीयस्वरूपाख्यं बिन्दुत्रितयवदीरितम् ।
ईकारोर्ध्वगतो बिन्दुर्मुखं भानुरधोगतौ ॥ ५३ ॥
स्तनौ दहनशीतांशू योनिर्हार्धकला भवेत् ।
तदात्मक(स्तु?त्व)दव्यास्तु साधकस्य च तद्भवेत् ॥५४॥
तदुद्भवं शृणु प्राज्ञे महोदयकरं परम् ।
ऊर्ध्वबिन्द्वात्मकं वक्त्रमधोबिन्दुद्वयात्मकम् ॥ ५५ ॥
कुचद्वयं तु तच्छेषैः शेषाङ्गानि विभावयेत् ।
इति ते कथिता कामकलाया बाह्यभावना ॥ ५६ ॥
तामेव त्वां पुनर्वक्ष्ये भावनामान्तरात्मिकाम् ।
मूलादिब्रह्मरन्ध्रान्तं स्फुरद्विद्युल्लताकृतिम् ॥ ५७ ॥
ध्यायेत् कुण्डलिनीं देवि तद्विद्यास्वरूपिणीम् ।
षट्चक्रभेदिनीं देवीं बिन्दुत्रयात्मिकां पराम् ॥ ५८ ॥
तां च हार्धकलारूपां चिन्तयेत्पद्ममध्यगाम् ।
एवं कामकलारूपा जागर्ति सचराचरे ॥ ५९ ॥
सा च त्रयीमयी प्रोक्ता नास्ति किंचित्तया विना ।
साम्ना मुखं समाख्यातमृग्यजुर्भ्यां स्तनद्वयम् ॥ ६० ॥
अथर्वणा समाख्याता हार्धरूपा परा कला ।
तुरीयं परमेशानि साक्षाद्ब्रह्मैव केवलम् ॥ ६१ ॥

---

१ 'स्ते' ख. पाठः । २ 'लिकीन्' ख. पाठः ।

एतत्कामकलारूपं ध्यानं गुह्यतमं परम् ।
नाशिष्याय प्रदातव्यं नाभक्ताय कदाचन ॥ ६२ ॥
एतत्प्रकाशनं यच्च आयुःक्षयकरं स्मृतम् ।
साधकस्य विनाशस्तु तस्मान्नैतत् प्रकाशयेत् ॥ ६३ ॥
लोभान्मोहाच्च गर्वाच्च विद्वेषाद्वा प्रकाशयेत् ।
सोऽचिरान्मृत्युमाप्नोति शस्त्रघातविषादिभिः ॥ ६४ ॥

—:०❀०:—

इति श्रीगन्धर्वतन्त्रे पार्वतीश्वरसंवादे विद्याकूटत्रयसाधन-
निरूपणं त्रिंशः पटलः ॥ ३० ॥

# एकत्रिंशः पटलः ।

देव्युवाच

होमस्य कथयेशान विधानं पूर्वसूचितम् ।

ईश्वर उवाच

किंशुकैर्हवनं देव्याः कुसुम्भकुसुमैरपि ॥ १ ॥
नागकेसरपुष्पैर्वा मधूकै रक्तपद्मकैः ।
करवीरै (र्यवा ? र्जपा) पुष्पैर्मधुरत्रयमिश्रितैः ॥ २ ॥
सर्वसिद्धिप्रदं कुण्डं चतुरस्रं वरानने ।
कुण्डं सुलक्षणं कृत्वा होमयेत् संस्कृतेऽनले ॥ ३ ॥
अथवा परमेशानि स्थण्डिलं रचयेद्बुधः ।
नित्यं नैमित्तिकं कुर्यान्न काम्यं स्थण्डिले चरेत् ॥ ४ ॥
हस्तमात्रं चतुरस्रं गोमयेनोपलेपितम् ।
अङ्गुष्ठपर्वमात्रोच्चं वालुकामण्डलं तथा ॥ ५ ॥
तत्रापि ले (ख ? प) नं कृत्वा तत्र होमः फलप्रदः ।
यवानां तण्डुलैरेवमङ्गुलं चाष्टभिर्भवेत् ॥ ६ ॥
अदीर्घयोजितैर्हस्तश्चतुर्विंशतिकाङ्गुलैः ।
एतत्प्रमाणहस्तैस्तु कुण्डादिकं समाचरेत् ॥ ७ ॥

---

१ 'र' क. पाठः ।

त्रिपुराप्रीतिदो होमः कुण्डे त्रिकोणसंज्ञके ।
पश्चिमात् पूर्वाग्रास्तिस्रो रेखाः प्रादेशमात्रकाः ॥ ८ ॥
विलिख्य च मुकुन्देन्दुपुरन्दरस्वरूपकाः ।
दक्षिणास्तिस्रो रेखा वै विलिख्य तदनन्तरम् ॥ ९ ॥
रेखाश्च स्युर्वैवस्वतब्रह्मानन्तस्वरूपकाः ।
त्रिकोणं मध्यतो देवि कृत्वा बाह्ये ततः परम् ॥ १० ॥
षट्कोणं विधिना चैव कारयेदतिसुन्दरम् ।
अष्टपत्रं च तद्बाह्ये वृत्तेन कर्णिका शुभा ॥ ११ ॥

चतुरस्रं चतुर्द्वारं मण्डलं विरच्य मध्ये पुष्पाञ्जलिं निक्षिप्य स्रुवादिकमासादयेत् । स्रुव आज्यं दधि दूर्वा समिधः । आज्यस्थालीं प्रणीताप्रोक्षणीं च वामतोऽस्मै परिकल्प्याम्भसा प्रोक्षणीमापूर्य वारत्रयमुत्पूय, तानि प्रोक्षण्यभिमुख्यानि कृत्वा बालयाभिमन्त्र्य तयैव दूर्वाभिर्मूलादग्रं पुनरग्रान्मूलं त्रिः परिमृज्य दूर्वाभिः पूर्वाग्रमुत्तराग्रं च विस्तरेत्(?)मूलविद्यां समुच्चरन् 'स्थण्डिलाय नमः' इति संपूज्य, त्रिकोणमध्ये कामेश्वरीकामेश्वरौ यष्ट्वा तयोर्मिथुनीभावं ध्यात्वा तावभ्यर्च्य तस्या गर्भे, वैश्वानर जातवेद इहावह लोहिताक्ष सर्वकर्माणि साधय स्वाहेति मूलोद्गतं संविदग्निं ललाटनेत्रद्वारा निर्गतं बाह्याग्नियुक्तं पातयेत् । ओं उत्तिष्ठ पुरुष हरिपिङ्गल लोहिताक्ष सर्वकर्माणि देहि मे दापय स्वाहेति वह्निमुत्थाप्य, ओं चित्पिङ्गल हनहन दहदह पचपच सर्वज्ञाज्ञापय स्वाहेति कामेश्वरीगर्भे धृतं

१ 'शप्रमाणाः' क. पाठः ।

ध्यात्वा, मूलमुच्चरन् वौषडिति वह्निं विलोक्यास्त्रेण संरक्ष्य ज्वलदग्निमादाय स्थण्डिलं दक्षिणावर्तेन त्रिः परिभ्राम्य ज्वलदिन्धनमेकं हूंफडित्यनेन क्रव्यादाग्निं नैर्ऋत्यां त्यजेत्। जानुभ्यामवनीं स्पृष्ट्वा वह्निं मध्ये संस्थाप्य क्लीं महात्रिपुरसुन्दरी[1]वह्निमूर्तये नमः[2] इति देवीं संपूज्य नाभिमण्डलाद्वहन्नासापुटेन तदग्निना बाह्याग्निमेकीकृत्य यजेत्। मूलं ऐंक्लींसौःआंसोऽहं वह्निचैतन्याय[3] नमः इति कामेश्वरीगर्भे वह्निं संचिन्त्य तद्देहे षडङ्गानि—सहस्रार्चिषे हृदयाय नमः, स्वस्तिपूर्णाय शिरसे स्वाहा, उत्तिष्ठपुरुषाय शिखायै वषट्, धूमव्यापिने कवचाय हुं, सप्तजिह्वाय नेत्रेभ्यो वौषट्, धनुर्धरायास्त्राय फट् इति यष्ट्वा तप्तजाम्बूनदप्रभं शक्तिस्वस्तिकधरं वरदाभयशोभितकरपङ्कजं दिव्यालंकारभूषितकरविग्रहमम्भोजसंस्थं शुक्लाम्बरधरं त्रिनयनं बद्धमौलिं ध्यात्वा, चक्रे सप्तजिह्वाश्च ईशाने यूँ लोहितां, पूर्वे रूँ रक्तां, आग्नेये नूँ नीलां, नैर्ऋते वूँ कृष्णां, पश्चिमे शूँ शुभ्रां, दक्षे करालीं, उत्तरे बहुरूपां जप्त्वा कामेशीगर्भोद्भववह्नेः सर्वभावेभ्यो नम इति मन्त्रैर्गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्मनामकरणान्नप्राशनचूडोपनयनकर्म निर्वर्त्य, अमुकाग्नेरमुककर्म कल्पयामि इति विधाय परिषिच्य परिस्तीर्य परिधाय पुनर्ध्यात्वा अग्निमन्त्रेणाग्निं त्रिकोणे पूजयित्वा सप्तजिह्वासु सप्ताहुतीर्हुत्वा वैश्वानर-उत्तिष्ठ-चित्पिङ्गलैस्त्रिधाहुतिं[4] विधाय षडङ्गानि ष-

---

१ 'रीं' क. पाठः। २ 'नमोदे' क. पाठः। ३ 'यै' क. पाठः। ४ 'तिं' क. पाठः।

ट्कोणेषु, अष्टदलेषु अग्नये जातवेदसे सप्तजिह्वाय हव्यवाहनाय अश्वोदरजाय वैश्वानराय कौमारतेजसे विश्वमुखाय देवमुखाय नम इति, लोकपालांश्च भूगृहे, वह्नेर्दक्षिणतो ब्रह्माणमाराध्य आज्यस्थालीं पुरतो निधाय बहुरूपायां जिह्वायां श्रीचक्रराजं तदन्तःस्थां चित्कलामशेषरश्मिमण्डितामालोच्य यष्ट्वा नित्यं हुत्वा कुण्डं मण्डपधूपैरापूर्य दीपैरुज्ज्वाल्य समिधं हुत्वा जुहुयादिष्टमेव च बलीन्प्रदाय ओंभूरग्नये च पृथिव्यै च महते च स्वाहा, ओंभुवो वायवे चान्तरिक्षाय च महते च स्वाहा, ओंस्वरादित्याय दिवे च महते च स्वाहा, ओंभूर्भुवःस्वश्चन्द्रमसे च नक्षत्रेभ्यश्च स्वाहा, इति चतुर्भिर्मन्त्रैर्व्याहृतिहोमं कृत्वा ब्रह्मार्पणमतः परं समिधं हुत्वा देवीमभ्यर्च्य विसृजेदिति ॥

नित्यहोमो मया प्रोक्तः काम्यहोममतः शृणु ।
मल्लिका-मालतीजातीकुसुमैर्मधुमिश्रितैः ॥ १२ ॥
घृतपूर्णैः (कु ? फ) लैर्वापि वागीशत्वं प्रजायते ।
(यवा ? जपा) पुष्पैराज्ययुतैः करवीरैस्तथाविधैः ॥ १३ ॥
हवनान्मोहयेन्मन्त्री लोकत्रयनिवासिनः ।
चम्पकैः पाटलैर्हुत्वा श्रियमाप्नोत्यनुत्तमाम् ॥ १४ ॥
कमलै (र्वं ? र) रुणैर्होमः सम्यक् संपत्तिदायकः ।
रक्तोत्पलैर्जगद्वश्यं नीलैर्दुष्टान्वशं नयेत् ॥ १५ ॥
(स्रो ? श्वे) तोत्पलैः श्रियं राज्यं लभते हवनात्प्रिये ।
कह्लारहवनैर्लक्ष्मीं सर्वसौभाग्यमेव च ॥ १६ ॥

बन्धूककुसुमैर्होमे[1] सर्वसत्त्वान् वशं नयेत् ।
क्षीरं दधि मधु त्वाज्यं पृथग्हुत्वा वरानने ॥ १७ ॥
आयुर्बलमथारोग्यं समृद्धिर्जायते नृणाम् ।
रुधिराक्तेन च्छागस्य मांसेन निशि होमतः ॥ १८ ॥
मधुरत्रययोगेन गुरुणोक्तविधानतः ।
परराष्ट्रं वशं नीत्वा कामभोगी भवेन्नरः ॥ १९ ॥
द्राक्षाभिर्लक्षहोमेन सिद्धयोऽष्टौ भवन्ति हि ।
कदलीफलहोमेन नारिकेलफलैस्तथा ॥ २० ॥
राजानो वशमायान्ति समृद्धिरतुला तथा ।
जम्बूफलैः स्त्रियः सर्वा वश्या भवन्ति निश्चितम् ॥ २१ ॥
श्रीफलैरतुला लक्ष्मीः पत्रैश्चापि तथा भवेत् ।
इक्षुखण्डैः सुखावाप्तिस्तद्रसैर्वशगा नृपाः ॥ २२ ॥
तिलाज्यहोमतो देवि सर्वकार्याणि साधयेत् ।
घृतपायसहोमेन सिताज्यमधुना सह ॥ २३ ॥
त्रैलोक्यं वशमायाति धनधान्यमवाप्नुयात् ।
सोपस्कारैश्च वटकैरुपसर्गान्विनाशयेत् ॥ २४ ॥
कर्पूरस्य च होमेन वाग्वशं[2] जायते नृणाम् ।
कुङ्कुमैर्होमतो देवि सर्वदुःखानि नाशयेत् ॥ २५ ॥
कस्तूरीहोमतो देवा वशगा नात्र संशयः ।
चन्दनागुरुहोमेन सर्वांल्लोकान् वशं नयेत् ॥ २६ ॥
शृणु देवि प्रवक्ष्यामि मानं हवनसिद्धये ।
पुष्पं समग्रं जुहुयाच्छतसंख्यां[3]स्तिलांस्तथा ॥ २७ ॥

---

१ 'हुनेद्वापि' क. पाठः 'मात्' ख. पाठः । २ 'श्यं' क. पाठः । ३ 'ख्या।स्तिलास्तथा' क. पाठः ।

लाजा मुष्टिप्रमाणाः स्युर्घृतं कर्षप्रमाणकम् ।
चुल्लुकार्धं मधु क्षीरमन्नं ग्रासमितं भवेत् ॥ २८ ॥
समग्रैश्च सखण्डैश्च फलानां च यथेच्छया ।
रम्भाफलं चतुःखण्डं लघु चेत् खण्डितं नहि ॥ २९ ॥
नारिकेलस्य खण्डं तु स्थूलं कुर्यान्मनःप्रियम् ।
प [ र ? र्व ] स्थाने चेक्षुदण्डं मनःसंतोषकारकम् ॥ ३० ॥
द्राक्षाफलं समग्रं स्याद् गुञ्जामानं ततो भवेत् ।
कर्पूरकौ( षि ? शि )कादीनां* मनःसंतोषकारकम् ॥ ३१ ॥
एतदाहुतिमानं च कथितं सर्वसिद्धिकृत् ।
किंशुकैः पापसंघातनाशकैरथवा प्रिये ॥ ३२ ॥
नानाद्रव्यैः पृथग्भूतैः संगृहीतैर्वरानने ।
यथाशक्त्या तु मिलितैर्होमं कुर्याद्विचक्षणः ॥
सर्वविघ्नसमूहं तन्नाशयेन्नात्र संशयः ॥ ३३ ॥

इति श्रीगन्धर्वतन्त्रे पार्वतीश्वरसंवादे होमतद्द्रव्य-
विधिनिरूपणं नामैकत्रिंशः पटलः ॥ ३१ ॥

---

* कौशिको मृगमदः आदिना घुसृणं ग्राह्यम् ।
१ 'हा' क. पाठः ।

## द्वात्रिंशः पटलः ।



देव्युवाच

वह्नीन्द्वर्कमयी मुद्रा प्रतिष्ठा च कथं भवेत् ।

ईश्वर उवाच

सोमसूर्याग्निरूपाः स्युर्वर्णा लो(क? ह)त्रयं तथा ॥ १ ॥
स्वराः षोडश सौम्यास्ते सौराः स्युः कादयोऽपरे ।
आग्नेयास्ते समुद्दिष्टा यादयो दश चापरे ॥ २ ॥
रौप्यमिन्दुस्तथा हेम सूर्यस्ताम्रं हुताशनः ।
लोहभागाः समुद्दिष्टा स्वराद्यक्षरसंख्यया ॥ ३ ॥
तैर्लोहैः कारयेन्मुद्रामसंकलितसंगताम् ।
पञ्चामृतैः पञ्चगव्यैः क्षालयित्वा शुभेऽहनि ॥ ४ ॥
भानुवारे शुभे लग्ने पूर्वोक्तमातृकाम्बुजे ।
मध्यादि स्थापयेत्तेषु पत्रेषु कलशानपि ॥ ५ ॥
तन्तुभिर्वेष्टिताञ् शुद्धान् बहिश्चन्दनचर्चितान् ।
सुधूपवासितान्देवि दूर्वाक्षतसमन्वितान् ॥ ६ ॥
क्वाथेन पूरयेद्देवि यथावदक्षरौषधैः ।
रोचनाचन्द्रकाश्मीरलघुकस्तूरिकायुतैः ॥ ७ ॥

---

१ 'म' क. पाठः ।

आपूर्य गन्धतोयैस्तान्वेष्टयेदंशुकैः शुभैः ।
मुक्तामाणिक्यवैदूर्यगोमेदवज्रविद्रुमान् ॥ ८ ॥
पुष्परागं मरकतं नीलं चेति यथाक्रमम् ।
विन्यसेत्तेषु कुम्भेषु रत्नाङ्कितफलानि च ॥ ९ ॥
स्थापयेत् कुम्भवक्त्रेषु कोमलांश्चूतपल्लवान् ।
मध्यकुम्भे च मुद्रां तां विन्यस्य बहुमङ्गलैः ॥ १० ॥
बीजत्रयं त्रिधा कृत्वा मातृकां च त्रिधा तथा ।
विभज्य पूजयेद्देवि सोमसूर्यहुताशनान् ॥ ११ ॥
तत्रावाह्य यजेद्देवीं संमोहनीं परां ततः ।
प्राणानायस्य विधिवत् पूर्वंवन्मातृकां न्यसेत् ॥ १२ ॥
(वि ? त्रि) नेत्रां तरुणेन्द्वाभां बालार्ककिरणारुणाम् ।
अक्षमालाङ्कुशशरा[1]न् पाशं पद्मद्वयं तथा ॥ १३ ॥
आबिभ्रतीं कराम्भोजैः पुण्ड्रेक्षुचापपुस्तकै[2]म् ।
मायाश्रीकामबीजाद्यां नित्यां वर्णमयीं भजेत् ॥ १४ ॥
नानाविधैस्तु कुसुमैर्धूपैर्दीपैर्मनोहरैः ।
उच्चावचैरुपहारैः पूजयित्वा यथाविधि ॥ १५ ॥
शर्कराघृतसंयुक्तं पायसं च निवेदयेत् ।
पूजयेद्दिक्षु कुम्भेषु व्यापिन्यादीन्यथाक्रमम् ॥ १६ ॥
व्यापिनी पालिनी पश्चात् प्लाविनी क्लेदिनी तथा ।
धरिणी मालिनी चैव हर्षिणी शान्तिनी तथा ॥ १७ ॥
व्यापिन्यश्चाष्टसंख्या वै एताः पर्वतनन्दिनि[3] ।
साग्रं सहस्रं संजप्य स्पृष्ट्वा तां मुद्रिकां ततः ॥ १८ ॥

---

१ 'धरां' क. पाठः । २ 'कान्' क. पाठः । ३ 'नी' क. पाठः ।

होमयेत्संस्कृते वह्नौ सहस्रं हविषा तथा ।
तस्यां संपातयेद्देवि विधिनाहुतिशेषकम् ॥ १९ ॥
सम्मोहनीं समुद्दिश्य गृहीत्वाज्यं स्रुवेण तु ।
वीजत्रययुतां देवि मातृकां बिन्दुसंयुताम् ॥ २० ॥
वह्निभार्यान्वितां पश्चात् कृत्वा वै होमयेत्ततः ।
मण्डले मातृकादेव्याः शिष्यं निवेश्य सादरम् ॥ २१ ॥
सुरास्त्वामिति मन्त्रैस्तु नवभिः कलशैः शुभैः ।
अभिषिच्य विनीताय दद्यात्तां मुद्रिकां गुरुः ॥ २२ ॥
इयं रक्षाकरी मुद्रा विषरोगविनाशिनी ।
व्यालचौरमृगादिभ्यो रक्षां कुर्याद्विशेषतः ॥ २३ ॥
सर्ववश्यकरी शुद्धा शुद्धिदाशुद्धिहारिणी ।
तर्जन्यां धारयेदेनां विधिना मनुजेश्वरः ॥ २४ ॥
युद्धे विजयमाप्नोति श्रिया परमया युतः ।
विभजेन्मातृकां देवि नववर्गांस्तथोदितान् ॥ २५ ॥
नववर्गसमुत्पन्ना नवरत्नेश्वरा ग्रहाः ।
अर्केन्दुवक्रज्ञगुरुभृगुमन्दाहिकेतवः ॥ २६ ॥
नवरत्नैर्महेशानि मुद्रां कुर्याद्यथेच्छया ।
तद्रत्नेषु[2] ग्रहान्सर्वान् पूजयित्वा विधानतः ॥ २७ ॥
आवाह्य पूजयेद्देवीं संमोहनीं परां तथा ।
जपहोमादिकं सर्वं कुर्यात्पूर्वोक्तवर्त्मना ॥ २८ ॥
यो मुद्रां धारयेदेनां तस्य स्युर्वशगा ग्रहाः ।
वर्धते तस्य सौभाग्यं लक्ष्मीरव्याहता भवेत् ॥ २९ ॥

---

१ 'न्या' क. पाठः । २ 'तेषु रत्नेषु' क. पाठः ।

द्रोहिणस्तस्य नश्यन्ति नश्यन्ति सकलापदः ।
रक्षोभूतपिशाचाद्या ने(श्य ? क्ष)न्ते तं भयातुराः ॥३०॥
उपर्युपरि वर्धन्ते धनरत्नानि संपदः ।
विना प्रतिष्ठया मुद्रां धारयित्वा पतत्यधः ॥
नाप्नोति च फलं तस्माद्धारयेद्विधिना प्रिये ॥ ३१ ॥

इति श्रीगन्धर्वतन्त्रे पार्वतीश्वरसंवादे मुद्राधारण-
विधिनिरूपणं नाम द्वात्रिंशः पटलः ॥ ३२ ॥



# त्रयस्त्रिंशः पटलः ।



देव्युवाच

चक्रराजस्त्वया प्रोक्तः प्रतिष्ठा न प्रकाशिता ।

ईश्वर उवाच

चक्रे मूर्तौ तथा शिष्ये प्रतिष्ठा त्रिविधोच्यते ॥ १ ॥
प्रतिष्ठितस्तथा शिष्यो दीक्षया खलु पार्वति ।
अर्चां[1] रत्नमयीं कृत्वा हैमीं वा राजतीं[2] प्रिये ॥ २ ॥
प्रतिष्ठां विधिवत् कुर्यात् संस्थाप्य च गृहे शुभे ।
मासि मासि चरेद्यात्रां महाविभवविस्तरात् ॥ ३ ॥
चतुःषष्ट्युपचारैस्तु पूजां कुर्याद्दिने दिने ।
दीक्षोक्तविधिना पूर्वमधिवासादिकं चरेत् ॥ ४ ॥
वासोभूषणगन्धाद्यैः कार्यतत्त्वार्थविद्गुरुः
उक्तेन विधिना पूर्वं कृत्यं निर्वर्त्य देशिकः[3] ॥ ५ ॥
पञ्चामृतैः पञ्चगव्यैः क्षालयेच्चक्रराजकम् ।
तथाविधे गृहे वेद्यां पूजयित्वा यथाविधि ॥ ६ ॥
नानाकुसुमसौरभ्यवासितेऽतिमनोहरे ।
सुषुम्नाव ( र्तिने ? र्त्मना ) चक्रं पर्यङ्केऽथ निवेशयेत् ॥ ७ ॥

---

१ 'अर्च्यां' क. पाठः । २ 'राम्' ख. पाठः । ३ 'दै' ख. पठः ।

कुकुङ्‌मागुरुकस्तूरीकर्पूरैरथ चन्दनैः ।
विलिप्य विविधैर्गन्धैः कुङ्कुमैरपि योजयेत् ॥ ८ ॥
दिव्येन वाससाच्छाद्य कर्पूरैरधिवासयेत् ।
धूपैः सुधूपितं कृत्वा दीपैरुज्ज्वाल्य पार्वति ॥ ९ ॥
कर्पूरवासितैस्तोयैः पूरितान् कलशान् शिवे ।
एकाशीतिपदे तत्र स्थापयेद्वस्त्रवेष्टितान् ॥ १० ॥
हेमगर्भान्समाञ्छुद्धान् पुष्पमालाद्यलंकृतान् ।
एकाशीतिपदोपेतं चतुरस्त्रं तु मण्डलम् ॥ ११ ॥
ब्रह्मचारी गुरुस्तत्र सशिष्यश्चापि संविशेत् ।
प्रातरेव तु तत्सर्वं विनिर्वर्त्य विधानतः ॥ १२ ॥
पूर्वोक्तेन विधानेन प्रविशेन्मण्डपे गुरुः ।
पूर्ववदपरं कृत्वा आसनमुपविश्य च ॥ १३ ॥
तथासनं च निर्वर्त्य चक्रमुत्थापयेत् ततः ।
पञ्चामृतैः पञ्चगव्यैः क्षालयित्वा विधानतः ॥ १४ ॥
निधाय भद्रपीठे च तत्र देवीं विभावयेत् ।
क्षौद्राज्यदुग्धैः प्रथमं नारिकेलाम्भसा ततः ॥ १५ ॥
इक्षुरसैस्तथा तोयैरभिषिच्य समन्त्रकम् ।
तैरेव कलशैः सम्यगभिषिञ्चेद्यथाविधि ॥ १६ ॥
सर्वतीर्थाम्बुपूर्णेन भृङ्गारेणाभिषिच्य वै ।
चक्रं[1] कराभ्यामुद्धृत्य स्थापयेद्धेमपीठके ॥ १७ ॥
ततो देवीं हृदि ध्यात्वा यथोक्तध्यानयोगतः ।
आवाह्य चक्रमध्ये च तथैवैकाग्रचित्तवान् ॥ १८ ॥

---

१ 'कराभ्यामुद्धृत्य तच्चक्रं' क. पाठः ।

निर्वर्त्य विधिना देवि चक्रं स्पृष्ट्वा करेण च ।
कुङ्कुमागुरुकस्तूरीरोचनाचन्दनेन्दुभिः ॥ १९ ॥
विलिप्याथ पुनश्चक्रं सुवर्णस्य शलाकया ।
रेखोन्मीलनमापाद्य यजेदाधारपूर्वकम् ॥ २० ॥
प्राणप्रतिष्ठामन्त्रेण प्राणांस्तत्र निवेशयेत् ।
❀क्षीरोदधिः सनादेन बिन्दुना परिमण्डितः ॥ २१ ॥
नकुलीशोऽग्निमारूढो मायानादेन्दुलाञ्छितः ।
कामदेवोऽग्निमारूढः सद्योजातेन भूषितः ॥ २२ ॥
नादबिन्दुकलायुक्तः सर्वप्राणप्रदायकः ।
बीजत्रयमिदं देवि शिवबीजं सचन्द्रकम् ॥ २३ ॥
तदन्ते परमेशानि (स्व ? स)र्गवान् भृगुरव्ययः ।
ततो भू(यात्तु ? यस्तु)षष्ठ्यन्ता महात्रिपुरसुन्दरी ॥ २४ ॥
क्रमात्प्राणा इह प्राणास्तथा जीव इह स्थितः ।
अमुष्याः सर्वेन्द्रियाणि भूयोऽमुष्याश्च पार्वति ॥ २५ ॥
वाङ्मनोनयनश्रोत्रघ्राणप्राणास्तथैव च ।
पश्चादिहागत्य सुखं चिरं तिष्ठन्त्वग्निप्रिया ॥ २६ ॥
अयं प्राणमनुः❀प्रोक्तः सर्वजीवप्रदायकः ।
अनेन मनुना देव्याः प्राणांस्तत्र निवेश्य च ॥ २७ ॥
स्पृशञ्जपेत् कराग्रेण श्रीचक्रं पूजयेत्ततः ।
उपचारैस्तथा प्रोक्तैस्त्रिसंध्यं त्रिदिनं यजेत् ॥ २८ ॥

---

❀ सनादादिः क्षीरोदधिः आँ, रेफमारूढो नकुलीशो ह मायादिना ईँबीजेन लाञ्छितः । कामदेवः क अग्निः रेफः सद्योजातः ओं तेन क्रौं, शिवबीजं सचन्द्रकमिति हंसः, । ततः सर्गवानित्यादिना सोहमिति बीजोद्धारः ।

❀ आँह्रीँक्रौँहंसःसोहं महात्रिपुरसुन्दर्याः, प्राणा इह प्राणा १ँ जीव इह स्थितः १ँ सर्वेन्द्रियाणि १ँ वाङ्मनोनयनश्रोत्रघ्राणप्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहेति स्पष्टम् ।

१ 'न्मे' क. पाठः ।

तत्र तत्र महादेवीं होमयेद्विधिना तथा ।
अष्टोत्तरशतं देवि पायसैर्मधुराप्लुतैः ॥ २९ ॥
वाद्यैर्नानाविधैर्देवि नृत्यगीतपुरःसरैः ।
जयशब्दान्वितैः स्तोत्रैर्महोत्सवमुदान्वितः ॥ ३० ॥
कृत्वाथ गुरुवे दद्याद्दक्षिणां पूर्वसूचिताम् ।
प्रमदाः परितोष्याथ ब्राह्मणानपि तोषयेत् ॥ ३१ ॥
एवं देवि प्रतिष्ठायां देवीसांनिध्यकारकः ।
यन्त्रे मन्त्रे कुले चैव कुलालंकरणे तथा ॥ ३२ ॥
त्रैपुरे चास्त्रशस्त्रे[1] च पूजयेद्वा तथात्मनि ।
प्रतिमायां तथा वह्नौ शिवलिङ्गे तथा गुरौ ॥ ३३ ॥
पूजाधाराणि देवेशि कथितानि मयानघे ।
नान्यत्र पूजयेद्देवीं यदीच्छेद[2]ात्मनो हितम् ॥ ३४ ॥

इति श्रीगन्धर्वतन्त्रे पार्वतीश्वरसंवादे चक्रराज-
प्रतिष्ठानिरूपणं नाम त्रयस्त्रिंशः पटलः ॥ ३३ ॥

---

१ 'शा' क. पाठः । २ 'दि' क. पाठः ।

## चतुस्त्रिंशः पटलः ।

ईश्वर उवाच

कुलाचारं शृणु प्राज्ञे प्रकीर्णं कथ्यते मया ।
(अमा?विना मान्) दक्षिणं वामं नोपेोष्य[1] परमां यजेत् ॥ १ ॥
प्राणिहिंसां न कुर्वीत न चात्मानं प्रपीडयेत् ।
हेतुद्रव्यमनास्वाद्य न स्मरेत्सुन्दरीं शिवे ॥ २ ॥
विना मद्येन मांसेन परस्त्रीरमणं विना ।
यजनं तु महादेव्या अगव्यं भोजनं यथा ॥ ३ ॥
अनैक्षवमगव्यं च भोजनं मृतभोजनम् ।
उपवासव्रतं नैव कुर्यादिह कदाचन ॥ ४ ॥
दुर्गन्धवदनो वापि विरागवदनोऽपि च ।
अकौलभूषणो वापि रक्तपुष्पविवर्जितः ॥ ५ ॥
अविश्वासहृदा युक्तः शिवस्य पत्रधारकः ।
तथा नान्यमना भूत्वा सुन्दरीं समुपासयेत् ॥ ६ ॥
अतो न तुलसीपुष्पैस्तत्पत्रैर्न यजेत्पराम् ।
कन्यायोनिं न वीक्षेत[3] बीभत्सुं न विलोकयेत् ॥ ७ ॥
न नग्नां नान्ययोषां च न वीक्षेत्प्रकटस्तनीम् ।
क्रीडाकुलकुमारीणां दर्शनाद्वन्दनं शिवे ॥ ८ ॥

---

१ 'नैवो' क. पाठः । २ 'च' क. पाठः । ३ 'युः' क. पाठः ।

न दुष्यति मनो येन नारीणां तत्समाचरेत् ।
नारीणां विप्रियं कृत्वा सिद्धोऽपि नश्यति ध्रुवम् ॥ ९ ॥
नैकवारं समश्नीया(न्नहृत्यं ? न्नाहार्यं)पूतिगन्धयुक् ।
स्वयं हृद्यं स्थिरं स्वादु प्रशस्तं मधुरं तथा ॥ १० ॥
आहा( रं ? र्यं )साधकेन्द्राणामल्पमल्पतरं शिवम् ।
कट्वम्ललवणानां च नातिप्रियतरं[१] भवेत् ॥ ११ ॥
यद्भुङ्क्ते जीर्यते शीघ्रं तदश्नीयान्न चाधिकम् ।
यदिच्छा जायते भोक्तुं तदश्नीयादपूर्णकम् ॥ १२ ॥
एकदाच्छादिते वह्नौ नैव वृद्धिं प्रयाति सः ।
तस्मात्सावहितो वह्निं व(न्ध ? र्ध)येद्युक्तमा(ज्ञ ? त्र)तः[२] ॥ १३ ॥
समाने तु स्थिते वह्नौ शरीरं स्यान्निरामयम् ।
निरामये शरीरे तु सर्वकर्माणि साधयेत् ॥ १४ ॥
विषमस्थो यदा वह्निः शरीरं स्यान्निरर्थकम् ।
शरीरं तु मनुष्याणां पुरुषार्थैकसाधकम् ॥ १५ ॥
तस्मात् सर्वप्रयत्नेन ( शु ? शो )धयेत्तन्निरामयम् ।
देवा[३] अपि जयन्त्यत्र किं पुनर्मानवादयः ॥ १६ ॥
भवाब्धेस्तरणोपायं तरणी वर्ष्म चोच्यते ।
निर्गदेन शरीरेण सुखं तरति दुस्तरम् ॥ १७ ॥
सरुजा व( र्त्म ? र्ष्म )णा देवि जीवनं विफलं शिवे ।
धूमागारे चान्धकारे चाज्ञाते[४] पूजनं शिवे ॥ १८ ॥
नरकाय महादेव्याः पूजनं विद्धि पार्वति ।
सत्ये चास्थिगताः प्राणास्त्रेतायां मांसगा मताः ॥ १९ ॥

---

१ 'रो' क. पाठः । २ 'युक्तिमाचरः' ख. पाठः । ३ 'दैवात्त्वपि यज' क. पाठः ।
४ 'ने' क. पाठः ।

द्वापरे त्वग्गताः प्राणाः कलावन्नगता मताः।
निराहारव्रतं देवि कलौ तेन विवर्जितम् ॥ २० ॥
बलिदानं विना हिंसां कलौ नैवात्र कारयेत्।
न स्वयं छेदयेद्देवि बलिं साधकसत्तमः ॥ २१ ॥
बलिदानं विना देव्याः प्रीतिर्नान्यैस्तथा भवेत्।
प्रोक्षणे तु परो मन्त्रः सोऽयमेव प्रकीर्तितः ॥ २२ ॥
उद्बुध्यस्व पशो[1] त्वं हि नापरस्त्वं शिवोऽसि हि।
शिवोत्कृत्यं[2]मिदं पिण्डमतस्त्वं शिवतां व्रज ॥ २३ ॥
बहवो नैव हन्तव्या यदीच्छेदात्मनो हितम्।
बहवो यत्र हन्यन्ते तत्र कृत्या क्षयंकरी ॥ २४ ॥
भवत्येवाचिरेणैव बन्धनोच्चाटनं शिवे।
आत्मप्राणसमा देवि परेषामपि सा कथा ॥ २५ ॥
परहिंसाभवोऽधर्मः क्रमात् सर्वं हरिष्यति।
य इहात्मकृते देवि परान्नि[3]ष्पीड्य जीवति ॥ २६ ॥
नेहापि लभते सिद्धिं परत्रापि कदाचन।
यो वा विधिमनादृत्य जन्तून् हत्वा शिवां यजेत् ॥ २७ ॥
भवन्त्येव महोत्पाता(य ? स्त)त्र तस्य न संशयः।
यज्ञादिषु महेशानि हिंसया दारुणाज्ञया ॥ २८ ॥
परहिंसाभवोऽधर्मः परिणामेऽतिदुःखदः।
तथैव प्रतिजा[4]नेऽहं मोहात्किं वा न दृश्यते ॥ २९ ॥
कियत्कालसुखावाप्ति[5]काम्यया कामुकान् शिवे।
हन्तीह परमो मोहः परमोहः सुदारुणः ॥ ३० ॥

---

१ 'शोस्तुष्टिं नापरस्तं' क. पाठः। २ 'शिवायत्तमिदं' क. पाठः।
३ 'निष्पाद्य' क. पाठः। ४ 'नीहि' ख. पाठः। ५ 'प्तिः' क. पाठः।

ममत्वं[1]समता देहे प्रिये चातिसुदुर्लभे ।
तस्मादेषु महद्दुःखं नान्यत्र खलु पार्वति ॥ ३१ ॥
देहत्यागे शुनो य(स्मा ? द्व)त्तथेन्द्रचन्द्रयोरपि ।
आवयोर्जायते प्रीतिः कामदा कामुकस्य च ॥ ३२ ॥
न शस्तं मारणं कर्म ब्रह्मासौ ब्रह्मसाधके ।
यदा सर्वाणि भूतानि स्वात्मैव परिपश्यति ॥ ३३ ॥
सर्वभूतमिवात्मानं ब्रह्म संपद्यते तदा ।
शक्तिर्महेश्वरो ब्रह्म त्रयस्तुल्यार्थवाचकाः ॥ ३४ ॥
स्त्रीपुंनपुंसको भेदः शब्दतो न परार्थतः ।
अन्ते सिद्धिर्भवेत्पुंसां वशगा भोगमोक्षदा ॥ ३५ ॥
स्त्रीणामपीह पुंरूपो वशगः सर्वसिद्धिदः ।
नपुंसकात्मकं तत्तु स्वयमेव प्रकाशते ॥ ३६ ॥
द्वयोरेकतराद्वैतयोगान्मतैकभावना ।
निष्ठीवनं[2]रवं छिक्कामधोवायुविसर्जनम् ॥ ३७ ॥
पूजामध्ये तु यः कुर्यात् स भवेद्योगिनीपशुः ।
देशानां व्यवहारा(णि ? दि)विज्ञाय मतिमान् सदा ॥ ३८ ॥
पञ्चमादिपराम(र्षः ? र्श)स्वतन्त्रो न भवेत् क्वचित् ।
यत्र देशे यं[3] आचारस्तत्र धर्मस्तु तादृशः ॥ ३९ ॥
अविरोधः सर्वभूतैः परिपन्थिषु निग्रहः ।
अनुग्रहः संश्रितेषु देववत् पुरुषेऽपि च ॥ ४० ॥
गुरुपुत्रकलत्रादि गुरुवदेव संश्रयेत् ।
पर्वसु च विशेषार्चा[4] कुलवृक्षान्नपल्लवः ॥ ४१ ॥

---

१ 'त्वं ममता' क. पाठः । २ 'वलं वरं शूका' क. पाठः ।
३ 'च' क. पाठः । ४ 'र्चात्' क. पाठः ।

अनिच्छा मिथ्यावचने परदारधनेषु च ।
स्वस्तुतौ परनि(न्देच?न्दायां)आनन्दंचापि न स्पृशेत् ॥ ४२॥
संभाष्याभिमुखीं शक्तिं नासंभाष्य व्रजेत् क्वचित् ।
स्त्रीणां समूहमालोक्य प्रणमेद्भावतत्परः ॥ ४३ ॥
पुण्ड्रेक्षुदण्डजातानि भक्षयेन्न कदाचन ।
प्राज्ञेनैव सदा कार्या पूजा सर्वसमृद्धिदा ॥ ४४ ॥
आगमोक्तविधौ दृष्ट्या त्यजेद्दोषं[1] तु पञ्चमे ।
स्नायात् सुगन्धिसलिलैः स्याद्देहो निर्मलो यथा ॥ ४५ ॥
निर्मलं धारयेद्वासः सर्वदा निर्मलः शुचिः ।
सुस्निग्धदेहवदनो न रूक्षः स्यात् कदाचन ॥ ४६ ॥
कृत्वा सुमङ्गलं देहं मृदुभाषणतत्परः ।
न बहु प्रलपेद्धीरो नैव रूक्षं कदाचन ॥ ४७ ॥
गन्धर्वरूपवान् भूत्वा वीणावादनतत्परः ।
मदिराघूर्णनयनो मदिराक्षीसमन्वितः ॥ ४८ ॥
सर्वदा देवताभावः संगीतरसपारगः ।
यतिर्वा भूपतिर्वापि प्रशस्तः साधकोत्तमः ॥ ४९ ॥
भूपतिर्व्यस्तसंभारैर्यतिरिन्द्रियनिग्रहैः ।
चतुराश्रमिणां मध्ये ह्यवधूताश्रमो महान् ॥ ५० ॥
खादन् मांसं पिबन् मद्यं विषयी विषयान्(यु?जु)षन् ।
रामारामो रमणीभिर्भूषिताभिर्विभूषितः ॥ ५१ ॥
तत्तदानन्दसंदोहैरानन्दितान्तरात्मवान् ।
निस्पन्देन्द्रियवान् यस्तु सोऽवधूतो यतिर्महान् ॥ ५२ ॥

---

१ 'पमप' क. पाठः । २ 'चि' क. पाठः ।

स्रक् चन्दनं च वस्त्रादि भूषणं यद्विलेपनम् ।
यदृच्छयोपपन्नं यत् तदप्यन्यैर्निवेदितम् ॥ ५३ ॥
अगृध्नुरुपयुञ्जीत न चासक्तमना भवेत् ।
एकान्तविजने रम्ये सदा योगं समभ्यसेत् ॥ ५४ ॥
इन्द्रियाणि यदा भिक्षोश्चञ्चलानि महात्मनः ।
तदा पर्यटनं कार्यं तीर्थादिषु प्रयत्नतः ॥ ५५ ॥
विभूतिभूषणो भिक्षां कुर्वन्नैकत्र[1] संवसेत् ।
त्वं मातर्देहि मे भिक्षां कुण्डलीं[2] तर्पयाम्यहम् ॥ ५६ ॥
विभूतिमतुलां प्राप्य न मत्तो नैव मत्सरी[3] ।
संपत्तौ च निरानन्दः समरूपगुणान्वितः ॥ ५७ ॥
सर्वदानन्दहृदयो दानभोगपरायणः ।
प्रासादे चोत्तमे रम्ये लाक्षारुणसमप्रभे ॥ ५८ ॥
दिव्योपकरणैर्युक्ते मणिकाञ्चनभूषिते ।
पराध्यास्तरणे रम्ये रत्नसिंहासने शुभे ॥ ५९ ॥
नानाकुसुमसौरभ्यसुरभीकृतदिङ्मुखे ।
चन्दनागुरुकर्पूरधूपैः संमोदितान्तरे ॥ ६० ॥
कर्पूरज्वलितैर्दीपैरुज्ज्वले रत्नसंज्वले ।
शरच्चन्द्रनिभं छत्रं मुक्तामाणिक्यमण्डितम् ॥ ६१ ॥
हेमदण्डशिखालम्बिश्वेतचामरभूषितम् ।
निधायोर्ध्वे विशेत् तत्र कृतासनपरिग्रहः ॥ ६२ ॥
चन्दनागुरुकर्पूरमृगनाभिविलेपितः ।
सर्वशृङ्गारवेशाढ्यो रत्नभूषाविभूषितः ॥ ६३ ॥

---

१ 'त्र चिरं वसेत्' क. पाठः । २ 'लीस्त्व' क. पाठः । ३ 'रः' क. पाठः ।

स्रग्भिर्विचित्रभूषाभिर्भूषितोऽतिमनोहरः ।
कर्पूरशकलोन्मिश्रताम्बूलपूरिताननः ॥ ६४ ॥
निर्वृत्ताखिलचिद्वृत्तिर्मदिराघूर्णलोचनः ।
विधाय पु[1]रतः शक्तिं सुवेशां सुमनोहराम् ॥ ६५ ॥
दुकूलक्षौमकौ[2]शेयैर्नानारत्नैर्विराजिताम् ।
निर्लेपं निर्गुणं शुद्धमात्मानं त्रिपुरामयम् ॥ ६६ ॥
आत्माभेदेन संचिन्त्य याति तन्मयतां नरः ।
भोगेन मोक्षमाप्नोति स्वयं त्रिपुरभैरवः ॥ ६७ ॥
तत एव समुत्पन्ना ब्रह्मविष्णुमहेश्वराः ।
तदेवैते न संदेहस्तस्माद्भिन्नं न भावयेत् ॥ ६८ ॥
भेदावभाषि[3]णो मूढाः पतन्त्येव वरानने ।
सर्वदा[4] सर्वदाः सर्वास्तोषयेद्भूषयेत् स्त्रियः ॥ ६९ ॥
वासोभूषणगन्धाद्यैः पेयैर्भक्ष्यैर्मुदान्वितः ।
प्रथमे राजसो भूत्वा द्वितीये तामसो भवेत् ॥ ७० ॥
तृतीये सात्त्विको धर्मी तु[5]र्ये पञ्चपरायणः ।
पूजाहोमजपान्तेऽस्या बलिभिः शत्रुनिग्रहैः ॥ ७१ ॥
दानभोगैस्तृतीये च चतुर्थे स[6]मतात्मनः ।
तच्चित्त[7]स्तद्गतप्रा[8]णो मदिरामदविह्वलैः[9] ॥ ७२ ॥
सात्त्विको दिव्यभावस्तु स्थिराय जायते पुनः ।
नाशाय (सै ? चै) व भावस्तु तामसः खलु मानुषे ॥ ७३ ॥
विपर्ययाद्भवेन्मृत्युरकालसंभवः शिवे ।
विषशस्त्रजनैश्चोरैर्दस्युभिर्वा वरानने ॥ ७४ ॥

---

१ ‘परितः’ क. पाठः । २ ‘पे’ क. पाठः । ३ ‘भासिनो’ क. पाठः । ४ ‘दाः’ क. पाठः ।
५ ‘चतुर्थे’ क. पाठः । ६ ‘म’ क. पाठः । ७ ‘त्ता’ क. पाठः । ८ ‘णा’ क. पाठः : ९ ‘लाः’ क. पाठः ।

विनाशं तस्य दुर्बुद्धेः समूलं विद्धि पार्वति ।
पुत्रमित्रकलत्रादिसुहृद्भृत्यादयोऽपरे ॥ ७५ ॥
विप्रा भ्रात्रादयो यस्य वि(सी? षी)दन्ति सुदुःखिताः ।
दुश्चरित्राः स्त्रियो यस्य भवन्त्यन्तःपुरे शिवे ॥ ७६ ॥
मृगयाभिरतिर्यस्य दुरोदरप्रियस्य च ।
अद्भुतानि च जायन्ते हाहाकारयुताः प्रजाः ॥ ७७ ॥
पीडिताः क्लेशविक्लिन्ना विपत् तस्य पदे पदे ।
यस्यैते चातिसंतुष्टाः सुस्था मङ्गलशंसिनः ॥ ७८ ॥
तस्यायुर्वर्धते नित्यं महालक्ष्मीः स्थिरा गृहे ।
कलहो यस्य देवेशि विना कारणमापतेत् ॥ ७९ ॥
नार्योऽमङ्गल(संशि? शंसि)न्यस्तस्य हानिं[1] विनिर्दिशेत् ।
एतेषामपि चान्येषां दोषाणां ग्रहसंकटे ॥ ८० ॥
आयुर्वृद्धौ तथा शान्त्यै कोटिहोमं चरेन्नृपः ।
कोटिहोमात् परं नास्ति कर्म रिष्टिविनाशने ॥ ८१ ॥
न तत्तुल्यं तथा राज्ञां[2] महोत्पातविनाशनम् ।
पुरश्चर्यां प्रकुर्वीत संध्यासु जपतत्परः ॥ ८२ ॥
वर्षैकेन हि तत् सिद्ध्येत् सर्वविघ्नविनाशनम् ।
ज्ञानलोपो भवेद्यस्य मद्यपानात् सुलोचने ॥ ८३ ॥
विकारं जनयेद्वापि स पुनर्यात्यधोगतिम् ।
प्रलापो[3] भ्रंशनं हास्यं क्रोधोन्मादभयानकाः ॥ ८४ ॥
आलस्यं वातिचिन्ता च परानिष्टप्रवर्तनम् ।
हिंसासूया तथेर्ष्या च दम्भमोहौ प्रमादता ॥ ८५ ॥

---

१ 'निः' क. पाठः । २ 'राज्ये' क. पाठः । ३ 'प' क. पाठः ।

आवेशो मरणं मूर्छा विकाराः समुदीरिताः ।
समता सर्वभूतेषु मानापमानयोः समः ॥ ८६ ॥
समः शत्रौ च मित्रे च समलोष्ठाश्मकाञ्चनः ।
ब्रह्मचिन्तोद्भवानन्दनिवृत्तबाह्यचित्तता ॥ ८७ ॥
सर्वकालेषु सर्वत्र समत्वं निर्विकारता ।
चक्षुषोरनिमेषत्वं मधुरस्मितभाषणम् ॥ ८८ ॥
अमृतस्य गुणा एते कथिता भुवि दुर्लभाः ।
वैराग्यं च मुमुक्षुत्वं त्यागिता सर्ववश्यता ॥ ८९ ॥
अष्टाङ्गयोगाभ्यसनं भोगेच्छापरिवर्जनम् ।
सर्वभूतेष्वनुकम्पा सर्वज्ञादिगुणोदयः ॥ ९० ॥
इत्यादिगुणसंपत्तिः सिद्धेर्लक्षणमुच्यते ।
ख्यातिर्वाहनभूषादिलाभः सुचिरजीवनम् ॥ ९१ ॥
नृपाणामङ्गनानां च राजत्वं लोकवश्यता ।
महैश्वर्यं धनित्वं च पुत्रदारादिसंपदः ॥ ९२ ॥
अधमाः सिद्धयः प्रोक्ता मन्त्रिणां प्रथमस्त्विह ।
सिद्धयस्तु सुराः साक्षान्मानवानामसंशयः ॥ ९३ ॥
यत्कृते परमेशानि निःश्वसन्ति कुलाङ्गनाः ।
सास्रुपातं विना पञ्च गद्गदं भृशदुःखिताः ॥ ९४ ॥
तस्य स्युर्विफलाः सर्वाः क्रियाः सर्वत्र चोदिताः ।
कान्तासंतापजो वह्निर्दहत्यासप्तमं कुलम् ॥ ९५ ॥
कान्ताः संतोषयेत् तस्माद्विप्रियं न मनाक् स्पृशेत् ।
संसिद्धेः कारणं कान्ता मूलं संसारवर्त्मसु ॥ ९६ ॥

---

१ 'स्व' क. पाठः ।

जाया मुख्यतमा प्रोक्ता यादौ पाणिप्रपीडिता ।
जायते स्वयमेवास्यां जाया तेन निगद्यते ॥ ६७ ॥
एका पतिव्रता भार्या साध्वी चेत्सहचारिणी ।
किमन्याभिर्महेशानि यथैवाहं त्वया प्रभुः ॥ ६८ ॥
श्रिया विष्णुः सरस्वत्या ब्रह्मा शच्या पुरंदरः ।
एकया चेप्सितं (कृत्वा ? कार्यं) मनसाकृष्य पूरुषम् ॥ ६६ ॥
त(स्याप्ये ? स्मादे) कां[1] समासाद्य नाप्यन्यां मनसा स्मरेत् ।
जाया चेत् कुलटा गेहे स्वयं कुलोपचारकः ॥ १०० ॥
मूषिकोपहतं कोषं तथा तस्य तदीरितम् ।
प्रयत्नेन विना देवि या स्वयमभिकाङ्क्षति ॥ १०१ ॥
यदा तदा तु सा तस्य परकीया न चोच्यते ।
हठादाकर्षते यस्तु प्रलोभ्य च धनादिभिः ॥ १०२ ॥
परकान्तां महेशानि स याति चाधमां गतिम् ।
स्वकान्ता परकान्ता वा कामविरहिता शिवे ॥ १०३ ॥
या नेच्छन्तीप्सयाश्रद्धां तां गत्वा च तथा भवेत् ।
दुःशीला तु यदा नारी त्यजेत् तां नैव ताडयेत् ॥ १०४ ॥
अतिदुष्टां स्त्रियं देवि नीचपुरुषगामिनीम् ।
राजद्वारि च दिग्वस्त्रां[3] त्यजेत् तां नैव संश्रयेत् ॥ १०५ ॥
कुलशास्त्रं कुलाचारान्[4] कामयागमनुत्तमम् ।
अयोग्येषु प्रकाश्यैव सिद्धोऽपि नश्यति ध्रुवम् ॥ १०६ ॥

इति श्रीगन्धर्वतन्त्रे पार्वतीश्वरसंवादे कुला-
चारवर्णनं नाम चतुस्त्रिंशः पटलः ॥ ३४ ॥

---

१ 'कं' ख. पाठः । २ 'न्यं' ख. पाठः । ३ 'ग्वासां' ख. पाठः । ४ 'रःकुल' क. पाठः ।

## पञ्चत्रिंशः पटलः ।

देव्युवाच

साधका गुप्तरूपाश्च तेषां साध्यं कथं भवेत् ।
साध्यं च कीदृशं देव काम्यं वा कीदृशं भवेत् ॥ १ ॥
पूजा च कीदृशी कार्या तन्मे वद सुविस्तरात् ।

ईश्वर उवाच

अत्यन्तगुप्तरूपेण काम्यं कृत्वार्चयेन्नरः ॥ २ ॥
तदा तत्काममाप्नो (ति म ? त्यान ) न्दभाक् शक्तिपूजनात् ।
पूजाफलेन दौर्भाग्यं दुःखदारिद्र्यसंकुलम् ॥ ३ ॥
सर्वं प्रशमनं याति चेश्वरो जायते भुवि ।
अतिगुप्ततरं यस्मात् तस्माद्रात्रौ विधीयते ॥ ४ ॥
प्रकटे कार्यहानिः स्यात् क्रुद्धा भवति सुन्दरी ।
गुरुभक्तिविहीनस्य विफलं साधनं प्रिये ॥ ५ ॥
अहं गुरुप्रसादेन सर्वगः सर्ववित् प्रभुः ।
शक्तेः पूजा सदा कार्या प्रसन्ना येन सा भवेत् ॥ ६ ॥
विफला शक्तिरहिता पूजाऽऽसवप्रसारिणी ।
ध्यानमानन्दरहितं यथा निष्फलमद्रिजे ॥ ७ ॥
शक्तौ दर्पं घृणां लज्जा वर्जयेत् क्रोधमत्सरम् ।
कदाचिद्दर्परूपेण पुष्पेणापि न ताडयेत् ॥ ८ ॥
शक्तौ न विस्मयः कार्यो यस्मात्सा तत्स्वरूपिणी ।
विस्मिता विलयं यान्ति पशवः शास्त्रमोहिताः ॥ ९ ॥

---

१ 'चं' क. पाठः ।

सुभक्त्या[1] प्रणमेद्यस्तु शक्तिमेकाग्रचेतसा ।
तस्य सर्वार्थसिद्धिः स्यादन्ते मोक्षमवाप्नुयात् ॥ १० ॥
निश्चयं मुक्तिमाप्नोति सहस्रै[2]शक्तिपूजनात् ।
शक्तिपूजासु विमुखः पामरः पुरुषाधमः ॥ ११ ॥
स निर्लज्जः कथं ब्रूते पूजयामि महेश्वरीम् ।
पूजाहोमं विना चेह नाधिकारः कथंचन ॥ १२ ॥
विना होमं महेशानि शक्तियागमकारणम् ।
शक्तियागं विना होमो निष्फलो नात्र संशयः ॥ १३ ॥
तस्माद्भावविशुद्धात्मा सर्वतन्त्रार्थकोविदः ।
साधकोऽपि च तत्त्वज्ञो नित्यं शक्तिं समाश्रयेत् ॥ १४ ॥
मदिराया न वा शक्तौ जातिवृत्तिं विचारयेत् ।
नानाजातिषु संभूतां व्रजेत् संप्राप्य न त्यजेत् ॥ १५ ॥
सर्वशङ्काविनिर्मुक्तः सर्वज्ञः साधकोत्तमः ।
शक्तियागविधिं कृत्वा भवेद्भूमौ पुरन्दरः ॥ १६ ॥
पूजयेदर्धरात्रे च निर्जने पशुवर्जिते ।
सर्वालंकारसुभगो गन्धचन्दनभूषितः ॥ १७ ॥
आकृष्य विमलां शक्तिं रमणीं वामलोचनाम् ।
हारा[3]लंकारसुभगां घृणालज्जाविवर्जिताम् ॥ १८ ॥
पराध्यास्तरणे रम्ये स्थापयेत्[4] तूलिकोपरि ।
स्थापयेत् सुरया पूर्णं कुम्भं वामे सुवासितम् ॥ १९ ॥
आनन्दहृदयं कृत्वा सद्यः प्रसन्नमानसः ।
गुरुं नत्वा विधानेन ह्यमृतं तद्विचिन्तयेत् ॥ २० ॥

---

१ 'स्व' क. पाठः । २ 'स्त्रं' ख. पाठः । ३ 'नाना' ख. पाठः । ४ 'दाफलो' क. ख. पाठः ।

मांसं मत्स्यं तथा मुद्रां निधाय पुरतः शिवे ।
अर्घ्यपात्रं तदा वह्निसूर्यसोमामृतं स्मरेत् ॥ २१ ॥
सिन्दूरेण ललाटेऽस्याः कृत्वा तिलकमद्रिजे ।
साध्यं च विलिखेत्तत्र मूलविद्याविदर्भितम् ॥ २२ ॥
गन्धैः पुष्पैस्तथा माल्यैर्भूषयित्वा तु तां पुनः ।
कृत्वा धूपेन सौगन्ध्यं दीपानुज्ज्वाल्य पार्वति ॥ २३ ॥
नाभेश्चरणपर्यन्तं वाग्भवं कूटमुत्तमम् ।
हृदयान्नाभिपर्यन्तं कामबीजं प्रविन्यसेत् ॥ २४ ॥
शिरसो हृत्प्रदेशान्तं तदीयं परिभावयेत् ।
सर्वदेवमयं देहं सर्वमन्त्रमयं वपुः ॥ २५ ॥
चिन्तयेत्साधकः शक्तिं साक्षात् कामेश्वरीं पुरः ।
हृदि हस्तं समादाय जपेदष्टोत्तरं शतम् ॥ २६ ॥
आत्मानं चिन्तयेत्कामं शक्तिं कामेश्वरीं पराम् ।
मुहुर्मुहुः पिबेन्मद्यं शक्तिजिह्वाविलोडितम् ॥ २७ ॥
मन्त्रशुद्धं पिबेन्मद्यं निःशब्दं[2] हास्यवर्जितः ।
भोजनान्ते विषं पानं पानान्ते भोजनं विषम् ॥ २८ ॥
अमृतं तद्विजानीयाद् यदन्नं सुरया सह ।
विष्णुना च पुरा पीता[3] शंकरेण ततः परम् ॥ २९ ॥
शक्रेण च तथा पीता पुष्पदन्तेन चैव हि ।
शुक्रेण च पुरा पीता दत्तात्रेयेण सेविता ॥ ३० ॥
श्रीमता बलरामेण समानीताथ भूतले ।
तस्मादिमां सुरां पुण्यां भक्त्या तां च पिबाम्यहम् ॥ ३१ ॥

---

१ 'संघोर' क. पाठः । २ 'ब्दहा' ख. पाठः । ३ 'तं' क. पाठः ।

पशुपाशविनाशाय दिव्यज्ञानोपलब्धये ।
इदं पवित्रममृतं पिबामि भवभेषजम् ॥ ३२ ॥
मद्यं मांसं तथान्यत्तु यत्किंचित् कुलभूषणम् ।
शक्त्यै दत्त्वा पुनः शेषमात्मन्येव नियोजयेत् ॥ ३३ ॥
पाययित्वा पुनः पानं तन्मुखादमृतं पिबेत् ।
ततश्च शोधयेद्दीपं दीपो भवति नान्यथा ॥ ३४ ॥
आनन्दोदयपर्यन्तं साधकश्च पिबेन्मधु ।
कर्पूर (स ? श) कलोन्मिश्रताम्बूलपूरिताननः ॥ ३५ ॥
मदिराघूर्णनयनो दिग्वासाः कुलभूषणः ।
वदेत् सविनयं वाक्यं सिद्धिदे परमेश्वरि ॥ ३६ ॥
चतुर्वर्गस्त्वयि न्यस्तस्तस्मान्मे सिद्धिदा भव ।
इति प्रसादमासाद्य कारयेत्तां दिगम्बरां[1] ॥ ३७ ॥
त्रिकोणवद्भगं ज्ञात्वा सर्वसिद्धिप्रदायकम् ।
कूटत्रयात्मकं स्मृत्वा सर्वानन्दमयं स्मरेत् ॥ ३८ ॥
आत्मानं देवतारूपमद्वैतं परिचिन्तयन् ।
पूर्णचन्द्रनिभं वक्त्रं पू (र्णेशीं ? र्णाद्रिं) चुम्बनैर्यजेत् ॥ ३९ ॥
जालन्धरं महापीठं स्तनद्वयमुदीरितम् ।
अपानमूरुयुगलं कामरूपमतः परम् ॥ ४० ॥
यत्पीठं ब्रह्मणो वक्त्रं गुप्तं सर्वसुखावहम् ।
यतो देवाश्च देव्यश्च मुनयश्चैव भा[2]वजाः ॥ ४१ ॥
सर्वेऽप्याविर्भवन्त्येते तेन गुप्तं महीतले ।
द्विविधं चैव तत्पीठं गुप्तं व्यक्तं महेश्वरि ॥ ४२ ॥

---

१ 'रीम्' क. पाठः । २ 'मानवः' ख. पाठः ।

व्यक्ताद्भुतं महापुण्यं दुरापं पशुभिः प्रिये ।
गुप्तं सर्वत्र देवेशि लभ्यते कुलपूजकैः ॥ ४३ ॥
यत्र तत्र यजेद्देवीमुपचारैस्तथाविधैः ।
लिङ्गेनाकर्षयेद्योनिं मुखे जिह्वामृतं पिबेत् ॥ ४४ ॥
नखदन्तक्षतान्यत्र पुष्पाणि विहितानि च ।
आलिङ्गनं तु कस्तूरीकर्पूरागुरुचन्दनम् ॥ ४५ ॥
चुम्बनं स्तवनं देवि मथनं ह(र ? व)नं शिवे ।
त्रिभिः कूटैस्त्रिघातं स्यात् त्रिघातैर्जपमेकतः ॥ ४६ ॥
एवं कृत्वा महेशानि स च कामेश्वरो भवेत् ।
मद्यं मांसं विना देवि कुलपूजां यथा चरेत् ॥ ४७ ॥
जन्मान्तरसहस्रस्य सुकृतं तस्य नश्यति ।
निवृत्तिकाले च पुनर्भावपूर्णामृतैर्निजम् ॥ ४८ ॥
मुखं बिन्दुवदाकारं तदधः कु(ल ? च)युग्मकम् ।
सर्वविद्यामृतैः पूर्णं सर्ववाग्विभवप्रदम् ॥ ४९ ॥
सर्वार्थसाधकं देवि सर्वरञ्जनकारणम् ।
तदधः परमेशानि स्वदेहं परिचिन्तयेत् ॥ ५० ॥
सर्वज्ञानसुसंपन्नं सर्ववश्यप्रदायकम् ।
ध्यात्वा यष्ट्वाथवा देवि भवेत्कामकलान्वितः ॥ ५१ ॥
कुलस्य विविधं रूपं ज्ञात्वा तत्परिचिन्त्य च ।
कुलीनो जायते यस्मात् कथं तत्तु प्रकाशयेत् ॥ ५२ ॥
एवमभ्यासयोगेन सिद्धो भवति नान्यथा ।
मासेनाकर्षणी[२] सिद्धिस्त्रिमासैर्वाक्पतिर्भवेत् ॥ ५३ ॥

---

१ 'खेर्जि' क. पाठः। २ 'र्णी सिद्धिं' क. पाठः।

एवं चतुष्टये मासि भवेद्दिक्पालगोचरः ।
पञ्चमे पञ्चकामः[1] स्यात् षष्ठे रुद्रो न संशयः ॥ ५४ ॥
चिन्तनं योषिता सार्धं पूजनं च तयैव हि ।
तया विरहितो मन्त्री न सिध्यति कदाचन ॥ ५५ ॥
भावयेद्योषिता सार्धं जुहुयाच्च तयैव हि ।
तया विरहितो मन्त्री न सिध्यति कदाचन ॥ ५६ ॥
स्त्रियो देवाः स्त्रियः प्राणाः स्त्रिय एव हि भूषणम् ।
स्त्रीसङ्गिना सदा भाव्यमन्यथा स्वास्त्रिया अपि[2] ॥ ५७ ॥
रात्रौ पर्यटनं कार्यं रात्रौ च शक्तिपूजनम् ।
रात्रौ कुलकथालापं रात्रौ चान्यत् समापयेत् ॥ ५८ ॥
प्रातः स्नानं ततो देवि देवान्पितॄनृषींस्तथा ।
तर्पयित्वा यजेद्देवीमुपचारैर्यथाविधि ॥ ५९ ॥
पूर्वाह्णविहितां पूजां गृह्णाति परदेवता ।
मध्याह्नविहितां देवि गृह्णन्ति योगिनीगणाः ॥ ६० ॥
अपराह्णकृता पूजा नीयते यक्षराक्षसैः ।
पूर्वाह्णे दीयते यत्तु[3]दमृतं समुदीरितम् ॥ ६१ ॥
मध्याह्ने तत्तु देवेशि शोणितं च परं स्मृतम् ।
तस्मात् सर्वप्रयत्नेन बाह्यपूजां महेश्वरि ॥
प्रातरेव सदा कुर्याद्गृहस्थो गृहिणीयुतः ॥ ६२ ॥

इति श्रीगन्धर्वतन्त्रे पार्वतीश्वरसंवादे काम्यपूजादिविधिनिरूपणं नाम पञ्चत्रिंशः पटलः ॥ ३५ ॥

---

१ 'बाणः' ख. पाठः । २ 'म' ख. पाठः । ३ 'त्तुभ्र' क. पाठः ।

## षट्त्रिंशः पटलः ।

—:():*:():—

ईश्वर उवाच

शक्त्यन्तरं प्रवक्ष्यामि सविकल्पस्य सुन्दरि ।
स्वशक्त्या परशक्तिं च यथानयति साधकः ॥ १ ॥
अदीक्षिताङ्गनासङ्गात् सिद्धिहानिर्भवेच्छिवे ।
तस्मात् सर्वप्रयत्नेन दीक्षयेन्निजकौलिनीम् ॥ २ ॥
गुरुसेवैकमात्रेण यथा सिद्धिर्भवेन् नृणाम् ।
महापद्मवनध्यानाद् यथा सिद्धीश्वरो भवेत् ॥ ३ ॥
त्रिपुराध्यानमात्रेण जीवन्मुक्तो यथा भवेत् ।
गङ्गास्मरणमात्रेण निष्पापो जायते यथा ॥ ४ ॥
योषित्स्मरणमात्रेण तथेयं वरदायिनी ।
न स्नानं न तथा पूजा न ध्यानं न्यास[1] एव वा ॥ ५ ॥
मन्त्रस्मरणमात्रेण योषितां वरदायिनी ।
निजकान्तां समानीय सुशीलां सुयशस्विनीम् ॥ ६ ॥
कुलभक्तं गुरुं प्राप्य दीक्षयेत् कुलविद्यया ।
दीक्षयित्वा गुरुस्तां तु निजपुत्रीवदाचरेत् ॥ ७ ॥
अद्य प्रभृति पुत्रि त्वं कुलपूजारता भव ।
यथोपदिष्टविधिना स्वामि[2]नं वश्यमानय ॥ ८ ॥

---

१ 'समेव' क. पाठः । २ 'मिवश्यं समानय' क. पाठः ।

हररूपस्य त्वत्पत्युर्नचान्यं[1] मनसा स्मर ।
इत्याज्ञां[2] च गुरोर्लब्ध्वा प्रणमेद्दण्डवद्भुवि ॥ ९ ॥
त्वत्पदाम्भोरुहच्छायां मूर्ध्नि देहि यशोधन ।
दीक्षिता नच योषा चेत् कथं स्यात्कुलपूजनम् ॥ १० ॥
कुलपूजा न चेद्देवि कुलविद्या पराङ्मुखी ।
दिवसं प्राप्य भौतं च निर्जने पशुवर्जिते ॥ ११ ॥
अष्टम्यां च चतुर्दश्यां पक्षयोरुभयोरपि ।
आनीय यत्नतः शुद्धं सिन्दूरं च मनोहरम् ॥ १२ ॥
तेन चक्रं समालिख्य सुरेखं परमोज्ज्वलम् ।
षट्कोणं पद्मगर्भस्थं शरावे दाहवर्जिते ॥ १३ ॥
तन्मध्ये प्रतिमां देवि सिन्दूरेण समालिखेत् ।
कपोले साध्यमालिख्य मूलमन्त्रविदर्भितम् ॥ १४ ॥
कामबीजं ततो देवि लिखेत् सर्वाङ्गसंधिषु ।
पुष्पासवं मुखे दत्त्वा वसन्तसुन्दरीं जपेत् ॥ १५ ॥
*काममिन्द्रं तुरीयं च बिन्दुनादसमन्वितम् ।
बीजं तद्भुवनेशान्या द्वादशस्वरबिन्दुकम् ॥ १६ ॥
ततस्तु नीलसुभगे हिलिहिलि ततः परम् ।
विच्चे स्वाहापदं दद्याद्विद्या वसन्तसुन्दरी ॥ १७ ॥
ध्यानं कृत्वा तु सुन्दर्या जीवन्यासं च कारयेत् ।
संविदानन्दहृदयः साधकः स्थिरमानसः ॥ १८ ॥
संविदासवयोर्मध्ये संविदेव गरीयसी ।
संवि (द्यां ? दं) योजयेद्देवि स्वयं चापि कुलेषु च ॥ १९ ॥

---

१ 'नान्यं मनसा संस्मर' क. पाठः । २ 'ज्ञां कुलगुरो' क. पाठः ।

* कामः क इन्द्रं ल तुरीयं बिन्दुनादादियुक्तं ईं भुवनेशी ह्रीं एवं क्लीं ह्रीं ऐं नीलसुभगे हिलि हिलि विच्चे स्वाहा-इति वसन्तसुन्दरी ॥

ताम्बूलपूरितमुखो रक्ताभरणभूषितः ।
रक्तासनोपविष्टस्तु स्वकुलं तूलिकोपरि ॥ २० ॥
वामभागे समासीनं रक्तवस्त्रविभूषितम् ।
सर्वशृङ्गारवेशाढ्यं स्फुरच्चकितलोचनम् ॥ २१ ॥
जितामितकुचद्वन्द्वविशालकरिकुम्भ[1]कम् ।
तत्स्कन्धे बाहुमाधाय भङ्ग्या धृतकुचाञ्चले ॥ २२ ॥
प्रतिमायां ततो देवि पूर्ववन्न्यासमाचरेत् ।
पूर्वोक्तविधिना पूजा कर्तव्या वीरवन्दिते ॥ २३ ॥
ताम्बूलपूरितमुखं कुलं तदभिसं( ज्ञि ? हि )तम् ।
ध्यानयोगेन मनसा लक्षमेकं तदा जपेत् ॥ २४ ॥
शतयोजनसंस्थानां नदीपर्वतमध्यगाम् ।
दीपान्तरसहस्रेषु रक्षितां निगडादिभिः ॥ २५ ॥
पयोधरभारक्षुब्धगमनां श्यामलोचनाम् ।
नितम्बबिम्बविध्व[2]स्तंगुरुजघनमण्डनाम् ॥ २६ ॥
साधकाक्षि ( त ? प्त ) हृदयां विवरान्तःप्रसर्पिणीम् ।
कवाटलौहसंबद्धप्राकारविवि[3]धान्तरे ॥ २७ ॥
कुलाकुलजपं कृत्वा समानयति साधकः ।
होमान्तरं प्रवक्ष्यामि येन ब्रह्ममयो भवेत् ॥ २८ ॥
शिवशक्तिमयं विद्धि चेतनाचेतनं जगत् ।
मम ज्ञानप्रभावेन दृष्टं यत् कथयामि ते ॥ २९ ॥
निर्जने शुद्धदेशे च शुद्धनाडीगणः शिवे ।
सम आसन आसीनः समकायो यथासुखम् ॥ ३० ॥

---

१ 'स्तुकम्' क. पाठः । २ 'स्तां' क. पाठः । ३ 'हिता' ख. पाठः ।

पद्मासनसमासीनः साधकः शुद्धचेतनः ।
प्राणस्य शोधयेन्मार्गं पूरकुम्भकरेचकैः ॥ ३१ ॥
हस्तावाच्छाद्य आधारयोगदण्डावलम्बिनौ ।
नयने नासिकाप्रान्ते निमेषोन्मेषवर्जिते ॥ ३२ ॥
भ्रुवोर्मध्ये स्थितश्चात्मा दन्तैर्दन्तांस्तु संस्पृशेत् ।
ओष्ठेन चाधरं चैव जिह्वया[1] चाथ तालुकम् ॥ ३३ ॥
एषा तु सुन्दरीमुद्रा सुन्दरीमोददायिनी ।
सहस्रारे परे पद्म आधारोत्थेन वायुना ॥ ३४ ॥
कुलदीपशिखाकारं संक्षोभ्यामृतमण्ड (नं ? लम्) ।
सुधाधारां स्मरेद् भूयः पतितां मूलपङ्कजे ॥ ३५ ॥
एवं च सप्तधा कुर्याद्देवीसांनिध्यहेतवे ।
मूलेन ध्यानयोगेन स्मृत्वा ब्रह्ममयीं पराम् ॥ ३६ ॥
हृदये पद्ममध्ये तु बाणलिङ्गे तु तेजसि ।
तत्राद्यां पूजयेद्देवीं हृदये कामरूपिणीम् ॥ ३७ ॥
पूरकेन समावाह्य संस्थाप्य कुम्भकेन तु ।
देहचक्रं समापाद्य दद्यात् पाद्यादिकं मुदा ॥ ३८ ॥
कुण्डलीपात्रसंस्थेन परमामृतवारिणा ।
पाद्यं चरणयोर्दद्यात् पुनश्चार्घ्यं प्रदापयेत् ॥ ३९ ॥
सहस्रदलभृङ्गा (या ? र्याः) लुलितालुलिताच्च्युतम्[2] ।
परमामृतपानीयं दद्यादाचमनं मुखे ॥ ४० ॥
षट्त्रिंशत्तत्त्वरूपं तु गन्धं दद्याद्विचक्षणः ।
अहिंसा परमं पुष्पं पुष्पमस्तेयमेव च ॥ ४१ ॥

---

१ 'ह्वाया' क. पाठः । २ 'चूच्युतिम्' क. पाठः ।

दया पुष्पं क्षमा पुष्पं पुष्पमिन्द्रियनिग्रहम् ।
अमोहं चाप्यमात्सर्यमविद्वेषं तथैव च ॥ ४२ ॥
अरागं च तथा सत्यं पुष्पाण्येवं विदुर्बुधाः ।
एतानि भावपुष्पाणि सदैव विनिवेदयेत् ॥ ४३ ॥
वायुं च धूपकं दद्यात्तेजो दीपं निवेदयेत् ।
सुराम्बुधिं तथा दद्याद्दद्याच्च मांसपर्वतम् ॥ ४४ ॥
सूर्यं च दर्पणं दद्याच्चन्द्रं च छत्रमुत्तमम् ।
आनन्दाभरणं दद्यादम्बरं चामरं तथा ॥ ४५ ॥
अनाहतध्वनिमयीं घण्टामेतां निवेदयेत् ।
ततश्च साधकश्रेष्ठः शृङ्गारादिरसोद्भवैः ॥ ४६ ॥
नृत्यगीतैश्च वाद्यैश्च तोषयेत्परमेश्वरीम् ।
ध्वनिना शब्दभेदेन तेजआकाशसंकुले ॥ ४७ ॥
सहस्रदलमध्ये तु चिन्तयेत्सुन्दरीं पराम् ।
भैरवानन्दलिङ्गं तु तन्मध्ये योनिसंयुतम् ॥ ४८ ॥
एकी (कायं?भावं) तयोः कृत्वा अमृतं (श्रा?स्रा)वयेत्ततः ।
जिह्वया गल[1]संयोगात् पिबेत्तदमृतं तदा ॥ ४९ ॥
योगिभिः पीयते तत्तु न मद्यं गौडपैष्टिकम् ।
पृथिव्यन्तर्गता आपस्तदन्तः शून्यमद्रिजे ॥ ५० ॥
शून्यमध्ये वसेद्वायुर्वाय्वन्तर्ध्वनिरीश्वरि ।
तदन्तर्नाद एवासौ नादान्तर्बिन्दुरीश्वरः ॥ ५१ ॥
तन्मध्ये तु परं ज्योतिः शिखा सूक्ष्मा परात्परा ।
विद्यु(च्चान?द्द्योत)नसंकाशा सहस्रादित्यभास्वरा ॥ ५२ ॥

---

१ 'नाल' ख. पाठः ।

सुनयनातिसूक्ष्मा च निराकारा निरालया ।
परानन्दमयी पूर्णा सा भवेत् सुन्दरी परा ॥ ५३ ॥
पार्थिवे पार्थिवानां च लयः[1] कार्यः समाधिना ।
अप्सु चापां[2] लयः कार्यः शून्ये शून्यस्य वै तथा ॥ ५४ ॥
लयो वायौ च वायूनां ध्वनौ ध्वनिं समर्पयेत् ।
ज्योतिषां च लयस्तत्र ब्रह्मण्येवं मनोलयः ॥ ५५ ॥
मनः करोति पापानि मनः पापेषु लिप्यते ।
मनसि[3] चोन्मनीभूते न धर्मो नच पातकम् ॥ ५६ ॥
एवं भावनया हृष्टः परमानन्दनिर्भरः ।
संसारसागरं धीरो गोष्पदीकुरुते शिवे ॥ ५७ ॥
भुक्ति[5]मुक्ती करे तस्य मम तुल्यो भवेद्भुवि ।
पूजा ज्ञानमयी प्रोक्ता नतु होमस्तु तादृशः ॥ ५८ ॥
तद्रूपं विद्धि कुण्डस्य त्रिन्दुत्रिवलयात्मकम् ।
आनन्दमेखलारम्यं मात्रायोनिविभूषितम् ॥ ५९ ॥
तद्ब्रह्म परमं ध्यात्वा सर्वज्ञानविजृम्भिते ।
दीपितेऽग्नौ हुनेद्देवि प्रपञ्चहविरुत्तमम् ॥ ६० ॥
शब्दाख्या मातृका रूपमक्षरं तु विराजितम् ।
अक्षरं च हुतं चात्र निःशब्दं ब्रह्म जायते ॥ ६१ ॥
पुण्यपापे हविर्देवि कृत्याकृत्ये हविः शिवे ।
संकल्पश्च विकल्पश्च धर्माधर्मौ हविस्तथा ॥ ६२ ॥
धर्माधर्म[6]हविर्दीप्ते आत्माग्नौ मनसा स्रुचा ।
सुषुम्नावर्त्मना नित्यमक्षवृत्तीर्जुहोम्यहम् ॥ ६३ ॥

---

१ 'यं कार्यं' क. पाठः । २ 'पो' क. पाठः । ३ 'स्युन्म' क. पाठः ।
४ 'यात्रि' ख. पाठः । ५ 'भ' क. पाठः । ६ 'मौ' क. पाठः ।

प्रकाशाकाशं[1]हस्ताभ्यामव(लोक्यो?लम्ब्यो)न्मनास्रुचं[2]म् ।
धर्माधर्मकलास्नेहपूर्णां[3] वह्नौ जुहोम्यहम् ॥ ६४ ॥
वह्निजायान्वितं प्रान्ते मन्त्राभ्यां होमयेच्छिवे ।
निष्प्रपञ्चो यदा देवि जायते मन्त्रवित्तमः ॥
तदा स चिन्मयः साक्षात्केवलं ब्रह्म साधकः ॥ ६५ ॥

इति श्रीगन्धर्वतन्त्रे पार्वतीश्वरसंवादे शक्त्यानयन-
पूजातत्त्वनिरूपणं नाम षट्त्रिंशः पटलः ॥ ३६ ॥

१ 'मर्शं' क. पाठः । २ 'चा' ख. पाठः । ३ 'र्णां' क. पाठः

## सप्तत्रिंशः पटलः ।

—— =०:❀:०= ——

देव्युवाच

परदारपरिष्वङ्गात् तथा नीचाभिसंगमात् ।
प्रतिलोमाभिसङ्गाच्च पातकी जायते नरः ॥ १ ॥
शक्त्यासक्तः कथं देव मुक्तः स्यात्परमेश्वरे[1] ।
वेदशास्त्रपुराणेषु सैव मुक्तिविरोधिनी ॥ २ ॥
शक्तिर्हि जगतो मूलं सैव जगत्स्वरूपिणी ।
स्त्रियं त्यक्त्वा जगत्त्यक्तं जगत्त्यक्त्वा सुखी भवेत् ॥ ३ ॥
सर्वा सर्वत्र देवेश गर्हिता सर्वकर्मसु ।
कथं तदुपयोग्यं स्यादिति वेदविदां स्थितिः ॥ ४ ॥

ईश्वर उवाच

इदं पुनर्महेशानि पुरैव प्रतिपादितम् ।
सूक्ष्मा गतिस्तु धर्मस्य मूढैस्तन्नावबुध्यते ॥ ५ ॥
ज्ञानाद्धि निर्मलं विश्वमज्ञानात् समलं प्रिये ।
वह्निरयं महादेवि सर्वगः सर्वभोजनः ॥ ६ ॥
स कथं देवतायज्ञे वेदविद्भिर्निदेशितः ।
जलं चापि तथा प्रोक्तं तत् पूतं कथमद्रिजे ॥ ७ ॥

---

१ 'रः' क. पाठः ।

भृङ्गोपभुक्तपुष्पाणि मक्षिकोच्छि[1]ष्टकं मधु ।
दूषणीयं सुरापानं कथं यज्ञे निदेशितम् ॥ ८ ॥
गोरसं च गवां सारं (म ? तै)लं च बीजसंभवम् ।
कथं तद्विहितं दैवे पित्र्[2]ये कर्मणि पार्वति ॥ ९ ॥
बीजनाशादनेकस्य विनाशं विद्धि सुव्रते ।
जायासु चैव सर्वासु तथा जातो जनिष्यते[3] ॥ १० ॥
स सकृद्वैदिकैर्मन्त्रैः पूतो भवति पावकः ।
वैदिकैस्तान्त्रिकैः शुद्धा पवित्रेयं तथा सुरा ॥ ११ ॥
दूषणं नास्ति देवेशि महाविद्याप्रसाधने ।
यस्मिन् यत्र य आचारस्तत्र धर्मस्तु तादृशः ॥ १२ ॥
अत्र भ्रमो महान् दोषस्तस्माद्भ्रान्तिं त्यज प्रिये ।
अद्वैतभावरहितो द्वन्द्वचित्तोऽथ कामुकः ॥ १३ ॥
देवताभावरहितो लौल्यभावेन वा पुनः
परशक्तिं समागच्छेत् स भवेद्गुरुतल्पगः ॥ १४ ॥
संसाराम्बुनिधेः पारं करोति विधिना च सा ।
नरकाम्बुनिधौ शक्तिः क्षिपत्यविधिना शिवे ॥ १५ ॥
विना शक्तिं विना मद्यमद्वैतभावनां विना ।
महाविद्याक्रमो[4] यद्वद्यज्ञो[5] घृतविवर्जितः[6] ॥ १६ ॥
द्वैतभावे महेशानि वर्णजातिविकल्पना ।
अद्वैतभावमापन्ने लीने मनसि ब्रह्मणि ॥ १७ ॥
कः कामः को भवेदिन्द्रः को ब्रह्मा को जनार्दनः ।
को देवः कोऽसुरो यक्षः पिशाचः कोऽमरः शिवे ॥ १८ ॥

---

'ष्टामदं मधु' क. पाठः । २ 'पै' क. पाठः । ३ 'ति' क. पाठः ।
'मं' क. पाठः । ५ 'ज्ञं' क. पाठः । ६ 'तम्' क. पाठः ।

को द्विजः कोऽथवा शूद्रः को म्लेच्छः कोऽधमः शिवे ।
किं रूपं किं विरूपं वा को रोगी कोऽप्यनामयः ॥ १९ ॥
किं च मेध्यममेध्यं वा किं वा वस्त्वप्यवस्तु च ।
किं मित्रं किममित्रं च को वध्योऽवध्य एव वा ॥ २० ॥
किं च भक्ष्यमभक्ष्यं वा किं वा तव ममेति च ।
अविद्याकल्पितं चैतद्विद्यया च्छिन्द्धि संशयम् ॥ २१ ॥
स्त्रियं मम [1]परां विद्यामिति जानीहि पार्वति ।
एक[2]स्या बहुधा कृत्यमेक[3]स्या बहुविग्रहम् ॥ २२ ॥
बहुरूपाणि देहांश्च एकस्[4]या एव निश्चितम् ।
अद्वैतानन्दसंदोहो विद्ययैव प्रकाश्यते ॥ २३ ॥
शक्तिर्[5]यागेषु यन्मांसं तन्मांसममृतोपमम् ।
पशुघातस्तदर्थं तु तद्विना ब्रह्महा भवेत् ॥ २४ ॥
द्वैतान् पशून्विजानीयादद्वैतान् ब्राह्मणान्विदुः ।
अत[6]ज्ज्ञः स्तेयपापेन भुनक्ति बहुकिल्बिषम् ॥ २५ ॥
मद्यपानं तु यज्ञेषु तद्विना पातकी भवेत् ।
पवित्रं सकलं भद्रे वासना यद्यकुत्सिता ॥ २६ ॥
ब्रह्मादिस्तम्बपर्यन्तं जगत् स्थावरजङ्गमम् ।
शरीरं दृश्यते यद्यत्तत्कर्म प्राकृतं शिवे ॥ २७ ॥
प्रकृत्या क्रियते कर्म साक्षी पुरुष उच्यते ।
तन्मायामोहितः सोऽथ कर्ताहमिति मन्यते ॥ २८ ॥
न कर्ता पुरुषो देवि कर्त्री प्रकृतिरुच्यते ।
पुरुषे करणं नास्ति निर्गुणत्वात् सदा प्रिये ॥ २९ ॥

१ 'मम तरां' क. पाठः । २ 'काया' क. पाठः । ३ 'काया' क. पाठः ।
४ 'काया' क. पाठः । ५ 'यो' क. पाठः । ६ 'तन्त्रज्ञ' क. पाठः ।

तथा क[1]रणकर्तृत्वं सगुणायां प्रतिष्ठितम् ।
यदिदं पुरुषे देवि कर्तृत्वमुपलक्ष्यते ॥ ३० ॥
स्फ[2]टिके निर्मले देवि (यवा? जपा) रागमिवानघे ।
अहमाकाशवत्सर्वं बहिरन्तर्गतोऽच्युतः ॥ ३१ ॥
सदा सर्वसमः शुद्धो निसङ्गो निर्मलोऽचलः ।
सत्यं ज्ञानमनन्तं यत्परब्रह्माहमेव तत् ॥ ३२ ॥
ब्रह्मण्याधाय चित्तं तु कुर्वन् कर्म न लिप्यते ।
उभाभ्यामपि शक्यं स्यात्तर्तुं भवपयोनिधिम् ॥ ३३ ॥
दक्षिणेनापि कौलेन दुःखेनापि सुखेन च ।
कुम्भसंस्तरणैस्तर्तुं पोतवर्येण वाम्बुधिम् ॥ ३४ ॥
तस्मा(दिमं न? द्यं व)रः कौलो दक्षिणादपि सुव्रते ।
कुलज्ञानं विना देवि नैव मुक्तिः कदाचन ॥ ३५ ॥
माया बलवती ह्येषा शक्ति[3]र्गुणमयी तु या ।
प्रकृतिर्गीयते सा तु सांख्ययोगविशारदैः ॥ ३६ ॥
विद्याविद्येति सा प्रोक्ता वेदतत्त्वार्थदर्शिभिः ।
महाविद्येति सा कैश्चिन्महामायेति चापरैः ॥ ३७ ॥
शक्तिः सा सर्वभूतानामिति कैश्चिदुपास्यते ।
स[4]मुपासते सर्वे तां ब्रह्मविष्णुमहेश्वराः ॥ ३८ ॥
तस्या एव न मे भेदो विष्णोर्ब्रह्मण एव वा ।
योगभोगतपःक्लेशैरानम्रैरभिनन्दिता ॥ ३९ ॥
आराधिता सैव नृणां भोगस्वर्गापवर्गदा ।
परितोष्य विधानेन येन तेनैव साधकः ॥ ४० ॥

---

१ 'का' क. पाठः । २ 'स्फा' क. पाठः । ३ 'क्तेर्गु' क. पाठः । ४ 'सर्वे तां समुपासन्ति' क. ख. पाठः ।

को द्विजः कोऽथवा शूद्रः को म्लेच्छः कोऽधमः शिवे ।
किं रूपं किं विरूपं वा को रोगी कोऽप्यनामयः ॥ १९ ॥
किं च मेध्यममेध्यं वा किं वा वस्त्वप्यवस्तु च ।
किं मित्रं किममित्रं च को वध्योऽवध्य एव वा ॥ २० ॥
किं च भक्ष्यमभक्ष्यं वा किं वा तव ममेति च ।
अविद्याकल्पितं चैतद्विद्यया छिन्द्धि संशयम् ॥ २१ ॥
स्त्रियं मम [1]परां विद्यामिति जानीहि पार्वति ।
[2]एकस्या बहुधा कृत्यमे[3]कस्या बहुविग्रहम् ॥ २२ ॥
बहुरूपाणि देहांश्च एक[4]स्या एव निश्चितम् ।
अद्वैतानन्दसंदोहो विद्ययैव प्रकाश्यते ॥ २३ ॥
शक्ति[5]यागेषु यन्मांसं तन्मांसममृतोपमम् ।
पशुघातस्तदर्थं तु तद्विना ब्रह्महा भवेत् ॥ २४ ॥
द्वैतान् पशून्विजानीयादद्वैतान् ब्राह्मणान्विदुः ।
[6]अतज्ज्ञः स्तेयपापेन भुनक्ति बहुकिल्बिषम् ॥ २५ ॥
मद्यपानं तु यज्ञेषु तद्विना पातकी भवेत् ।
पवित्रं सकलं भद्रे वासना यद्यकुत्सिता ॥ २६ ॥
ब्रह्मादिस्तम्बपर्यन्तं जगत् स्थावरजङ्गमम् ।
शरीरं दृश्यते यद्यत्तत्कर्म प्राकृतं शिवे ॥ २७ ॥
प्रकृत्या क्रियते कर्म साक्षी पुरुष उच्यते ।
तन्मायामोहितः सोऽथ कर्ताहमिति मन्यते ॥ २८ ॥
न कर्ता पुरुषो देवि कर्त्री प्रकृतिरुच्यते ।
पुरुषे करणं नास्ति निर्गुणत्वात् सदा प्रिये ॥ २९ ॥

---

१ 'मम तरां' क. पाठः । २ 'काया' क. पाठः । ३ 'काया' क. पाठः ।
४ 'काया' क. पाठः । ५ 'यो' क. पाठः । ६ 'तन्त्रव्य' क. पाठः ।

तथा [1]करणाकर्तृत्वं सगुणायां प्रतिष्ठितम् ।
यदिदं पुरुषे देवि कर्तृत्वमुपलक्ष्यते ॥ ३० ॥
[2]स्फटिके निर्मले देवि (यवा ? जपा) रागमिवानघे ।
अहमाकाशवत्सर्वं बहिरन्तर्गतोऽच्युतः ॥ ३१ ॥
सदा सर्वसमः शुद्धो निसङ्गो निर्मलोऽचलः ।
सत्यं ज्ञानमनन्तं यत्परब्रह्माहमेव तत् ॥ ३२ ॥
ब्रह्मण्याधाय चित्तं तु कुर्वन् कर्म न लिप्यते ।
उभाभ्यामपि शक्यं स्यात्तर्तुं भवपयोनिधिम् ॥ ३३ ॥
दक्षिणेनापि कौलेन दुःखेनापि सुखेन च ।
कुम्भसंस्तरणैस्तर्तुं पोतवर्येण वाम्बुधिम् ॥ ३४ ॥
तस्मा( दिमं न ? दयं व)रः कौलो दक्षिणादपि सुव्रते ।
कुलज्ञानं विना देवि नैव मुक्तिः कदाचन ॥ ३५ ॥
माया बलवती ह्येषा शक्ति[3]र्गुणमयी तु या ।
प्रकृतिर्गीयते सा तु सांख्ययोगविशारदैः ॥ ३६ ॥
विद्याविद्येति सा प्रोक्ता वेदतत्त्वार्थदर्शिभिः ।
महाविद्येति सा कैश्चिन्महामायेति चापरैः ॥ ३७ ॥
शक्तिः सा सर्वभूतानामिति कैश्चिदुपास्यते ।
[4]समुपासते सर्वे तां ब्रह्मविष्णुमहेश्वराः ॥ ३८ ॥
तस्या एव न मे भेदो विष्णोर्ब्रह्मण एव वा ।
योगभोगतपःक्लेशैरानम्रैरभिनन्दिता ॥ ३९ ॥
आराधिता सैव नृणां भोगस्वर्गापवर्गदा ।
परितोष्य विधानेन येन तेनैव साधकः ॥ ४० ॥

---

१ 'का' क. पाठः । २ 'स्फा' क. पाठः । ३ 'क्तेर्गु' क. पाठः । ४ 'सर्वे तां समुपासन्ति' क. ख. पाठः ।

संसारनिगडैर्बद्धः पुमान् विमुच्यते तथा ।
तस्यास्तोषं विना देवि विमुक्तिर्नैव विद्यते ॥ ४१ ॥
तन्निगृहीतचित्तानां पुंसां पुरुषपूजिते ।
अतस्तां च प्रयत्नेन पुरुषा मुक्तिलिप्सवः ॥ ४२ ॥
समाश्रयन्ति योगाद्यैर्नित्यानन्दस्वरूपिणीम् ।
ब्रह्मा विष्णुस्तथा चाहमात्मवत्समुपास्महे ॥ ४३ ॥
तपःक्लेशैश्च तां देवि पशुभावे स्थितो विधिः ।
संतोष्य परया भक्त्या सावित्रीं वेदमातरम् ॥ ४४ ॥
इच्छाशक्तिं च वागीशीं लब्ध्वा सृष्टिमचीकरत् ।
तनयां जगृहे मोहाद्ब्रह्मा पशुरादरधीः ॥ ४५ ॥
तज्जुगुप्सितमन्याय्यमद्यापि न निवर्तते ।
परशक्तिं पशुस्तस्मान्मनसापि न संस्मरेत् ॥ ४६ ॥
तद्भावमाश्रिता विप्रास्तामेव समुपासते ।
मित्राणां सर्वभूतानां तेषां मद्यं घृतं पयः ॥ ४७ ॥
अपूपं पिष्टकं मांसं गृह्णीयुः शक्तिदापितम् ।
अपिवा संविदासक्ता भवेयुः शक्तिमाश्रिताः ॥ ४८ ॥
दिव्यभावस्थितो विष्णुर्जगत्पालनरूपिणीम् ।
मधुमैरेयभोगाद्यैः संतोष्यानन्दरूपिणीम् ॥ ४९ ॥
ज्ञानशक्तिमयीं लक्ष्मीं जगदाधाररूपिणीम् ।
लब्ध्वा तु जगतः सोऽयं पालकोऽभून्निराकुलः ॥ ५० ॥
तद्भावमाश्रिता भूपास्तथैव तामुपासते ।
अथ देवाश्च दैत्याश्च मुनयो मानुषाः परे ॥ ५१ ॥

विष्णुमेव हि सततं भजन्ते भावसिद्धये ।
स च भावविशुद्धात्मा तद्भावं तु जुगोप ह ॥ ५२ ॥
ये (नि ? न) न्दन्ति च तद्भावं गोपयन्ति च सर्वदा ।
ते वै प्रियतमाः सर्वे शङ्खचक्रगदाभृतः ॥ ५३ ॥
तद्भावाद्विमुखान् कर्तुं लोकांल्लोकेश्वरो हरिः ।
इदमादिष्टवान् देवि मामेव जगदीश्वरः ॥ ५४ ॥

भगवानुवाच

सर्वे दिव्या भविष्यन्ति मद्भावे हि प्रकाशिते ।
पशुभावं पुरस्कुर्वन् मद्भावं च विनिन्दकः ॥ ५५ ॥
आगमैः कल्पितैर्देव मद्भावाद्विमुखान् कुरु ।

ईश्वर उवाच

तदाज्ञां शिरसि धृत्वा विष्णोरमिततेजसः ॥ ५६ ॥
तथैवाहं महेशानि कृतवांस्तन्त्रविस्तरम् ।
गोपयन्दिव्यभावं च पुरस्कुर्वन् पशोर्मतम् ॥ ५७ ॥
अत एव महेशानि वैष्णवे दर्शने खलु ।
पूजितः पशुभावश्च शक्तिनिन्दा च वि(स्मृ?स्तृ) ता ॥ ५८ ॥
या शक्तिः सर्वभूतानां द्विधा भवति सा पुनः ।
स्थूलरूपा च सा देवी सूक्ष्मरूपा च पार्वति ॥ ५९ ॥
स्थूलरूपेण सा देवी सर्वमेतज्जगत्त्रयम् ।
मोहयित्वा जनान्सर्वान् बहुरूपा सुखेच्छया ॥ ६० ॥
संस्थिता परमेशानि लीलाकलितविग्रहा ।
स्वभावतो न जानन्ति तन्मायामोहिता जनाः ॥ ६१ ॥

१ 'पान्' क. पाठः ।

केचित्तां तु प्रहाराद्यैः कटूक्तिभाषणैस्तथा ।
ताडयन्ति च वै मूढा[1] जना निरयगामिनः ॥ ६२ ॥
केचित्तां भूषणाच्छादैः संभोगैरपि सेवया ।
पूजयन्ति हि ते धीराश्चतुर्वर्गप्रसाधकाः ॥ ६३ ॥
तेषां विप्रियकर्तारः पतिष्यन्ति सुनिश्चितम् ।
सूक्ष्मरूपां च तां विद्धि सर्वेषा(न्तमद?मन्त)रस्थिताम् । ६४।
त्रैलोक्यजननीं देवीं मुख्येन ब्रह्मवर्त्मना ।
योजयित्वा परानन्दे[2] परमानन्दरूपिणीम् ॥ ६५ ॥
तयोर्योगाद्यदमृतं तर्पयेत्तेन योगिनीम् ।
प्राणधारणया देवि शुद्धनाडीमनाः[3] सुधीः ॥ ६६ ॥
प्राणान्प्रवेशयेन्नाड्या तन्मुखे चैव तान् हुनेत् ।
तद्वक्त्रे वायुना भिन्ने याति चोर्ध्वं परेश्वरी ॥ ६७ ॥
तस्मादाकृष्य तद्वायुं कुम्भयित्वा तु संचयेत् ।
संचितैर्वायुभिस्तां च कुलवर्त्मविहारिणीम् ॥ ६८ ॥
सहस्रारे महापद्मे सितदीधितिमण्डले ।
समुन्नीय परे हंसे तयोरैक्यं[4] धिया स्मरेत् ॥ ६९ ॥
होमाद्यं विहितं तत्र चन्द्रसूर्यात्मकं तयोः ।
स्रुक्स्रवौ च समादाय जुहुयादव्ययं हविः ॥ ७० ॥
मूलाधारे परे चक्रे शक्तिर्या कुण्डली शुभा ।
तद्भ्रमावर्ततोऽयं च बहिर्याति दिने दिने ॥ ७१ ॥
दिनेशाङ्गुलिमानेन तदर्धं चोपवासतः ।
द्विगुणं रतिकाले स्यात् त्रिगुणं भोजनाद्बहिः ॥ ७२ ॥

---

१ 'च सुमूढा' क. पाठः । २ 'न्द' ख. पाठः । ३ 'नः' क. पठंः । ४ 'क्याधि' क. पाठः ।

अत ऊर्ध्वं[1] वहेद्देवि त्रिदिनं यदि मारुतः ।
न्यूनं वा तदधः प्राणः शरीरं परिमुञ्चति ॥ ७३ ॥
यावत्कालं वहेदेतद्वायुश्च जगदीश्वरः ।
तावच्चलति देहोऽयं तद्विना चाचलः स्मृतः ॥ ७४ ॥
निश्चलं पवनं कृत्वा योगी भवति साधकः ।
वायुना नीयते बाह्ये मनस्तु प्राणिनां शिवे ॥ ७५ ॥
वायौ च सुस्थिरीभूते मनोऽपि स्थिरतां वहेत् ।
तयोरद्वैतभा[2]वे तु निश्चलत्वं[3] गते द्वयोः ॥ ७६ ॥
देहं निरामयं विद्धि यथाकामविलासिनम् ।
इह स्थित्वा यथाकामं संत्यज्य च कलेवरम् ॥ ७७ ॥
अद्वैतभावमापन्नो न स पुनरिहाव्रजेत् ।
प्रसङ्गात् कथिता देवि देहसिद्धिरनुत्तमा ॥ ७८ ॥
येन[4] तेन विधानेन परितुष्टा महेश्वरी ।
संसारनिगडैर्बद्धः पुमान्विमुच्यते तया ॥ ७९ ॥
तस्यास्तोषं विना देवि विमुक्तिर्नैव विद्यते ।
अनिगृ[5]हीतचित्तस्य पुरुषस्य महेश्वरि ॥ ८० ॥

इति श्रीगन्धर्वतन्त्रे पार्वतीश्वरसंवादे शक्तिमा-
हात्म्य-देहसिद्धिवर्णनं नाम सप्तत्रिंशः पटलः ॥ ३७ ॥

१ 'ना' क. पाठः । २ 'वेन' क. पाठः । ३ 'स्वगतेस्तयो' क. पाठः । ४ 'अनेनैव' ख. पाठः ।
५ 'तन्नि' क. पाठः ।

## अष्टात्रिंशः पटलः ।

ईश्वर उवाच

बहुकालं[1] पूजिता तु तुष्टा स्यात्सूक्ष्मरूपिणी ।
यथा तुष्यति भोगेन तपोयोगैश्च न तथा ॥ १ ॥
अतो भोगेन तां तोष्य तथा मुक्तो भवेत्सुखी ।
मया चापि पुरा देवि सेविता योगवर्त्मना ॥ २ ॥
परितुष्टा न मे देवी सूक्ष्मरूपान्तरस्थिता ।
शक्तिहीनं च मां वीक्ष्य वनिताविमुखं तथा ॥ ३ ॥
विषण्णवदनो ब्रह्मा हृदयेन विदूयता ।
चिन्तावशमुपा[2]विष्टो ब्रह्मा लोकपितामहः ॥ ४ ॥
मामासाद्य तथा विष्णुं ययौ क्षीरपयोनिधिम् ।
क्षीरोदस्योत्तरे तीरे रत्नद्वीपे सुशोभिते ॥ ५ ॥
तत्र स्थित्वावयोर्मध्ये ब्रह्मा ध्यानपरोऽभवत् ।
हृत्पुण्डरीकमध्यस्थे देवीपादसरोरुहे ॥ ६ ॥
मनो निधाय योगात्मा देवीसूक्तं परं जगौ ।
व्यतीते बहुकालेऽथ देवी त्रिभुवनेश्वरी ॥ ७ ॥

---

१ 'लपूजितैस्तु' क. पाठः । २ 'पवि' क. पाठः ।

शूलपाशधरा देवी किरीटादिविमण्डिता ।
चतुर्भुजा त्रिनेत्रा च बालार्ककिरणारुणा ॥ ८ ॥
दर्शयामास स्वं रूपं तस्य तुष्टा तदा शिवे ।
प्रसन्नां तां समालोक्य स्रष्टा सर्वजगद्गुरुः ॥ ९ ॥
भक्त्या विनम्रवदनस्तुष्टाव च ननाम च ।

ब्रह्मोवाच

त्वं सावित्री च वाग्देवी त्वं श्रीः सर्वजगत्प्रसूः ॥ १० ॥
स्वाहा त्वं देवयज्ञेषु पितृयज्ञेषु च स्वधा ।
सुधा त्वं देवलोकेषु हविस्त्वं खलु मानुषे ॥ ११ ॥
त्वं विद्याश्चैव मन्त्राश्च वेदास्त्वं हि (सु ? स्व)रात्मिका ।
अर्धमात्रात्मिका त्वं वै यानुच्चार्या विशेषतः ॥ १२ ॥
त्वमेव परमा शक्तिर्जगत्कारणरूपिणी ।
विचार्याष्टाङ्गयोगेन लक्षणाद्यैर्मुहुर्मुहुः ॥ १३ ॥
यत् स्थिरीक्रियते देवि तत्ते रूपं सनातनम् ।
यदव्यक्तमनिर्देश्यं निष्कलं परमात्मनः ॥ १४ ॥
रूपं तवैव तत् सूक्ष्मं सकलं च जगन्मयम्[2] ।
या सृष्टिशक्तिरस्माकं स्थितिशक्तिस्तथा हरेः ॥ १५ ॥
अन्तशक्तिस्तथेशस्य सा त्वं शक्तिः सनातनी ।

त्वं जातवेदोगता शक्तिरुग्रा
त्वं दाहिका सूर्यकरस्य शक्तिः
आह्लादिका त्वं बहु चन्द्रिकाया-
स्तां त्वामहं नौमि नमामि चाम्बिकाम् ॥ १६ ॥

---

१ 'स्व' क. पाठः । २ 'यि' ख. पाठः ।

योषा योषित्प्रियाणां त्वं विद्या त्वं चोर्ध्वरेतसाम् ।
वाञ्छा त्वं सर्वजगतां माया च त्वं तथा हरेः ॥ १७ ॥
यया प्रकाश्यते ब्रह्म सा त्वं नित्या प्रसीद मे ।
विश्वादिस्त्वमनादिस्त्वं विश्वयोनिरयोनिजा ॥ १८ ॥
अनन्तात्सर्वजगतस्त्वमेवैकान्तरूपिणी ।
एका त्वं त्रिविधा भूत्वा मो(त्त ? ह)संहारकारिणी ॥ १९ ॥
संसारसागरोत्तारतरणिः सुखमोक्षदे ।
त्वं नित्या त्वमनित्या च त्वं चराचरमोहिनी ॥ २० ॥
नमस्ते जगतां मातः सृष्टिरूपे सनातनि ।
स्थितिरूपे नमस्तुभ्यं नमः संहाररूपिणि ॥ २१ ॥
एवं संस्तूयमाना सा योगनिद्रा विरिञ्चिना ।
आविर्बभूव प्रत्यक्षं ब्रह्मणः परमात्मनः ॥ २२ ॥

देव्युवाच

परितुष्टास्मि लोकेश स्तोत्रेणानेन ते विभो ।
वरं वृणीष्व भद्रं मे यत्ते मनसि वर्तते ॥ २३ ॥

ईश्वर उवाच

मां समीक्ष्य वरं वव्रे जगत्संहारकारकम् ।
सृष्टिशक्तिं मयि त्वं च विष्णौ पालनरूपिणीम् ॥ २४ ॥
संहारशक्तिमीशाने देहि मातर्नमोऽस्तु ते ।
एकश्चरति भूतेशो न द्वितीयां समीहते ॥ २५ ॥
तथा मोहय सर्वेशं दारा[2]न् स्वयं जिघृक्ष[3]ति ।

देव्युवाच

यदुक्तं भवता ब्रह्मंस्तच्च[4] सत्यं नचान्यथा ॥ २६ ॥

---

१ 'ता' ख. पाठः । २ 'राः' क. पाठः । ३ 'क्षय' क. पाठः । ४ 'त्स' क. पाठः ।

मोहयित्वाहमीशानं सतीरूपेण शंकरम्।
संहरिष्यामि लोकेश जगदेतच्चराचरम्॥ २७॥
तत्रापि तां तनुं त्यक्त्वा संभविष्यामि पार्वती।
इति तस्मै समाभाष्य ब्रह्मणे परमेश्वरी॥ २८॥
वीक्ष्यमाणा जगत्स्रष्ट्रा तत्रैवान्तरधीयत।
तस्यामन्तर्हितायां च ब्रह्मा लोकपितामहः॥ २९॥
कृताञ्जलिपुटो भूत्वा विष्णुमाह प्रजापतिः।
संहारकरणे योग्यं वीरभावं च यद्भवेत्॥ ३०॥
तन्निदेशय महादेवे विष्णो लोकेषु दुर्लभम्।
इति तद्वचनं श्रुत्वा भगवान् हरिरीश्वरः॥ ३१॥
आदिष्टवान् मयि भद्र वीरभावं सुदुर्लभम्।
वीरभावे स्थितः सोऽहं मातस्त्वां[1] समुपास्महे॥ ३२॥
अद्यापि परमेशानि मातस्तुभ्यं नमो नमः।
प्रकृतिः[2] सर्वभूतानां त्वं हि सर्वजगत्प्रसूः॥ ३३॥
या (मुक्तिः? मूर्तिः) मम देवेशि क्षितिरूपा तु गीयते।
सा त्वमेव न मे नाहं मातः सत्यं नमो नमः॥ ३४॥
या मे मूर्तिर्द्वितीया च जलमयीति कथ्यते।
सा त्वमेव न मे नाहं मातः सत्यं नमो नमः॥ ३५॥
आग्नेयी या तृतीया मे जगत्क्षोभणकारिणी।
सा त्वमेव न मे नाहं मातः सत्यं नमो नमः॥ ३६॥
चतुर्थी वायवी मूर्तिः सृष्टिसंहारकारिणी।
सा त्वमेव न मे नाहं मातः सत्यं नमो नमः॥ ३७॥

---

१ 'तिरस्त्वं' क. पाठः। २ 'तिरस्त्व' क. पाठः।

पञ्चमी या च सर्वेषां परिणामस्वरूपिणी ।
सा त्वमेव न मे नाहं मातः सत्यं नमो नमः ॥ ३८ ॥
षष्ठी या सर्वदेवानामाप्यायनीति गीयते ।
सा त्वमेव न मे नाहं मातः सत्यं नमो नमः ॥ ३९ ॥
सप्तमी मम मूर्तिर्या जगदाह्लादकारिणी ।
सा त्वमेव न मे नाहं मातः सत्यं नमो नमः ॥ ४० ॥
अष्टमी मम मूर्तिर्या स्थितिसंहारकारिणी ।
सा त्वमेव न मे नाहं मातः सत्यं नमो नमः ॥ ४१ ॥
नचैवाहं न मे किंचिद्यदिह जगतीतले ।
त्वयैवेदं जगद्व्याप्तं जगत् सर्वं त्वमेव हि ॥ ४२ ॥

देव्युवाच

मया सर्वं जगद्व्याप्तं वत्स सत्यं प्रभाषसे ।
ममैवैतेऽवताराश्च मत्स्यकूर्मादयोऽपरे ॥ ४३ ॥
त्वमेवाहं नचान्योऽसि ब्रह्माहं विष्णुरप्यहम् ।
अहमेव जगत् सर्वं नास्ति किंचित् मया विना ॥ ४४ ॥
यत्तु पश्यसि हे वत्स यत् किंचिज्जगतीतले ।
ब्रह्मादिस्तम्बपर्यन्तमहमेव न संशयः ॥ ४५ ॥
इहैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरम् ।
इत्युक्त्वा दर्शयामास शंभवे जगदीश्वरी ॥ ४६ ॥
स्वशरीरे जगत्कृत्स्नं संप्रविष्टमनेकधा ।
दृष्ट्वा [1]जगन्मयीं प्राह शंभुर्मायाविमोहितः ।
मामुद्धर जगन्मातर्मोहसागरमध्यतः ॥ ४७ ॥

इति श्रीगन्धर्वतन्त्रे पार्वतीश्वरसंवादे शिवस्य
शक्तिप्राप्तिनिरूपणं नाम अष्टात्रिंशः पटलः ॥ ३८ ॥

---

१ 'जगन्मयीं ततो दृष्ट्वा' क. पाठः ।

## ऊनचत्वारिंशः पटलः ।

—=-:❀:-=—

जगन्मय्युवाच

मा विषीद महादेव सर्वथा त्वं स्थिरो भव ।
कुलज्ञानी कथं त्वं हि भावज्ञानी कथं पुनः ॥ १ ॥

इत्येवं त्वं मया पृष्टस्त्वमात्मानं न विस्मर ।
तदानन्दमयं धाम स्वविद्याभेदसंगतम् ॥ २ ॥

पुरुषः प्रकृतिश्चैव नित्यौ द्वौ समुपस्थितौ ।
सगुणाधिबला देवी निर्गुणो निर्बलः पुमान् ॥ ३ ॥

अविद्यानाद्यरूपा सा मदंशा भेदरूपिणी ।
सिसृक्षयापि नीचास्य सविधे समुपस्थिता ॥ ४ ॥

सिसृक्षया मया पूर्वं प्रार्थितः पुरुषः खलु ।
मामानन्दय सानन्दमित्युक्त्वा धर्षितः प्रभुः ॥ ५ ॥

मया धर्षितमात्रोऽसौ बभूव सगुणो विभुः ।
तत्तदानन्दसंदोहै( रा?ः सा )नन्दाहं पुनः पुनः ॥ ६ ॥

जडत्वादुभयोर्देव शून्यभावमुपागतम् ।
अथानन्दात्मनोर्जाता शक्तिराद्या सनातनी ॥ ७ ॥

गुणत्रयमयी सा तु बिन्दुत्रयस्वरूपिणी ।
अधः कृत्वा तु पुरुषं हकारार्धस्वरूपिणी ॥ ८ ॥
विपरीतेन रमते वह्नीन्द्वर्कस्वरूपिणी ।
अशिरस्कहकारान्त्यं[1]मशेषाकारसंस्थितम् ॥ ९ ॥
अन्तश्चरमजस्रं तं स्वमात्मानमुपास्महे ।
बिन्दुत्रये महादेव सर्गमेतत् प्रतिष्ठितम् ॥ १० ॥
ब्रह्मादिस्तम्बपर्यन्तं जगत् स्थावरजङ्गमम् ।
पञ्चभूतमयं विद्धि चासत्यं सत्यवद्भ्रमः ॥ ११ ॥
पृथिवीयं महादेव प्रा[2]कृती नतु (कस्तुरी ? वास्तवी) ।
ब्राह्मणी नैव चाण्डाली नैव दैवी न मानुषी ॥ १२ ॥
रसमात्रं जलं विद्धि न द्विजं नच पुक्कसम्[3] ।
रूपमात्रं तु यत्तेजस्तत्र किं जातिकल्पना ॥ १३ ॥
स्पर्शमात्रं तु यद्वायुर्नोत्तमो नाधमः खलु ।
शब्दमात्रं यदाकाशं विभोस्तस्य महात्मनः ॥ १४ ॥
नीचतां कल्पते देवि मूढोऽज्ञानविजृम्भितः ।
एभिः पञ्चभिरारब्धं देहं स्थावरजङ्गमम् ॥ १५ ॥
पञ्चानां संनिपातं यत् न ब्राह्मणं न पुक्कसम्[4] ।
तदसत्यं विजानीयात् सत्यं ब्रह्म न तन्न तत् ॥ १६ ॥
देहाद्भिन्नः शिवो देही परमानन्दरूपवान् ।
तद्ब्रह्मेति च यो विद्यात् स एव ब्राह्मणो मतः ॥ १७ ॥
यदिदं लक्ष्य[5]ते देव पञ्चभूतात्मविग्रहे ।
वायुभिरिन्द्रियग्रामे प्रेरिते पञ्चभिः शिवम् ॥ १८ ॥

---

१ 'न्स्यमे' क. पाठः । २ 'प्र' क. पाठः । ३ 'शम्' क. पाठः । ४ 'श' क. पाठः । ५ 'क्षसे' क. पाठः ।

कर्तृत्वमात्मनो देव तदविद्याभ्रमो महान् ।
व्यापृतेष्विन्द्रियेष्वात्मा व्यापारीवा[1]विवेकिनाम् ॥ १९ ॥
दृश्यतेऽभ्रेषु धावत्सु धावन्निव यथा शशी ।
आत्मचैतन्यमाश्रित्य देहेन्द्रियमनोधियः ॥ २० ॥
स्वकीयार्थेषु वर्तन्ते सूर्यालोकं यथा जनाः ।
देहेन्द्रियगुणान् कर्माण्यमले सच्चिदात्मनि ॥ २१ ॥
अध्यास्यात्मा[2]विवेकेन गगने नीलतामिव[3] ।
अज्ञानान्मानसोपाधेः कर्तृत्वादीनि चात्मनि ॥ २२ ॥
कल्प्यन्तेऽम्बुगते चन्द्रे चलनादिर्यथाम्भसः ।
रागेच्छासुखदुःखादि(वृ?बु)द्धौ सत्यां[4] प्रवर्तते ॥ २३ ॥
सुषुप्तौ नास्ति तन्नाशे तस्माद् बुद्धेस्तु नात्मनः ।
प्रकाशोऽर्कस्य तोयस्य शैत्यमग्नेर्यथोष्णता ॥ २४ ॥
स्वभावैः[5] सच्चिदानन्दनित्यनिर्मलतात्मनः ।
आत्मनः सच्चिदंशश्च बुद्धेर्वृ(द्धि?त्ति)रिति द्वयम् ॥ २५ ॥
संयोज्य चाविवेकेन जानामीति प्रवर्तते ।
आत्मनो विक्रिया नास्ति बुद्धेर्बोधो न जात्विति ॥ २६ ॥
जीवः[6] सर्वमलं ज्ञात्वा कर्ता द्रष्टेति मुह्यति ।
रज्जुसर्पवदात्मानं ज्ञात्वा जीवो भयं वहेत् ॥ २७ ॥
नाहं जीवः परात्मेति ज्ञातश्चैं निर्भयो भवेत् ।
आत्मावभासयत्येको बुद्ध्यादीनीन्द्रियाणि हि ॥ २८ ॥
दीपो घटादिवत् स्वात्मजातैस्तैर्नावभास्यते ।
स्वबोधे नान्यबोधेच्छा[8] बोधरूपस्य[9] चात्मनः ॥ २९ ॥

१ 'विवेकी चा' क. पाठः । २ 'त्मवि' क. पाठः । ३ 'वत्' क. पाठः । ४ 'सत्या, ख. पाठः । ५ 'वस' क. पाठः । ६ 'जीवं सवमयं ज्ञात्वा ज्ञात्वा द्द' क. पाठः । ७ 'श्रेक्षि' क, पाठः । ८ 'धंश्च' क. पाठः । ९ 'पंस्तथा' क. पाठः ।

न दीपस्य[1] तु दीपेच्छा यथा स्वात्मप्रकाशने ।
निषिध्य निखिलोपाधिं नेति नेतीति वाक्यतः ॥ ३० ॥
विद्यादैक्यं महावाक्यैर्जीवात्मपरमात्मनोः ।
आविद्यकं शरीरादि दृश्यं बुद्बुदवत् क्षणम् ॥ ३१ ॥
एतद्विलक्षणं विद्यादहं ब्रह्मेति निर्मलम् ।
देहा[2]न्मम विभिन्नत्वान्न मे जन्मजरादयः ॥ ३२ ॥
शब्दादिविषयैः सङ्गो निरिन्द्रियतया नच ।
अमनस्त्वान्न मे दुःखरागद्वेषभयादयः ॥ ३३ ॥
अप्राणो ह्यमनाः शुद्ध[3] इत्यादिश्रुतिशासनात् ।
निर्गुणो निष्क्रियो नित्यो निर्विकल्पो निरञ्जनः ॥ ३४ ॥
निर्विकारो निराकारो नित्यमुक्तोऽस्मि निर्मलः ।
नित्यशुद्धविमुक्तैकमखण्डानन्दमद्वयम् ॥ ३५ ॥
सत्यं ज्ञानमयं यत्तत् परं ब्रह्माहमेव तत् ।
एवं निरन्तरं कृत्वा ब्रह्मैवास्मीति वासना ॥
हरत्यविद्याविक्षेपान् रोगानिव रसायनम् ॥ ३६ ॥

शंभुरुवाच

देहाद्भिन्नः कथं ह्यात्मा कीदृशः कुत्र संस्थितः ।
कथं वा ज्ञायते ब्रह्म तन्मे वद जगन्ममि ॥ ३७ ॥

जगन्मय्युवाच

अवच्छिन्न इवाज्ञानात् तन्नाशे सति केवलः ।
स्वयं प्रकाशते ह्यात्मा मेघापायेंऽशुमानिव ॥ ३८ ॥
अज्ञानकलुषं जीवं ज्ञानाभ्यासा[4]द्विनिर्मलम् ।
कृत्वाज्ञानं स्वयं नश्येज्जलं कतकरेणुवत् ॥ ३९ ॥

---

१ 'पतया' क. पाठः। 'स्यान्य' ख. पाठः। २ 'देहात्यत्वान्न' मे जन्मजराकार्श्यलयादयः' ख. पाठः।
३ 'अः' ख. पाठः ) ४ 'राभ्यस्ता, ख. पाठः ।

संसारः स्वप्नतुल्यो हि रागद्वेषादिसंगतः[1] ।
अबोधे[2] सत्यवद्भाति सुबोधे[3]ऽसत्यवद्भवेत् ॥ ४० ॥
तावत् सत्यं जगद्भाति शुक्तिकारजतं यथा ।
यावन्न ज्ञायते ब्रह्म सर्वाधिष्ठानमद्वयम् ॥ ४१ ॥
सच्चिदात्मन्यनुस्यूता नित्ये विष्णौ प्रकल्पिताः ।
व्यक्तयो विविधाः सर्वा हाटके कटकादिवत् ॥ ४२ ॥
यथाकाशो हृषीकेशो नानोपाधिगतो विभुः ।
तद्भेदाद्भिन्नवद्भाति तन्नाशे त्वेकवद्भवेत्[4] ॥ ४३ ॥
नानोपाधिवशादेव जातिवर्णाश्रमादयः ।
आत्मन्यारोपितास्तोये रसवर्णविभेदवत्[5] ॥ ४४ ॥
पञ्चीकृतमहाभूतसंभवं कर्मसंचितम् ।
शरीरं सुखदुःखानां भोगायतनमुच्यते ॥ ४५ ॥
पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम् ।
अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम् ॥ ४६ ॥
अनाद्यविद्यानिर्वाच्या कारणोपाधिरुच्यते ।
उपाधित्रितयादन्यदात्मानमवधारयँ[6] ॥ ४७ ॥
सर्वभूतस्थमात्मानमहमेव तथात्मनि ।
सर्वभूतानि संचिन्त्य चिन्तयस्वैकमेव हि ॥ ४८ ॥
उत्पत्तिप्रलयाभ्यां च न सदिदं निशामय ।
मनः करोति पापानि मनः पापेन लिप्यते ।
मनस्युन्मननीभूते न धर्मो नच पातकम् ॥ ४९ ॥

इति श्रीगन्धर्वतन्त्रे पार्वतीश्वरसंवादे शिवस्य
देवीकृतज्ञानोपदेशवर्णनं नामोनचत्वारिंशः पटलः ॥ ३९ ॥

---

१ 'संकुलः' ख. पाठः । २ 'स्वकाले' ख. पाठः । ३ 'प्र' ख. पाठः । ४ 'सति केवलः' ख. पाठः ।
५ 'र्णादि' ख. पाठः । ६ 'मा' ख. पाठः । ७ 'येत्' ख. पाठः ।

# चत्वारिंशः पटलः ।



शंभुरुवाच

कथ्यतां देवदेवेशि व्यक्तीभूतावुभौ कथम् ।
शिवशक्तिमयं ज्ञानं कथं वा जायते तथा ॥ १ ॥

जगन्मय्युवाच

पुंभावः शिव ई[1]त्याहुः स्त्रीभावः प्रकृतिः परा ।
शिवो ज्ञानमयो देहे शक्तिर्बुद्धिमयी परा ॥ २ ॥
शुक्रं शिवो महामेदः शक्तिः कुण्डलिनी त्विति ।
लिङ्गं शिवे[2]स्तथा शक्तिर्योनिर्जगति दृश्यते ॥ ३ ॥
इत्येवं त्रिपुरा शक्तिरित्येवं त्रिपुरः शिवः ।
नानयोर्विद्यते भेदो या शक्तिः स शिवो ध्रुवम् ॥ ४ ॥
न शिवेन विना शक्तिर्न शक्ति[3]रहितः शिवः ।
न तद्भूतस्तयोर्भेदश्चन्द्रचन्द्रिकयोरिव ॥ ५ ॥
एवं तौ सर्वभूतेषु द्विधाभूतौ व्यवस्थितौ ।
तस्मान्नास्ति तयोर्भिन्नं जगदेतच्चराचरम् ॥ ६ ॥
पिता माता सुतश्चेति भावोऽयं त्रिविधो (मु ? मृ)षा ।
स्वौंविद्यासुदृढाभ्यासाद् दृढीभूतो हृदि स्थितः ॥ ७ ॥

---

१ 'मि' क. पाठः । २ 'वं' क. पाठः । ३ 'क्त्यावा' क. पाठः । 'स्व' क. पाठः ।

गुरुवाक्येन तं विद्याद् दृढाभ्यासेन मानवः ।
जीवन्मुक्तः सर्वभूतमयो भवति वै ध्रुवम् ॥ ८ ॥
शरीरं त्रिविधाङ्गं मे कथ्यते शृणु सादरम् ।
ब्रह्मैवाहं नचान्योऽस्मि शरीरमेतदेव हि ॥ ९ ॥
चैतन्यं सर्वभूतानां शब्दब्रह्मस्वरूपकम् ।
वर्णरूपेण तद्व्यक्तं मन्त्रविद्यादिभेदतः ॥ १० ॥
कुङ्कुमागुरुकस्तूर्या रोचनाचन्दनेन्दुभिः ।
प्रकाश्य तव पीठे तु शक्त्यन्तःस्थं यथा भवेत् ॥ ११ ॥
तत्र पूजा सदा कार्या तत्तद्धर्मविधानतः ।
सर्वेषामेव देवानां मन्त्रमाद्यं शरीरकम् ॥ १२ ॥
पूजयेत्तद् गुरु[1]र्मन्त्रदेवतात्मस्वरूपतः ।
द्वितीयं कथ्यते देव यत्पुनर्ध्यानगोचरम् ॥ १३ ॥
कृत्वा रत्नमयं रूपं शुद्धकाञ्चननिर्मितम् ।
प्रत्यहं पूजयेद्देवममुत्र मासि मासि च ॥ १४ ॥
वार्षिकं त्वथ वा कुर्यान्महोत्सवमनुत्तमम् ।
विमुखो दम्भमाश्रित्य द्रव्यनाशे[2]वशादुत ॥ १५ ॥
महोत्सवविधौ यो मे (स्व ? स) स्याद्भग्नमनोरथः ।
विमुखास्तस्य दुर्बुद्धेः पितरः सा[3]मरा गणाः ॥ १६ ॥
तस्मात्परदिने[4] प्राप्ते बोधयित्वा विधानतः ।
प्रत्यहं पूजयेद्भक्त्या पू[5]र्णं तस्या महोत्सवम् ॥ १७ ॥
तृतीयं कथ्यते यन्त्रं रा[6]त्नं वा हेमनिर्मितम् ।
मदात्मरूपमात्रं तु विदित्वा सद्गुरोर्बुधः ॥ १८ ॥

१ 'गुर्मन्त्री' क. पाठः । २ 'दोषो नाश्य' क. पाठः । ३ 'समरां' क. पाठः । ४ 'त्रं' ख. पाठः ।
५ 'पूर्णान्तं स्यान्म' क. पाठः । ६ 'र' ख. पाठः ।

पूजयेद्गन्धपुष्पाद्यैर्मदात्मा मदभेदतः ।
चन्दनागुरुकस्तूर्या रोचनाचन्द्रकुङ्कुमैः ॥ १९ ॥
कुलपुष्पैश्च संलिख्य त्वदुक्तविधिना यजेत् ।
वाराहस्कन्धजैदर्भैरनुलेपं विघर्षयेत् ॥ २० ॥
वाराहदेहजैर्दर्भैः कुर्यान्मलविघर्षणम् ।
प्रीतिर्मे जायते तत्र पूर्णा द्वादशवार्षिकी ॥ २१ ॥
सुगन्धिस्पर्शसुखदैः कुसुमैररुणैरपि ।
अशून्यं सर्वदा कुर्याच्छून्ये विघ्नाद्यनेकशः ॥ २२ ॥
अत्यन्तसुखदैर्वस्त्रैराच्छाद्य भवनान्तरे ।
त्वल्लिङ्गेनातिशुद्धेन शुक्लेन चित्तहारिणा ॥ २३ ॥
स्थापयेत्पूजयेत्सार्धं यतो नाहं त्वया विना ।
नैव त्वमपि हे देव प्रभुर्देवो मया विना ॥ २४ ॥
तस्मादावां सदैवात्र स्थापयेत्सिद्धिमिच्छुकः ।
विद्रुममौक्तिकाभ्यां वा यो जपेन्मन्त्रमुत्तमम् ॥ २५ ॥
समयाचारयोगेन त्वयोक्तेनैव शंकर ।
पूजां यः कुरुते नित्यं भक्तिश्रद्धासमन्वितः ॥ २६ ॥
चतुर्धा कालरूपैश्च हस्तैरालिङ्ग्य तं शिवम् ।
मामक्या कलया युक्तं करोमि पुरनायकम् ॥ २७ ॥
तुरीयं मे परं रूपं गुप्तं यज्जगतीतले ।
तत्र पूजा सदा कार्या कुलयागविधानतः ॥ २८ ॥
सर्वापायेषु सर्वत्र कौलो धर्मः परो महान् ।
सुगमा निगमाः सर्वे कौलो धर्मस्तु दुर्गमः ॥ २९ ॥

---

१ 'स्वा' क. पाठः ।

निसर्गदुर्गमः कौलः सुगम इव भात्यसौ ।
ब्रह्मविष्णुशिवादीनां प्रभवो[1] यत्र कीर्तितः[2] ॥ ३० ॥
तद्रूपं मे परं धाम ब्रह्मणो व्यक्तजन्मनः ।
सद्गुरोः कृपया लब्धा[3] तत्र पूजा महोदया ॥ ३१ ॥
ब्रह्मप्रकाशकं तत्तु तन्निष्ठं ब्रह्म चोच्यते ।
स्वयं प्रकाशते ब्रह्म यस्य दर्शनतः शिवः ॥ ३२ ॥
स्पर्शनात्पूजयेद्[4]यस्य ब्रह्मण्येव निमज्जति ।
आनन्दाब्धौ निमज्ज्येव भवाब्धिं स न पश्यति ॥ ३३ ॥
कौलो धर्मस्त्वया प्रोक्तस्तमासाद्य कुलं यजेत् ।
मद्रूपा परमा शक्तिर्लिङ्गरूपी भवान् प्रभुः ॥ ३४ ॥
शुक्रं शिवो रजः शक्तिरिति जानीहि शंकर ।
त्वया मया जगदिदं परिपूर्णं महेश्वर ॥ ३५ ॥
एकैवाहं परं ब्रह्म शिवशक्तीति भेदतः ।
संप्रभिन्नं जगदिदं भ्रम एवात्र कारणम् ॥ ३६ ॥
त्वमहं चेति यत्प्रोक्तं तदविद्या(भ्र ? भ्र)मो महान् ।
तत्त्वमसि स एवाहं न त्वं नाहं तदेव यत् ॥ ३७ ॥
आवयोर्नहि भेदोऽस्ति युक्त्या बुध्यस्व शंकर ।
मदन्तस्त्वयि संलीने त्वं[5]मेवाहं भवान् प्रभुः ॥ ३८ ॥
आवयोः सरलाकारमभून्मिलितयोः शिव ।
तन्महामोक्षमाप्नोति भोगेनैव महेश्वर ॥ ४९ ॥
कल्पकोटिसहस्राणि कल्पकोटिशतानि च ।
पूजनान्नहि मे प्रीतिर्यदिहान्यप्रकारतः ॥ ४० ॥

१ 'वं' क. पाठः । २ 'तम्' क. पाठः । ३ 'ब्ध्वा' क. पाठः । ४ 'ना' ख पाठः ।
५ 'त्वा' क. पाठः ।

मांसभारैर्न मे प्रीतिर्न तथा मद्यसागरैः ।
यथा मे जायते प्रीतिर्भगलिङ्गामृतैः शिव ॥ ४१ ॥
अहमेव महादेव स्त्रियः सर्वा जगत्स्विह ।
इति मत्वा भजन्ते मां बुधा भावसमन्विता[1]ः ॥ ४२ ॥
ये देवा मद्गतप्राणा मद्वासा मद्विभूषणाः ।
स्वधर्मानपरित्यज्य मामेव शरणं गताः ॥ ४३ ॥
ते पुनर्भोगिनो मुक्ता जीवन्तो[2]ऽपि महीतले ।
मदङ्गस्पर्शमात्रेण चात्मानं ज्ञातुमर्हसि ॥ ४४ ॥
मयि प्रविश विश्वेश मां भजस्व सनातनीम् ।
जहि शङ्कां महादेव त्वमात्मानं न विस्मर ॥ ४५ ॥
विष्णुः पिबत्यसौ वामं ब्रह्मा मे दक्षिणं स्तनम् ।
त्वं पिबस्व महादेव ममाधर(श्रु ? स्तु)तामृतम् ॥ ४६ ॥
स्त्रियं गच्छन् स्पृशन्पश्यंस्ताभिरेव विहारवान् ।
ध्यानं पूजां जपं चैव कुर्यान्मे साधकोत्तमः ॥ ४७ ॥
शक्त्यायुक्तः सदा मन्त्री न तया रहितो भवेत् ।
तया विरहितो देवः सर्वकर्मसु न क्षमः ॥ ४८ ॥
पतिहीना यथा नारी सर्वकर्मविवर्जिता ।
शक्तिहीनस्तथा मन्त्री तस्माच्छक्तियुतो भव ॥ ४९ ॥
एका चेद्वशगा साध्वी तस्याः कृ[3]ष्टिर्भवाय च ।
दुष्टभार्या (कुला ? करा) कृष्टिर्विनाशायैव केवलम् ॥ ५० ॥
कुलभे[4]दी नदीतीरे कोषागारं यथा शिव ।
भगलिङ्गसमायोगाद्यदानन्दः प्रजायते ॥ ५१ ॥

१ 'तः' क. पाठः । २ 'वतो' क. पाठः । ३ 'स्याकृ' क. पाठः । ४ 'दि' क. पाठः ।

ब्रह्मैव तद्विजानीयादनन्तं मोक्षसाधनम् ।
गुरुपूजा कराकृष्टिर्विघ्नोत्सारणकर्मकृत् ॥ ५२ ॥
रहस्याख्यानकं कर्णे ह्यासनं गण्डचुम्बनम् ।
भूतशुद्धिः परीरम्भः संतोषेन्द्रियनिग्रहः ॥ ५३ ॥
प्राणायामः स्तनाकृष्टिर्न्यासमत्र समीरितम् ।
नखदन्तक्षतादीनि धूपदीपप्रदापनम् ॥ ५४ ॥
चाटुकानि रतान्ते च सुपुष्पाण्यङ्गसंगमम् ।
दर्शनं स्पर्शनं योनेर्विकाराल्लिङ्गघर्षणम् ॥ ५५ ॥
अधरामृतपानं च स्वयमावेशनं तथा ।
विक्षेपोत्क्षेपणं चैव पतनोत्पतनं तथा ॥ ५६ ॥
तर्पणाद्युपचारं तु मथनं हवनं तथा ।
सीत्कारो मन्त्रजपनं ब्रह्मार्पणैकचित्तता ॥ ५७ ॥
कूजनं गायनं स्तोत्रं[1] रेतःपातो विसर्जनम् ।
इत्थमेव महादेव पूजनं मे समीरितम् ॥ ५८ ॥
एकस्या[2] बहुरूपिण्याः[3] प्रत्यहं यः समाचरेत् ।
जीवन्मुक्तः स्वयं देवोऽप्यसाध्यमपि साधयेत् ॥ ५९ ॥
भोगैश्च मधुपर्काद्यैर्वामाभावे स्थितो यजेत् ।
श्रुतिस्मृत्युदितं कर्म त्यजन् वाथ समाश्रयन् ॥ ६० ॥
तत्तत्कर्मपरित्यागाद् (ध्यानं ? हीनं) जातिषु जायते ।
ततो बहु सुखं भुक्त्वा परेषां च सुदुर्लभम् ॥ ६१ ॥
विद्याभ्याससप्रसादेन भोगेन मोक्षमाप्नुयात् ।
एवं बहुविधान् भोगी भोगान्वै सुमनोहरान् ॥ ६२ ॥

---

१ 'स्तुत्यं' ख. पाठः । २ 'काया' क. पाठः । ३ 'ण्यः' क. पाठः ।

समासाद्य च तांस्तांस्तु वैराग्ये वनमाविशेत्[1] ।
असारांश्च तथा सारान्निःसारांश्च तथा परान् ॥ ६३ ॥
नानाविधैर्विवेकाद्यैर्विविच्य साधकस्तथा ।
सारभूते परे तत्त्वे मन आधाय योगवित् ॥ ६४ ॥
निःसारमसदाद्यन्तं जगदेतच्चराचरम् ।
सत्यं किमपि तत्रैव वस्तु साक्षान्निरक्षरम् ॥ ६५ ॥
तदानन्दमयं ब्रह्म विदित्वात्मनि साधकः ।
एकान्तविजने रम्ये मृदु[2]कोमल आसने ॥ ६६ ॥
आसीनश्चिन्तयेद्ब्रह्म परमानन्दनिर्भरः ।
ब्रह्मचिन्तापरामोदी[3] भोगेषु विगतस्पृहः ॥ ६७ ॥
एकां भार्यां समादाय योगिनीं सहचारिणीम् ।
असाध्यं साधयेद्योगी योगिन्येव सहायिनी ॥ ६८ ॥
यथा त्वं मयका नाथ पार्वत्या परमेश्वर ।
मोहयित्वा पुनर्देवी शंकरं प्राह पार्वती ॥ ६९ ॥

इति श्रीगन्धर्वतन्त्रे पार्वतीश्वरसंवादे शिवश-
क्तिमयज्ञान–कुलयागवर्णनं नाम चत्वारिंशः पटलः ॥ ४० ॥

---

१ 'न आ' क. पाठः । २ 'दु' ख. पाठः । ३ 'दभो' क. पाठः ।

# एकचत्वारिंशः पटलः ।



अतुलैकरसानन्दं कैवल्यायतनं शिवम् ।
नत्वा शिष्येव सानन्दा तमुवाच परा शिवा ॥ १ ॥

पार्वत्युवाच

प्रसीद परमानन्दमय संशान्तविग्रह[1] ।
यद्यदेव परं तत्त्वं तत्त्वतो विदितं मया ॥ २ ॥
त्वया देव समाख्याताः सर्वे मन्त्राः क्रियाः पराः ।
योगाः समाधयो ज्ञानं तथा चान्ये मदीप्सिताः ॥ ३ ॥
तेषां हि कारणं तत्त्वं यदीश परतः परम् ।
वक्तुमर्हसि तत्त्वेन शांभवं चाप्यनुत्तरम् ॥ ४ ॥
वाच्यस्वरूपठ्यापित्वं ज्ञातुमिच्छामि तत्त्वतः ।
प्रकाशो विमर्शाधीन इति सत्यं यदि प्रभो ॥ ५ ॥
ममाधीनस्त्वमेवासि[2] यथोक्तं वद शंकर ।

शंभुरुवाच

अतिगुह्यतमं सूक्ष्ममवाङ्मनसगोचरम् ॥ ६ ॥
मया यत्नेन गुप्तं तन्न तत्कस्यापि कथ्यते ।
अहमेव त्वमप्यस्मि[3] खलूक्तेति च मे मतिः ॥ ७ ॥

---

१ 'संशक्तिविग्रहः' क. पाठः । २ 'व स्यात्' क. पाठः । ३ 'प्यस्य' क. पाठः ।

त्वमप्येवं स्मरस्यस्मात् त्वयापि विदितं प्रिये ।
सच्चित्संयोगसंसिद्धिस्त्वद्वश्या[1] मम सा यतः ॥ ८ ॥
तदेव चोत्तरं प्राहुः सत्यं सत्यं मयोदितम् ।
तदेव चित्सदाद्यन्तावैक्येन संस्थितं यदा ॥ ९ ॥
तदा शांभवमित्याहुर्मुनयस्तत्त्ववित्तमाः ।
तदेवाहमिदंभावपूर्णानन्दो यदा भवेत् ॥ १० ॥
तदैव शंभुभावः स्यादुक्तमेतत्पदत्रयम् ।
शक्रै[2]स्त्रिशूली सर्गोऽन्तं तैरेवालंकृता यदि ॥ ११ ॥
सैव हि श्रीपरेत्युच्चैर्मुनिभिः परिकीर्तिता ।
प्रकाशानन्दसंदोहकैवल्यमहमा[3]श्रया ॥ १२ ॥
मत्परत्वान्महासिद्ध्यै सा परेति च कथ्यते ।
ये मन्त्राः परमेशानि तेनादावपि संयुताः ॥ १३ ॥
ते जीवन्ति च मन्त्रेभ्यो ह्यन्योन्यमिति मे मतिः ।
सप्तषष्टिप्रकृत्यर्णा जगत्स्रष्ट्यादिकर्तृकाः ॥ १४ ॥
एतेषां जीवभूतत्वादनुत्तरमिदं जगत् ।

पार्वत्युवाच

सकला निष्कलाश्चैव मुक्तिमार्गप्रबोधकाः ॥ १५ ॥
मन्त्रास्तु बहवः सन्ति वद तेषामनुत्तरम् ।

शंभुरुवाच

केषांचिदस्मदुक्तानामेतेऽप्यनर्थदर्णवा (?) ॥ १६ ॥
आवयोर्देवदेवेशि मनूनां कारणं मनोः ।
सर्वेषामेव मन्त्राणां प्राप्यावावां महेश्वरि ॥१७ ॥
आवयोरपि तत्प्राप्यमनुत्तरमिति स्मृतम् ।
अप्येतदक्षरावृत्तेर्गम्यागम्यतया स्थितम् ॥ १८ ॥

---

१ 'द्धिमम वश्या मवसायतः' क. पाठः । २ 'क्रत्रि' क. पाठः । ३ 'दा' क. पाठः ।

अगम्यकारणत्वाच्च गम्यावावांमिति प्रिये ।
इदन्तयाहन्तया वा सर्वेषामन्तरात्मनि ॥ १९ ॥
प्रतीयमानस्त्वर्थो यस्तदेव शिवनिर्णयम् ।
पूर्णाहन्तास्वभावेन कृत्रिमाहन्तया विना ॥ २० ॥
वहिरन्तरिदं विश्वं यः पश्यति स पश्यति ।
अहन्तायां महादेवि त्वमेव प्राणिनां प्रिया ॥ २१ ॥
अज्ञानाम[2]पि चात्मा त्वं[3] सर्वे तेऽनुत्तराप्रियाः ।

पार्वत्युवाच

त्वया पूर्वोपदिष्टं यत्तत्त्वं श्रीमत्परामयम् ॥ २२ ॥
तदेव निर्वाणपदमिति प्रोक्तं तया मया ।
इदानीमतिगुह्यानां तदेवाद्य[4]मनुत्तरम् ॥ २३ ॥
प्रशंससे परानन्दविमर्शाविष्टविग्रह ।
एतस्मिन्नेव कैवल्ये चेतःश्लेषो[5] न मे विभो ॥ २४ ॥

शंभुरुवाच

सत्यमेव त्वयाख्यातमुभयं तव सुन्दरि ।
परया त्वपि तत्प्राप्यं पूर्वोदितमनुत्तमम् ॥ २५ ॥
यत् संमतं तथाप्येतत् तयोरप्यन्तरं महत् ।
परा तु सप्तविंशत्या अन्तर्बाह्यक्रियागुणैः ॥ २६ ॥
पूज्या चास्मत्कलांशेति केषांचिद्योगिनीमतम् ।
मानरूपक्रियोपाधिविहीनत्वान्महेश्वरि ॥ २७ ॥
पराया अपि तत्प्राप्यं पूर्वोदितमनुत्तरम् ।

पार्वत्युवाच

अस्य माहात्म्यमेवोक्तं त्वया मे बहुधा विभो ॥ २८ ॥

---

'वां प्रति' क. पाठः । २ 'द्' क. पाठः । ३ 'त्मानं' क. पाठः । ४ 'द्या' क. पाठः । ५ 'षं' क. पाठः ।

उपायेनामुना पश्ये[1] यदुक्तं नैव जातुचित् ।
यदिष्टं सर्वमाख्यातं यदप्युक्तमनुत्तरम् ॥ १६ ॥
नैव शक्नोमि निर्णेतुं तत्त्वतः कथयस्व मे ।

शंभुरुवाच

अत्यन्ताभावतो भेदादावयोः परमार्थतः ॥ ३० ॥
इदमीदृशमित्युक्तं पुरेवाहमुपा[2]धितः ।
संप्राप्ता स्वरदेवता नैव कार्या विचारणा ॥ ३१ ॥
यद्यन्यभावस्थैर्येण प्राप्तव्यं गुणकार्यतः ।
तर्हि भूयोऽपि वक्ष्यामि मयोक्तार्थस्य निर्णयम् ॥ ३२ ॥
मनोवाग्विषयातीतं पूर्वोक्तं यदनुत्तरम् ।
तत्त्रिधा भेदमायाति बिन्दुनादाख्यबीजतः ॥ ३३ ॥
तान्येव सच्चिदानन्दभेदेन वै[3]भवानि तु ।
मत्स्वरूपो हि यो[4] बिन्दुस्तस्मान्नादस्तु भामि[5]नि ॥ ३४ ॥
द्वयोः समर[6]सीभावादुक्तं बीजाख्यमावयोः ।
ऐक्यज्ञानपथे चैनां देवि शांभववाचके ॥ ३५ ॥
वर्णक्रमेण संभाव्य कुर्यान्मि[7]थुनभावनाम् ।
एवं क्रमे महेशानि तामनुत्तरतां व्रजेत् ॥ ३६ ॥
वह्निवत् काष्ठसंबद्धे समुन्नद्धोऽवनिं तरे[8]त् ।
[9]व्यञ्जने मथनोद्भूते तां तु शक्तिपदात्मिकाम् ॥ ६७ ॥
व्रतहोमेन संभाव्यं[10] स्वभावं स्वयमाचरेत् ।
प्रकाशान्त[11]र्विमर्शान्तस्तस्मादेवाप्रकाशकम् ॥ ३८ ॥

---

१ 'श्ये द्युक्तं नैव तु' क पाठः । २ 'दितम्' क. पाठः । ३ 'वि' क. पाठः । ४ 'यद्' क पाठः ।
५ 'विनि क. पाठः । ६ 'साभावः सुखं बीजा' क पाठः । ७ 'मथ' क पाठः । ८ 'रं' क. पाठः ।
९ 'व्राजने' क. पाठः । १० 'व्ये' क. पाठः । ११ 'न्त' क. पाठः ।

उत्तरोत्तरमेकैकं नयामि तत् क्रमोत्क्रमात् ।
संकोचः सविकासश्च स्वरूपौ सूर्यसंगतौ ॥ ३९ ॥
तत्तु यागतया स्यातां प्रकाशानन्दमन्दिरौ ।
सच्चिन्मयौ क्रियासारात्रधूतात्मक्रियापरौ ॥ ४० ॥
एतयोरावयोर्यत्तत्कारणं स्यादनुत्तरम् ।
हृदयानलभार्यान्तं[1] शिवदण्डीविलं फलम्[2] ॥ ४१ ॥
अन्तः प्रतीयमानं तदमेयं सर्वतोमुखम् ।
आदिमध्यान्तनिर्मुक्तं निस्तरङ्गाब्धिसंनिभम् ॥ ४२ ॥
सन्मात्रं चैव चिन्मात्रं तयोरैक्यरसावृतम् ।
तमःप्रकाशहीनं यदणोर्बहुतरं परम् ॥ ४३ ॥
महतां च महत्त्वाच्च ब्रह्मसंज्ञमनुत्तरम् ।
तदेवावहितेन त्वं स्वान्तेन परिभावय ॥ ४४ ॥
अनेन भाववानाशु मन्त्रस्तन्मयतां व्रजेत् ।
यदा तन्मयसिद्ध्यादि विश्वं त्वयि विभावयेत् ॥ ४५ ॥
तेन विश्रान्तभावेन तदैक्या[3]नन्दमाप्स्यति[4] ।
आकाशे निर्मले यद्यत्[5]सहसा घनसंकुलम् ॥ ४६ ॥
उत्पत्य लीयते तद्वज्जगदात्मन्यनुत्तरे ।
इत्येवं प्रत्यभिज्ञानसिद्धिः स्यात्तव सुव्रते ॥ ४७ ॥
स्वसंवेद्यं सुखं पश्चान्नैव शक्नोमि वेदितुम् ।
परा त्वं परमर्द्धिः स्यान्नत्वस्य विहितं यतः ॥ ४८ ॥
इतः परं न जानामि त्वयाहं बहुधा शपे ।
एतच्छ्रुत्वा महादेव्या ह्येतदर्थविमर्शनम्[6] ॥ ४९ ॥

---

१ 'नभार्यान्तां' क. पाठः । २ 'लम्बितम्' ख. पाठः । ३ 'दैका' क. पाठः । ४ 'थ' क. पाठः ।
५ 'द्व' ख. पाठः । ६ 'र्षणम्' क. पाठः ।

प्रकाशितं तदेवाशु विस्मयाविष्टचेतसा ।
महदाश्चर्यमेतन्मे संपूर्णोऽयं यदास्थितः ॥ ५० ॥
इति संचिन्त्य देवस्य पादमाश्लिष्य सुन्दरी ।
त(व?दा)चान्योन्यमथनात्सान्द्रानन्दाभिनन्दिता ॥ ५१ ॥
यत्प्रकाशात्मकं सर्वं तत्त्वं केवलतां गतम् ।
विमर्शो[1]व नि[2]संप्राप्तमित्येषा तात्त्विकी स्थितिः ॥ ५२ ॥
अवधानैकभावानां मतिः सा साक्षिरूपिणी ।
तत्प्रमाणैः वराकैः[3] किं तैश्चिदेवाप्रमाणका ॥ ५३ ॥
नहि वैकर्तनं ज्योतिर्दीपालोकमपेक्षते ।
आदर्शे विमलाभोगे यथा सर्वं प्रकाशते ॥ ५४ ॥
इत्थं चिदात्मकं विश्वं षट्त्रिंशत्तत्त्वभेदनम् ।
आदौ शुद्धात्मकं तत्त्वं पञ्चधा तमसः परम् ॥ ५५ ॥
शिवः शक्तिश्च सादाख्य ईशो विद्येति भिद्यते ।
हक्षादिशान्तवर्णात्मा निरमायि यदा शिवे ॥ ५६ ॥
कलाविद्या रागकालौ नियतिर्वर्म[4] उच्यते ।
मायापूर्वो वकारादियकारान्ताक्षरात्मकम् ॥ ५७ ॥
प्र[5]धानं पुंमनो बुद्धिरहंकृ[6]न्मादिपञ्चकम् ।
श्रोत्रादिपञ्चकं ता[7]दि टादि वागादिपञ्चकम् ॥ ५८ ॥
तन्मात्रपञ्चकं चा[8]दि भूम्यादि कादिपञ्चकम् ।
सिसृक्षोः प्रथमः स्पन्दः शिवतत्त्वं प्रभोः स्मृतम् ॥ ५९ ॥
इच्छैवास्यां[9]परिम्लाना शक्तितत्त्वं[10]मुदङ्कुशम् ।
स्वेच्छया सूचितं विश्वमाच्छाद्याहन्[11]तया स्थितः ॥ ६० ॥

---

१ 'मृश्या' ख. पाठः । २ 'पंमवर्निं षा' क. पाठः । ३ 'कैस्तैश्चिदेवा⋯प्रमाणकः' क. पाठः ।
४ 'वंन्ध' ख. पाठः । ५ 'प्रमाणं च मनो' क. पाठः । ६ 'हंहृ' क. पाठः ।
७ 'लादिवादि' क. पाठः । ८ 'मादि⋯यादि' क. पाठः । ९ 'स्य' क पाठः ।
१० 'त्वं मद' क पाठः । ११ 'त्व' क पाठः । १२ 'श्वं मद' क. पाठः ।

स एव तत्त्वं सादाख्यं सर्वानुग्रहणोन्मुखम् ।
स एवैश्वरतत्त्वं स्यात् पश्यन् विश्व[1]मिदन्तया ॥ ६१ ॥
अहन्तेदन्तयोरैक्यं[2] सा विद्येति निगद्यते ।
स्वाङ्गभूतेषु भावेषु मायातत्त्वं विभेदधीः[3] ॥ ६२ ॥
मायागृहीतसंकोचः शिवः पुंस्तत्त्वमुच्यते ।
अयमेव हि संसारी जीवो भोक्तेति दृश्यते ॥ ६३ ॥
ज्ञत्व[4]कर्तृत्वपूर्णत्वनित्यत्वाद्याश्च शक्तयः ।
तत्संकोचात्[5]संकुचिताः कलाविद्यादिर्ना[6] स्थिताः ॥ ६४ ॥
मायात्मनः कला नाम किंचित्कर्तृत्वलक्षणम् ।
विद्या किंचिज्ज्ञताहेतू रागोऽभिष्वङ्ग[7]कारणम् ॥ ६५ ॥
कालः परिच्छेदको वा नियतिश्चेदमेव मे ।
कर्तव्यं नान्यदित्येषा व्यवस्थायन्त्रणाकृतिः ॥ ६६ ॥
प्रकृतिर्गुणसाम्यं स्यादहंकारादिजन्मभूः ।
अहं[8]ममेदमित्येतद्बुद्धिहेतुरहंकृतिः ॥ ६७ ॥
बुद्धिरध्यवसायस्य कारणं निश्चयात्मनः[9] ।
संकल्पस्य विकल्पस्य बीजं मन उदीर्यते ॥ ६८ ॥
वचनादेश्च शब्दादेर्वागादि श्रवणादिकम् ।
करणं श्रवणादीनां ग्राह्यं तन्मात्रपञ्चकम् ॥ ६९ ॥
आकाशाद्यवकाशा[10]दिकारणं भूतपञ्चकम् ।
परापराशक्तिमये शुद्धे विद्यादिपञ्चकम् ॥ ७० ॥

---

१ 'हंभेदं' क. पाठाः । २ 'क्यम' क. पाठः । ३ 'त्वविभेदिर्नो' क. पाठः ।
४ 'ज्ञता' क. पाठः । ५ 'च्छु' क. पाठः । ६ 'द्यात्मनया स्थिता' क. पाठः ।
७ 'भियोग' क. पाठः । ८ 'अहिंसा मदमि' क. पाठः । ९ 'नियतात्मनः' क. पाठः ।
१० 'द्यवसानादि' क. पाठः ।

तदन्यदपराशक्तिर्विद्या[1]तत्त्वमुदीरितम् ।
अथ[2] देवी पराशक्तिः शुद्धाशुद्धाध्व[3]रूपिणी ॥ ७१ ॥
पृथिव्यादीनि तत्त्वानि य[4]दा लीनानि कारणे ।
तदा कारणमात्राणि शक्तिरुद्ग[5]मते बहिः ॥ ७२ ॥
अनुत्तरेच्छे उन्मेष आनन्देशनमूनता ।
क्रियेच्छाज्ञानशक्तीनां स्वराणां मूलता च षट् ॥ ७३ ॥
इच्छेशनां ततो रूढा स्फुटास्फुटजगन्मयी ।
चत्वारः ष[6]ण्डवर्णाः स्युः शुद्धात्मानः प्रचोदिताः ॥ ७४ ॥
अनुत्तरानन्दशक्ती इच्छाशक्तौ नियोजिते ।
त्रिकोणमथ षट्कोणमिच्छायां रूढिमागते ॥ ७५ ॥
अनुत्तरानन्दशक्ती त्रिकोणद्वययोगतः ।
तथैवोन्मेषयोगेन क्रियाशक्तेः स्फुटं वपुः ॥ ७६ ॥
उक्तत्रिशक्तिसंघट्टात् त्रिशूलं द्वैतघस्मरम् ।
परस्पराविरोधेन कार्येषु प्रविरोहति ॥ ७७ ॥
न कथंचिदुपाधेयमासां रूपमिदं भवेत् ।
बिन्दुर्वेद्यस्य संस्कारो विमर्श[7]ः सर्ग इत्यसौ ॥ ७८ ॥
कलाषोडशकाकारा शक्ति[8]र्बीजायते परा ।
तिथयः प्रतिपत्पूर्वाः पञ्चदश्यन्तिमा यथा ॥ ७९ ॥
सूर्याचन्द्रमसौ स्वान्तश्चरन्तौ स्थितिहेतवे ।
तथा विमर्शवपुषः सर्गस्याद्याः कलाः स्मृताः ॥ ८० ॥
द्विधेयं मातृका देवी बीजयोन्यात्मना स्थिता ।
नित्यप्रवृ[9]त्तशृङ्गाटवपुर्विश्वस्य जन्मभूः ॥ ८१ ॥

---

१ 'रिति' ख. पाठः । २ 'इयं' ख पाठः । ३ 'द्धंहारिणी' क. पाठः । 'गर्भिणी' ख. पाठः ।
४ 'स' क. पाठः । ५ 'द्र' क. पाठः । ६ 'परतो वर्णाः षण्डा' ख. पाठः ।
७ 'पः' क. पाठः । ८ 'क्तेः' क पाठः । ९ 'भुर्दीसवपुर्विश्वस्य चैव' क. पाठः ।

हृदयं बीजमेतस्याः संविदो[1] यत्परं महः ।
वटबीजे यथा वृक्षस्तद्वत् संनिहितं जगत् ॥ ८२ ॥
विचार्यमाणो यो नैव कारणादतिरिच्यते ।
मृदादेः कलशादीनां तत्त्वं नान्यन्निरूपणे ॥ ८३ ॥
इत्याहुस्तत्त्ववादिभ्यः श्रुतीनामन्तिमा गिरः ।
इदं सर्वं सदेवासीद[2]ग्र इति विनिश्चयात् ॥ ८४ ॥
सत्तावाचिनि बीजेऽस्मिन् क्षमादिमायान्तिमं जगत् ।
विलुप्तप्रत्ययाकारमेतत् स परिशिष्यते ॥ ८५ ॥
ततो ज्ञानक्रियासारा विद्येश्वरसदाशिवाः ।
शक्तौ[3] त्रिशूले लीयन्ते चतुर्दशकलात्मनि ॥ ८६ ॥
ऊर्ध्वाधः[4] सृष्टिवपुषि सर्वं लीनमतः परम् ।
इत्थं परस्यां संवित्तौ सा विसर्गचितिः क्रमात् ॥ ८७ ॥
अथ वाङ्मनसातीते यत्र क्वापि निरञ्जने ।
षट्त्रिंशत्तत्त्वलहरीकै[5]लहातीतगोचरे ॥ ८८ ॥
विश्वात्मनि महामन्त्रे स्वभावे सा विलीयते ।
कुतश्चिन्मथिते धाम्नि दीप्ते केनापि हेतुना ॥ ८९ ॥
सर्वं हविरिदं जुह्वन्न दारिद्र्येण पीड्यते ।
पञ्चपञ्चात्मकं देवि पञ्चस्पन्दविजृम्भितम् ॥ ९० ॥
संकोचयन् परामर्शी सामान्यस्पन्दकेवलम् ।
अहमि प्रलयं कुर्वन्निदमः प्र[6]तियोगिनः ।
पराक्रमपरो भुङ्क्ते स्वभावमशिवापहम् ॥ ९१ ॥

इति श्रीगन्धर्वतन्त्रे पार्वतीश्वरसंवादेऽनुत्तरज्ञानप्र-
क्रियानिरूपणं नामैकचत्वारिंशः पटलः ॥ ४१ ॥

---

१ 'वेद' क पाठः । २ 'वाह नासीत्' क. 'वान्यन्नासीत्' ख. पाठः । ३ 'शक्तित्रिशूलिनि' क. 'लिन्याम' ख. पाठः । ४ 'सर्वसंकुचितं' क. पाठः । ५ 'फल' क. पाठः । ६ 'दमप्र' क. पाठः ।

# द्विचत्वारिंशः पटलः ।

—:-=❀०❀=-:—

श्रीपार्वत्युवाच

कथमुत्पद्यते वाणी कथं वा सा विलीयते ।
वाचो विनिर्णयं ब्रूहि पश्चात्तत्त्वमुदीरय ॥ १ ॥

ईश्वर उवाच

अव्यक्तात्प्राण उत्पन्नः प्राणादुत्पद्यते मनः ।
मनस उत्पद्यते वाग्वाङ्मनसि विलीयते ॥ २ ॥

देव्युवाच

आहारं काङ्क्षते कोऽसौ भुङ्क्ते च[1] पिबते च कः ।
जागर्ति सुप्यते[2] कोऽसौ सुप्तः कोऽसौ प्रबुध्यते[3] ॥ ३ ॥

ईश्वर उवाच

आहारं काङ्क्षते प्राणो भुङ्क्ते चैव हुताशनः ।
जागर्ति सुप्यते वायुः सुप्ते तेजः प्रबोधयेत् ॥ ४ ॥

देव्युवाच

को वा करोति पापानि को वा पापेन लिप्यते ।
को वा बद्धो विमुक्तः कः को वा पापैः प्रमुच्यते ॥ ५ ॥

ईश्वर उवाच

मनः करोति पापानि मनः पापेन लिप्यते ।
मनस्युन्मननीभूते न धर्मो नापि पातकः ॥ ६ ॥

---

१ 'चापिबतीश' क. पाठः । २ 'स्वप' क. पाठः । ३ 'द्धते' क. पाठः ।

देव्युवाच

यदिदं शक्क[1]माकाशं देहस्थं देहवर्जितम् ।
तत् स्थितं तु कथं देहे[2] देहिदेहविवर्जितम् ॥ ७ ॥
कथं जीवः स्थितो देहे को वा जीवः प्रकीर्तितः ।
केन पश्यत्यसौ जीवः केन मार्गेण संचरेत् ॥ ८ ॥
सकल[3]स्तु कथं जीवो निष्कलस्तु कथं भवेत् ।
केन जीवत्यसौ जीवः किंवा जीवस्य भोजनम् ॥ ९ ॥
कुतो वा लीयते जीवो जायते कुत एव हि ।
को वा जीवः कथं प्राणः केन जीवः प्रकीर्तितः ॥ १० ॥
एतत्सर्वं यथातत्त्वं तत्त्वं मे ब्रूहि शंकर ।
संसारार्णवमग्ना हि येन मुच्याम्यहं प्रभो ॥ ११ ॥

ईश्वर उवाच

शृणु देवि प्रवक्ष्यामि यत्त्वया समुदाहृतम् ।
कथयामि न संदेहः सारात्सारतरं शुभम् ॥ १२ ॥
वायुस्तेजस्तथाकाशं तृतीयं जीवसंज्ञकम् ।
स जीवः प्राण इत्युक्तो बालाग्र[4]शतकल्पितः ॥ १३ ॥
जीवः शुक्रं च विज्ञेयं यावत् सत्त्वेन संस्थितम् ।
रजसा च समायुक्तो वायुर्जीवः प्रकीर्तितः ॥ १४ ॥
तमसा च समायुक्तस्तदा हृष्टो भवेद् ध्रुवम् ।
सत्त्वेन च समायुक्तो धर्मज्ञानप्रवर्तकः ॥ १५ ॥
रजसा च समायुक्तो भुङ्क्ते च विषयान् प्रभुः ।
तमसा च समायुक्तस्तदा पापेन लिप्यते ॥ १६ ॥
नासाग्रं चैव नाभिं च हृदयं च तृतीयकम् ।
स्थानान्येतानि जीवस्य कल्पितानि शिवेन तु ॥ १७ ॥

---

१ 'शक्ति' क. पाठः । २ 'हं' क. पाठः । ३ 'सफज्ञ' क. पाठः । ४ 'के' क. पाठः ।

हृत्कमलं शिरश्चैव सत्त्वे यावद्व्यवस्थितम् ।
देहसंस्थित इत्युक्तः शिवेन परमात्मना ॥ १८ ॥
यावन्न चलते जीवस्तावन्निश्चलतां गतः ।
नाभिस्थो निष्कलं ज्ञात्वा मुच्यते जन्मबन्धनात् ॥ १९ ॥
नाभिस्थः सर्वकालेषु हृदि तिष्ठति सर्वगः ।
वक्त्रनासापुटान्तःस्थो भुङ्क्ते च विषयान् प्रभुः ॥ २० ॥
जीवः पश्यति देहस्थो जीवते[2] च महेश्वरः ।
भुङ्क्ते भोगं शुभं जीवो देही[3] देहे व्यवस्थितः ॥ २१ ॥
देहं त्यक्त्वा यदा जीवो बहिराकाशमाश्रितः ।
तदात्मविषयो जीवो जायते नात्र संशयः ॥ २२ ॥
तदिदं निष्कलं ब्रह्म ध्यायेदिति सदाशिवम् ।
ध्यात्वा शिवं च सहजं मुच्यते भवबन्धनात् ॥ २३ ॥
सर्वगः सर्वदेहस्थो नासाग्रे च प्रतिष्ठितः ।
प्रत्यक्षः सर्वभूतानां दृश्यते नच लक्ष्यते ॥ २४ ॥
नाभिमध्ये स्थितं जीवं शुद्धतत्त्वं तु निर्मलम् ।
आदित्यमिव दीप्तं तु रश्मिभिर्ज्वलितं शुभम् ॥ २५ ॥
हकारार्धनिभं जीवं जीवो देहे च संस्थितः ।
नाभिरन्ध्रे[4]स्थितं ख्यातं विषयान्प्राप्य संस्थितम् ॥ २६ ॥
तेनेदमखिलं व्याप्तं क्षीरं च सर्पिषा यथा ।
कारणं नात्मनश्चैव प्राणापानैस्तु पञ्चभिः ॥ २७ ॥
श्वासनिःश्वासयोगेन अधऊर्ध्वं प्रवर्तते ।
शुष्कपत्रं तु वातेन नीयते गगनं यथा ॥ २८ ॥

---

१ 'त्यक्त' क. पाठः । २ 'वि' क. पाठः । ३ 'हि' क. पाठः । ४ 'न्ध्रंचिर्तं' क. पाठः ।

तथा भ्रमति जीवाख्यं प्राणापानैस्तु पञ्चभिः ।
चतुष्कलासमायुक्तो भ्राम्यते हृदये स्थितः ॥ २९ ॥
गोलकं[1]स्तु यथा देवि स्वेन दण्डेन ताडितः ।
उत्पत्य पतते[2] शीघ्रमविश्रान्तः पुनः पुनः ॥ ३० ॥

पार्वत्युवाच

यदिदं सकलं ब्रह्म व्योमातीतं निरञ्जनम् ।
निष्कलं निर्मलं शान्तं निष्प्रपञ्चमलक्षणम् ॥ ३१ ॥
अप्रत्यक्षमविज्ञेयं विनाशोत्पत्तिवर्जितम् ।
कैवल्यं केवलं शान्तं शुद्धस्फटिकसंनिभम् ॥ ३२ ॥
करणयोगनिर्मुक्तं हेतुसाधनवर्जितम् ।
तत्क्षणान्मुच्यते येन तज्ज्ञानं ब्रूहि शंकर ॥ ३३ ॥

ईश्वर उवाच

एतदेव महाभागे कुमारो ब्रह्मणः सुतः ।
परिसमेत्य यो[3]गीशं विष्णुं विश्वैककारणम् ॥ ३४ ॥
उवाच परया भक्त्या ब्रह्मविद्यां वद प्रभो ।
ययाचिरात् सर्वपापं व्यपोह्य परात्परं पुरुषं याति विद्वान् ३५

तस्मै स होवाच जगत्प्रभुश्च
श्रद्धाभक्तिध्यानयोगादवेहि ।
न कर्मणा न प्रजया धनेन
त्यागेनैकेनामृतत्वमानशुः ॥ ३६ ॥
परेण नाकं निहितं गुहायां
विभ्राजते यद्यतयो विशन्ति ।
वेदान्तविज्ञानविनिश्चितार्थाः
संन्यासयो[4]गाद् यतयो विशुद्धाः ॥ ३७ ॥

---

१ 'कं' क. पाठः । २ 'ततस्तु पतने' क. पाठः । ३ 'गेयततो' क. पाठः । ४ 'गि' क. पाठः ।

ते ब्रह्मलोकेषु परान्तकाले
परामृतात् परिमुच्यन्ति सर्वे ।
विविक्तदेशे च सुखासनस्थः
शुचिः समग्रीवशिरःशरीरः ॥ ३८ ॥
स्वस्वाश्रमस्थः सकलेन्द्रियाणि
निरुध्य भक्त्या स्वगुरुं प्रणम्य ।
हृत्पुण्डरीके विरुजं विशुद्धं
विचिन्त्य मध्ये विशदं विशोकम् ॥ ३९ ॥
अचिन्त्यमव्यक्तमनन्तरूपं
शिवं शान्तममृतं ब्रह्म योनिम् ।
अथादिमध्यान्तविहीनमेकं
विधिं[1] चिदानन्दमरूपमद्भुतम् ॥ ४० ॥
उमासहायं परमेश्वरं[2] प्रभुं
त्रिलोचनं नीलकण्ठं प्रशान्तम् ।
ध्यात्वा मुनिर्गच्छति भूतयोनिं
समस्तसाक्षिं तमसः परस्तात् ॥ ४१ ॥

स ब्रह्मा शिवः स इन्द्रः सोऽक्षरः परमः स्वराट् ।
स[3] एव विष्णुः स प्राणः स कालोऽग्निः स चन्द्रमाः ॥ ४२ ॥
स[4] एव सर्वं यद्भूतं यच्च भव्यं सनातनम् ।
ज्ञात्वा तं मृत्युमत्येति नान्यः पन्था विमुक्तये ॥ ४३ ॥
सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
संपश्यन् परमं ब्रह्म याति नान्येन हेतुना ॥ ४४ ॥

---

१ 'भुं' क, पाठः । २ 'शं' क. पाठः । ३ 'स विष्णु' ४ 'स स' क. पाठः ।

आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम् ।
ज्ञानिर्मथनाभ्यासात् पापं दहति पण्डितः ॥ ४५ ॥

स एव मायापरिमोहितात्मा
शरीरमास्थाय करोति सर्वम् ।
स्त्रीस्वन्नपानादिविचित्रभोगैः
स एव जाग्रत्परितृप्तिमेति ॥ ४६ ॥

स्वप्ने च जीवः सुखदुःखभोक्ता
स्वमायया कल्पित[2]विश्वलोके ।
सुषुप्तिकाले सकले विलीने
तमोभिभूतः सुखरूपमेति ॥ ४७ ॥

पुनश्च जन्मान्तरकर्मयोगात्
स एव जीवः स्वपिति प्रबुद्धः ।
पुरत्रये क्रीडति यश्च जीव-
स्ततस्तु जातं सकलं विचित्रम् ॥ ४८ ॥

आधारमानन्दमखण्डबोधं
यस्मिंल्लयं याति पुरत्रयं च ।

एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।
खं वायुर्ज्योतिरापश्च पृथिवी विश्वधारिणी ॥ ४९ ॥
यत्पुनर्ब्रह्म सर्वात्मा सर्वस्यायतनं महत् ।
सूक्ष्मात् सूक्ष्मतरं नित्यं तत्त्वमेव त्वमेव तत् ॥ ५० ॥
जाग्रत्स्वप्नसुषुप्त्यादि प्रपञ्चं यत्प्रकाशते ।
तद्ब्रह्माहमिति ज्ञात्वा सर्वबन्धैः प्रमुच्यते ॥ ५१ ॥

---

१ 'ध्या' ख. पाठः । २ 'तो' क. पाठः ।

त्रिषु धामसु यद्भोग्यं भोक्ता भोगश्च यद्भवेत् ।
तेभ्यो विलक्षणः सो[1]ऽहं चिन्मात्रोऽहं सदाशिवः ॥ ५२ ॥
मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम् ।
मयि सर्वं लयं याति तद्ब्रह्माद्वै[2]यमस्म्यहम् ॥ ५३ ॥

अणोरणीयानहमेव तद्व-
न्महानहं विश्वमहं विचित्रम् ।
पुरातनोऽहं पुरुषोऽहमीशो
हिरण्मयोऽहं शिवरूपमस्मि ॥ ५४ ॥
अपाणिपादोऽहमचिन्त्यशक्तिः
पश्याम्यचक्षुः स शृणोम्यकर्णः ।
अहं विजानामि विविक्तरूपो
न चास्ति वेत्ता मम चित्सदाहम् ॥ ५५ ॥
वेदैरनेकैरहमेव वेद्यो
वेदान्तकृद्वेदविदेव चाहम् ।
न पुण्यपापे मम नास्ति नाशो
न जन्म देहेन्द्रियबुद्धिरस्ति ॥ ५६ ॥
न भूमिरापो मम नास्ति वह्नि-
र्न चानिलो मेऽस्ति नचाम्बरं च ।
एवं विदित्वा परमात्मरूपं
गुहाशयं निष्कलमद्वितीयम् ॥ ५७ ॥
समस्तसाक्षिं सदसद्विहीनं
प्रयाति शुद्धं परमात्मरूपम् ॥ ५८ ॥

---

१ 'साक्षी' क. पाठः । २ 'द्वयो' क. पाठः ।

य एतत्तन्त्रं समधीते सोऽग्निपूतो भवति सुरापानात्पूतो भवति कृत्याकृत्यात्पूतो भवत्यगम्यगमनात्पूतो भवति ॥

इति श्रीगन्धर्वतन्त्रे पार्वतीश्वरसंवादे तत्त्वज्ञानोपदेशनं नाम द्वाचत्वारिंशः पटलः ॥ ४२ ॥

समाप्तमिदं श्रीशिवार्पणं भूयात् ॥

